# आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३५

श्रीनिःशङ्कशार्ङ्गदेवप्रणीतः

# संगीतरत्नाकरः

चतुरकल्लिनाथविरचितकलानिध्याख्यटीकासंवलितः ।

( स्वरप्रस्तारादिपरिशिष्टसनाथीकृतश्च )

तस्य षष्ठाध्यायमारभ्य सप्तमान्तो द्वितीयो विभागः ।

एतत्पुस्तकं

"मङ्गेश रामकृष्ण तेलङ्ग" इत्येतैः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८१९

खिस्ताब्दाः १८९७



मूल्यं सपादरूपकपञ्चकम् ।

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीनिःशङ्कशार्ङ्गदेवप्रणीतः

# संगीतरत्नाकरः

चतुरकल्लिनाथविरचितकलानिध्याख्यटीकासंवलितः ।

( तस्यायं षष्ठाध्यायमारभ्य सप्तमान्तो द्वितीयो विभागः )

## अथ षष्ठो वाद्याध्यायः ।

अथ गीतोपयोगित्वेन तदनन्तरोद्दिष्टस्य वाद्यस्य प्रकरणमारभमाणस्तदादौ समुचितेष्टदेवतां स्मृत्वा स्तौति—

**ततं येनावनद्धं च भुवनं निजमायया ॥**
**आनन्दघनमध्येमि तं ब्रह्मसुषिरे हरम् ॥ १ ॥**

**ततं येनेत्यादिना श्लोकेन** । येन परमेश्वरेण कर्त्रा निजमायया करणभूतया भुवनं ततं विस्तारितमवनद्धं च बद्धं च । आनन्दघनं निरतिशयानन्दस्वरूपम् । तं हरं ब्रह्मसुषिरे । हृत्पङ्कजस्य ब्रह्मसुषिरत्वं प्रागेव पिण्डोत्पत्तिप्रकरणे चेतनस्थानमित्यत्र प्रतिपादितम् । अध्येमि स्मरामीति संबन्धः । अत्र ततावनद्धघनसुषिरशब्दैर्वक्ष्यमाणा वाद्यभेदा ध्वन्यन्ते ॥ १ ॥

**चित्रा वाचः प्रवर्तन्ते धातुवृत्तिविचित्रिताः ॥**
**यतस्तं नौमि विस्तारतत्त्वौघानुगतं शिवम् ॥ २ ॥**

**चित्रा वाच इति । धातुवृत्तिविचित्रिता इति ।** धातवो भूवादयः । वृत्तयः समासा वाऽभिधा गौणा(ण्या)दयो वा । धातुभिर्वृत्तिभिश्च विचित्रिताश्चित्रा वाचः । विविधानि वाक्यानि वेदादीनि यतः शिवात्प्रवर्तन्ते । कर्तृत्वेन वा कारणभूतादित्यर्थः । **विस्तारतत्त्वौघानुगतमिति** । विस्तारवान्विस्तारः । तत्त्वानां महदादीनामोघः समूहः । विस्तारश्चासौ तत्त्वौघश्च तेनानुगतम् । उत्पत्तिस्थितिलयाधिष्ठानत्वात् । तमनुगतो वा । तच्छब्दात्त(त्सृष्ट्वा त)देवानुप्राविशदिति श्रुतेः । तं शिवं नौमि स्तौमीति संबन्धः । अत्र धात्वादिभिः शब्दैर्वक्ष्यमाणवाद्यविषयो ध्वन्यन्ते ॥ २ ॥

अत्र गीतप्रकरणानन्तरं वाद्यप्रतिपादने सोपपत्तिकां संगतिं दर्शयति—

**गीतं चतुर्विधाद्वाद्याज्जायते चोपरज्यते ॥**
**मीयते च ततोऽस्माभिर्वाद्यमद्य निगद्यते ॥**
**ततं सुषिरं चावनद्धं घनमिति स्मृतम् ॥ ३ ॥**
**चतुर्धा तत्र पूर्वाभ्यां श्रुत्यादिद्वारतो भवेत् ॥**
**गीतं ततोऽवनद्धेन रज्यते मीयते घनात् ॥ ४ ॥**

**गीतं चतुर्विधादित्यादिना** । **तत्र पूर्वाभ्यामिति** । तत्र सुषिरावनद्धघनेषु मध्ये पूर्वाभ्यां ततसुषिराभ्याम् । **श्रुत्यादिद्वारत इति** । अत्राऽऽदिशब्देन स्वरमूर्छनाक्रमतानालंकारजातिगीतयो गृह्यन्ते । श्रुत्यादय एव द्वारं मुखं तस्माद्गीतं भवेत्संगीतमुत्पद्यत इत्यर्थः । ततोऽनन्तरमुक्तं गीतमवनद्धेन रज्यते । तत्र तत्र नादसाम्यं यथा भवति तथा

१ च. 'षिरं हृ' । २ घ. नीयते । ङ. गीयते ।

ध्वननेन रक्तातिशययुक्तं क्रियत इत्यर्थः । **घनान्मीयत इति** । घनवाद्याल्लघ्वादि-क्रियया संमितं क्रियत इत्यर्थः । एवं चतुर्विधानामपि वाद्यानां गीत एवोपकारकत्व-मवगन्तव्यम् ॥ ३ ॥ ४ ॥

ततादीनां सामान्यलक्षणमाह—

**वाद्यतन्त्री(न्त्रि) ततं वाद्यं सुपिरं सुपिरं मतम् ॥ ५ ॥**
**चर्मावनद्धवदनमवनद्धं तु वाद्यते ॥**
**घनो मूर्तिः साऽभिघाताद्वाद्यते यत्र तद्घनम् ॥ ६ ॥**

**वाद्यतन्त्रीत्यादिना** । वाद्या वादनीया तन्त्री यस्मिंस्तद्वाद्यतन्त्रीति ततवाद्यस्य लक्षणम् । सुपिरं छिद्रमस्यास्तीति सुषिरमिति सुषिरवाद्यस्य लक्षणम् । चर्मावनद्धव-दनमित्यवनद्धवाद्यस्य लक्षणम् । घन इत्यस्य व्याख्यानं मूर्तिरिति सा मूर्तिः । **यत्राभिघाताद्वाद्यत इति** । यत्र यस्मिन्गीतादौ विषयेऽभिघातात्परस्पर-पीडनाद्धेतोर्वाद्यते ध्वन्यते तद्घनमिति मूर्तिरेव घनमित्यर्थः ॥ ५ ॥ ६ ॥

तत्र तद्भेदान्दर्शयितुमाह—

**ततं वीणा द्विधा सा च श्रुतिस्वरविवेचनात् ॥**
**तत्र श्रीशार्ङ्गदेवेन श्रुतिवीणोदिता पुरा ॥ ७ ॥**

**ततं वीणेत्यादिना** । **श्रुतिवीणोदिता पुरेति** । स्वरगताध्याय इत्यर्थः ॥ ६ ॥

**वक्ष्यते स्वरवीणाऽत्र तस्यामपि विचक्षणाः ॥**
**अङ्कित्वा स्वरदेशानां भागानुद्भिन्दते श्रुतीः ॥ ८ ॥**

तस्यामपि स्वरवीणायामपि विचक्षणाः सूक्ष्मबुद्धयः स्वरदेशानां दण्डादिषु षड्जादि-स्वरप्रदेशानां भागांश्चतुःसंख्याकादिकानङ्कित्वा त[त्त]च्छ्रुतीनां न्यूनाधिकभावो यथा न भवति तथा चिह्नितान्कृत्वा श्रुतीरुद्भिन्दते तीव्रादिकाः श्रुतीः प्रादुर्भावयन्ति । श्रुति-वीणायां तु स्वराः स्वत एव प्रादुर्भवन्ति ॥ ८ ॥

सद्यः स्वरवीणाभेदानुद्दिशति—

**तद्भेदास्त्वेकतन्त्री स्यान्नकुलश्च त्रितन्त्रिका ॥**
**चित्रा वीणा विपञ्ची च ततः स्यान्मत्तकोकिला ॥ ९ ॥**
**आलापिनी किंनरी च पिनाकीसंज्ञिता परा ॥**
**निःशङ्कवीणेत्याद्याश्च शार्ङ्गदेवेन कीर्तिताः ॥ १० ॥**

**तद्भेदास्त्वित्यादिना** । निःशङ्कवीणेत्याद्याश्चेत्यत्राऽऽद्यशब्देन देशान्तरे सुप्रसिद्धा चान्याऽपि स्वरवीणा गृह्यते । निःशङ्कवीणेति स्वनामकरणेनाप्रसिद्धामप्यन्यां स्वबुद्ध्या निर्माय तस्याः स्वेच्छया संज्ञां कुर्यादिति गम्यते । एवं सुषिरादिष्वपि द्रष्टव्यम् ॥ ॥ ९ ॥ १० ॥

वंशः पावः पाविका च मुरली मधुकर्यपि ॥
काहलातुंण्डुकिन्यौ च चुक्का शृङ्गमतः परम् ॥ ११ ॥
शङ्खादयश्च वाद्यस्य सुषिरस्य भिदा मताः ॥
पटहो मर्दलश्चाथ हुडुक्का करटा घटः ॥ १२ ॥
घडसो ढवसो ढक्का कुडुक्का कुडुवा तथा ॥
रुञ्जा डमरुको डक्का मण्डिडक्का च डक्कुली ॥ १३ ॥
सेल्लुका झल्लरी भाणस्त्रिवली दुन्दुभिस्तथा ॥
भेरीनिःसाणतुम्बक्यो भेदाः स्युरवनद्धगाः ॥ १४ ॥
तालोऽथ कांस्यतालः स्याद्घण्टा च क्षुद्रघण्टिका ॥
जयघण्टा ततः कंम्रा शुक्तिपट्टादयस्तथा ॥
प्रभेदा घनवाद्यस्य प्रोक्ताः सोढलसूनुना ॥ १५ ॥

सुषिरादिभेदानुद्दिशति—**वंशः पाव इत्यादिना** ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ ॥ १३ ॥ १४ ॥ १५ ॥

शुष्कं गीतानुगं नृत्तानुगमन्यद्द्वयानुगम् ॥
चतुर्धेति मतं वाद्यं तत्र शुष्कं तदुच्यते ॥ १६ ॥
यद्विना गीतनृत्याभ्यां तद्गोष्ठीत्युच्यते बुधैः ॥
ततः परं तु त्रितयं भवेदन्वर्थनामकम् ॥ १७ ॥

स्वरूपतश्चतुर्भेदभिन्नस्य वाद्यस्य प्रयोगभेदेन पुनश्चातुर्विध्यं दर्शयति—**शुष्कमित्यादिना** ॥ १६ ॥ १७ ॥

वाद्यस्येश्वरकर्तृकत्वं दर्शयति—

वाद्यं दक्षाध्वरध्वंसोद्वेगत्यागाय शंभुना ॥
चक्रे कौतुकतो नन्दिस्वाति(मि)तुम्बुरुनारदैः ॥ १८ ॥

**वाद्यं दक्षाध्वरेत्यादि** । शंभुना प्रयोजकेन स्वाति(नन्द्यादि)भिः प्रयोज्यैश्चक्रे कारितमित्यर्थः ॥ १८ ॥

अभिषेके नरेन्द्राणां यात्रायामुत्सवे तथा ॥ १९ ॥
मङ्गलेषु च सर्वेषु विवाहोपनयादिषु ॥
उत्पाते संभ्रमे युद्धे नाटके वीररौद्रिणि ॥ २० ॥
सर्वातोद्यानि वाद्यन्ते कानिचित्स्वल्पमङ्गले ॥
विश्रान्तौ रङ्गसंस्थानां गायतां नृत्यतामपि ॥ २१ ॥

---

१ ग. च. ङ. °तुण्डिकि° । २ ख. ग. बुक्का । घ. तुक्का । ङ. ढक्का । ३ ग. कुडवा । घ. कडुवा । ४ घ. °निःस्वानतु° । ५ ग. कम्रा । ६ च. नन्दी साकं तु° ।

एतान्युत्साहकारीणि वीराणां मङ्गलाय च ॥
कुर्वन्ति हृदयस्फूर्तिं दुःखमुन्मूलयन्ति च ॥ २२ ॥

वाद्यप्रयोगस्य कालविशेषानाह—**अभिषेक इत्यादि** ॥ १९ ॥ २० ॥ २१ ॥ ॥ २२ ॥

गीतनृत्यगतन्यूनमच्छादनपटून्यपि[1] ॥
वाद्यान्यतस्ततादीनि तत्राऽऽदौ ब्रूमहे ततम् ॥ २३ ॥
तस्य वादनभेदांश्च विविधाः करसारणाः ॥
सुषिरं पटहं तस्य पाटांस्तद्रचनास्तथा ॥ २४ ॥
पाटप्रभववाद्यानि प्रबन्धान्वाद्यसंश्रयान् ॥
मर्दलाख्यं ततो वाद्यं भेदान्मार्दलिकस्य च ॥ २५ ॥
गुणदोषांश्च तद्बृन्दं स्वरूपस्य च लक्षणम् ॥
हुडुक्काद्यवनद्धानां स्वस्वपाटसमन्वितम् ॥ २६ ॥
घनस्य च गुणान्दोषान्वाद्यवादकसंगतान् ॥
हस्तयोश्च गुणानत्र वाद्याध्याये यथाक्रमम् ॥ २७ ॥

**गीतनृत्येति।** *यतः। गीतनृत्त(त्य)गतन्यूनमच्छादनपटून्यपीति। अत्रापिशब्देन वा[द्य]प्रतिपादने प्रयोजनमिदमिति दर्शयति। तत्प्रयोजनं गीतनृत्त(त्य)गतन्यूनताप्रच्छादनम्। अत्र न्यूनशब्दो धर्मपरत्वेन नेयः। यतस्तत्र पटून्यतस्ततादीनि वाद्यानीति संबन्धः। वाद्यानि वादनीयानीत्यर्थः। तत्र श्रुतिस्वरविवेकनिदर्शन[त]या गीतोत्पादकमिति प्रथमोद्दिष्टं ततवाद्यमारभ्याध्याये क्रमेण प्रतिपाद्यानर्थानुद्दिशति—**तत्राऽऽदौ ब्रूमहे ततमित्यादिना**। तस्य वादनभेदांश्चेत्यादिभिश्च यथाक्रमं ब्रूमह इति क्रियासंबन्धो द्रष्टव्यः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

अङ्गुष्ठपर्वदैर्घ्यं स्यादङ्गुलं द्वादशाङ्गुलम् ॥
वितस्तिस्तद्द्वयं हस्तो वाद्यभाण्डमितौ भवेत् ॥ २८ ॥

वाद्यानां स्वरूपनिरूपणार्थमङ्गुलादिपरिमाणविशेषाँल्लक्षयति—**अङ्गुष्ठपर्वेत्यादि** ॥ २८ ॥

ग्रन्थिव्रणाभिदा हीनः श्लक्ष्णः खदिरदारुजः ॥
सुवृत्तः सरलो दण्डो वितस्तिपरिधिर्भवेत् ॥ २९ ॥

---

*इदं पदमधिकमिव भाति।

---

[1] ख. ग. घ. °पि। तनोम्यत°।

अथैकतन्त्र्यां वीणायां दण्डादिलक्षण[कथन]पूर्वकनिर्माणप्रकारं तत्पवित्रतां चोक्त्वा तद्वादनप्रकारं वामदक्षिणोभयहस्तभेदांस्तदुद्भववाद्यभेदांश्च दर्शयति—**ग्रन्थिव्रणभिदाहीन** इत्यारभ्य **घोषकश्चैकतन्त्रिके**त्यन्तेन ग्रन्थसंदर्भेण । स्पष्टार्थो ग्रन्थः ॥ २९ ॥

**त्रिहस्तदैर्घ्यस्तावच्च सुषिरं दधदन्तरा ॥**
**सार्धाङ्गुलपरीणाहमूर्ध्वाधोवदने तथा ॥ ३० ॥**
**कनिष्ठाङ्गुलिमानं वा गर्भे रन्ध्रत्रयं दधत् ॥**
**त्रेताग्निसंस्थितं यद्वा द्वे रन्ध्रे तर्जनीमिते ॥ ३१ ॥**
**एकमेव त्वधःशङ्कुस्थाने सार्धाङ्गुलायतम् ॥**
**दधानः ककुभं सारं खादिरं वाऽन्यदारुजम् ॥ ३२ ॥**
**तिर्यक्संस्थेन दैर्घ्येणाष्टाङ्गुलत्र्यङ्गुलायतम् ॥**
**अङ्गुलाधिकपार्श्वे च मध्ये कूर्मोन्नताकृतौ ॥ ३३ ॥**
**स्थितेन पत्रिकाधारगर्तेन च समन्वितम् ॥**
**गर्तमध्ये च रन्ध्रेण योन्याकारेण संयुतम् ॥ ३४ ॥**
**रन्ध्रे तत्र निविष्टेन रन्ध्रस्थौल्येन शङ्कुना ॥**
**अन्वितां पत्रिकां मिश्रलोहजां त्र्यङ्गुलायताम् ॥ ३५ ॥**
**चतुरङ्गुलदैर्घ्यां च मध्ये कूर्मोन्नताद्बहिः ॥**
**निम्नमध्यं मनागन्तर्धारयन्तमधः पुनः ॥ ३६ ॥**
**द्विदण्डिकं शङ्कुनाऽष्टाङ्गुलदैर्घ्ययुजा तथा ॥**
**वृत्तेन त्र्यङ्गुलस्थूलोत्तरार्धश्लक्ष्णमूर्तिना ॥ ३७ ॥**
**कूर्मपृष्ठोन्नतं मध्यमुत्तरार्धस्य बिभ्रता ॥**
**दण्डवक्त्रमितस्थौल्याधरभागयुतेन च ॥ ३८ ॥**
**दण्डवक्त्रप्रविष्टाधोभागेन च विराजितम् ॥**
**एवंविधस्य दण्डस्योर्ध्वाधः सप्तदशाङ्गुलैः ॥ ३९ ॥**
**अधोभागेऽक्षिसदृशं विधाय विवरद्वयम् ॥**
**एकत्र द्विगुणां तन्त्रीं क्षिप्त्वा रन्ध्रे परत्र च ॥ ४० ॥**
**तन्त्रीप्रान्तान्तरे क्षिप्त्वा प्रोतं तद्द्विगुणे ततः ॥**
**द्विगुणात्कर्षणात्कर्षेत्पुनरेवं समाचरेत् ॥ ४१ ॥**

॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥
॥ ४० ॥ ४१ ॥

---

१ घ. °पार्श्वे च । २ घ. ङ. °न्नतां बहिः । ३ घ. ङ. °मध्यां म° । ४ ख. °ष्ठोपमे म° ।
५ ख. °मितिस्थौ° ।

पञ्चङ्गुलपरीणाहं सुपक्वं वर्तुलं च यत् ॥
तुम्बस्योत्सेधतस्तस्य वदनं द्वादशाङ्गुलम् ॥ ४२ ॥
वृत्तस्थानस्थया नाभ्याऽधोमुख्या मध्यरन्ध्रया ॥
त्र्यङ्गुलायतया युक्तं पृष्ठसंश्लिष्टपृष्ठया ॥ ४३ ॥
तुम्बकं मध्यरन्ध्रं स्यात्कर्परं नालिकेरजम् ॥
अन्तस्थरन्ध्रसंलग्नं पृष्ठमध्येन रन्ध्रिणा[1] ॥ ४४ ॥
तं दधद्रन्ध्रमध्येऽथ तन्त्रीप्रान्तौ निवेश्य[2] तौ ॥
संवेष्ट्य कीलकेऽन्तस्थे कीलकं भ्रामयेन्मुहुः ॥ ४५ ॥
तावद्यावद्दृढो बन्धस्तुम्बकस्यैव जायते ॥
एवं तुम्बकमुत्तानं दण्डे तज्ज्ञैर्निबध्यते ॥ ४६ ॥
दोरकं नागपाशेन द्विगुणेनान्वितं ततः ॥
सुवलश्लक्ष्णसूत्रोत्थं दण्डे तुम्बोर्ध्वदेशतः ॥ ४७ ॥
संवेष्ट्य नागपाशेऽस्मिन्बद्धप्रान्तां दृढां घनाम् ॥
श्लक्ष्णां स्नायुमयीं तन्त्रीं कृष्ट्वा संपीड्य पत्रिकाम् ॥ ४८ ॥
तन्त्रया संवेष्ट्य ककुभं निबध्नीयाद्दृढं ततः ॥
वैणवी यवविस्तारा तन्वी ब्यङ्गुलदैर्घ्यभाक् ॥ ४९ ॥
तन्त्रीपत्रिकयोरन्तर्जीवा[3] नादस्य सिद्धये ॥
संदिग्धपत्रिका तन्त्री श्लेषं क्षेप्या कलावता[4] ॥ ५० ॥
या पक्ववेणुवल्कोत्था दोरिका त्रिवृता शुभा ॥
कनिष्ठा नखविस्तारा द्वादशाङ्गुलदैर्घ्यभाक् ॥ ५१ ॥
सुवृत्ता मसृणा तुम्बादधस्तादङ्गुलत्रये ॥
दण्डे संवेष्टयेन्मन्द्रस्वरस्थानोपलक्षिकाम् ॥ ५२ ॥
यत्राभिदधिरे धीरास्तां वीणामेकतन्त्रिकाम् ॥
प्रकृतिः सर्ववीणानामेषा श्रीशार्ङ्गिणोदिता ॥ ५३ ॥
दर्शनस्पर्शने चास्या भोगस्वर्गापवर्गदे ॥
पुनीतो विप्रहत्यादिपातकैः पतितं जनम् ॥ ५४ ॥

॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥
॥ ५२ ॥ ५३ ॥ ५४ ॥

---

१ ङ. 'णा । दधत्तद्र' । २ ङ. निवेशितौ । ३ ख. ग. 'र्जीवना' । ङ. 'र्जीवो ना' । ४ ख. ङ. 'ला च सा ॥५०॥ या ।

दण्डः शंभुरुमा तन्त्री ककुभः कमलापतिः ॥
इन्दिरा पत्रिका ब्रह्मा तुम्बं नाभिः सरस्वती ॥ ५५ ॥
दोरको वासुकिर्जीवा सुधांशुर्दोरिका रविः ॥
सर्वदेवमयी तस्माद्वीणेयं सर्वमङ्गला ॥ ५६ ॥
अधस्तुम्बमधोवक्त्रमूर्ध्वं तन्त्रीर्यथा भवेत् ॥
तथाऽस्यां दो(दो?)रिकादेशं वामस्कन्धे निधाय च ॥ ५७ ॥
ककुभं दक्षिणस्याङ्घ्रेः पार्ष्ण्यां संधाय यत्नतः ॥
न्यस्तां पृष्ठे कनिष्ठाया वामहस्तस्य कम्रिकाम् ॥ ५८ ॥
सारणासारणेत्युक्तामनामाङ्गुलिवेष्टिताम् ॥
आकुञ्चन्मध्यमापार्श्वलग्नां तर्जनिकाग्रतः ॥ ५९ ॥
निपीड्योरःस्थलासन्नां तन्त्रीमधिनिधाय च ॥
ऊर्ध्वाधः सारयेन्नादसिद्ध्यै हस्तं तु दक्षिणम् ॥ ६० ॥
त्यक्त्वा वितस्ति जीवातस्तन्त्र्यां(न्त्रीं?) विन्यस्य सारयेत् ॥
अन्यत्रोपरिवाद्यान्तं नोर्ध्वं वक्षःस्थलान्नयेत् ॥ ६१ ॥
कम्रिका तत्क्रिया चोक्ता सारणा सा चतुर्विधा ॥
उत्क्षिप्ता संनिविष्टाख्योभयी स्यात्कम्पितेत्यपि ॥ ६२ ॥
श्लिष्टा तन्त्री यदोत्प्लुत्य निपतेत्सारणां मुहुः ॥
तदोत्क्षिप्ता संनिविष्टा स्पृष्ट्वैव सरणे भवेत् ॥ ६३ ॥
क्रमादेतद्द्वयाभ्यां स्यादुभयी सारणा मता ॥
स्वरस्थाने कम्पनेन कम्पिता कम्रिकोच्यते ॥ ६४ ॥
घातः पातश्च संलेखस्ततो(थो)ल्लेखावलेखकौ ॥
भ्रमरः संधितच्छिन्नौ नवमी नखकर्तरी ॥ ६५ ॥
व्यापारा दक्षिणस्येति पाणेर्वामस्य तु द्वयम् ॥
स्फुरितः खसितश्चेति करयोरुभयोस्त्वमी ॥ ६६ ॥
घोषो रेफोऽथ विन्दुः स्यात्कर्तरी चार्धकर्तरी ॥
निष्कोटिताख्यः स्खलितः शुकवक्त्रश्च मूर्छना ॥ ६७ ॥

॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥
॥ ६५ ॥ ६६ ॥ ६७ ॥

---

१ घ. ङ. °स्या दोरि° । २ च. °पार्श्व ल° । ३ ख. °का ततः ॥ ५९ ॥ ४ च °वान्तस्त° । ५ ख. ग. °स्तन्त्रीवि° । घ. °स्तन्त्र्या वि° । ६ च नोर्ध्वव° । ७ ङ. खाचित° ।

तलहस्तोऽर्धचन्द्रश्च प्रसारः कुहरोऽपरः ॥
त्रयोदशेति सर्वेऽमी स्युश्चतुर्विंशतिर्युताः ॥ ६८ ॥
करनामान्यपीमानि मन्वते वाद्यवेदिनः ॥
घातः स्यान्मध्यमाक्रान्ततर्जन्या तन्त्रिकाहतिः ॥ ६९ ॥

इति घातः ।

घातः केवलया पातः

इति पातः ।

संलेखोऽन्तस्तथाऽऽहतिः[1] ॥

इति संलेखः ।

अन्तर्मध्यमया घातमुल्लेखं संप्र(च)चक्षिरे ॥ ७० ॥

इत्युल्लेखः ।

अवलेखो मध्यमया स्यात्तन्त्रीताडनं बहिः ॥
अङ्गुल्याऽन्येऽन्ययाऽप्याहुः संलेखं चावलेखकम् ॥ ७१ ॥
सर्वाभिस्तिसृभिर्द्वाभ्यामथवेति च ते जगुः ॥
अन्तर्बहिर्मुखौ घातौ तयोस्ते ब्रुवते क्रमात् ॥ ७२ ॥

इत्यवलेखः ।

भ्रमरोऽन्तःक्रमाच्छीघ्रं चतुरङ्गुलिताडनम् ॥

इति भ्रमरः ।

मध्यमानामिकाभ्यां तु बहिर्घातोऽत्र संधितः ॥ ७३ ॥

इति संधितः ।

तर्जनीपार्श्वलग्नायास्तन्त्र्या बहिरनामया ॥
हननं छिन्नमाचष्टे श्रीमत्सोढलनन्दनः ॥ ७४ ॥

इति च्छिन्नः ।

क्रमाद्द्रुतं नखैर्घातश्चतुर्भिर्नखकर्तरी ॥

इति नखकर्तरी ।

इति नव दक्षिणहस्तव्यापाराः ।

---

स्फुरिते कम्पिता[2] तन्त्रीः पृष्ठलग्नेव सारणाः[3](णा?) ॥ ७५ ॥

इति स्फुरितः ।

॥ ६८ ॥ ७९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥

---

१ घ. °स्तयाऽऽह° । २ घ. कम्प्यते । ३ग. °रणम् । इ° ।

मुहुः सारणया तन्त्रीघर्षणं खशितो मतः ॥

इति खशितः ।

इति वामहस्तव्यापारद्वयम् ।

---

तन्त्री लग्नाङ्गुष्ठपार्श्वा कर्तरीवच्च हन्यते ॥ ७६ ॥
कनिष्ठासारणाभ्यां वा यत्रासौ घोष उच्यते ॥

इति घोषः ।

दक्षिणानामया यत्र तन्त्रीरन्तर्निहन्यते ॥
वामस्य मध्यमाङ्गुल्या वहिस्तं रेफमूचिरे ॥ ७७ ॥

इति रेफः ।

अनामया वहिस्तन्त्रीघाताज्जातो यदा ध्वनिः ॥
तर्जन्या धार्यते विन्दुर्निःशङ्केनोदितस्तदा ॥ ७८ ॥

इति विन्दुः ।

अङ्गुलीभिश्चतसृभिः क्रमेण करयोर्द्वयोः ॥
वहिस्तन्त्रीहतिस्तूर्णं कर्तरी कीर्तिता बुधैः ॥ ७९ ॥

इति कर्तरी ।

दक्षिणः कर्तरीं कुर्याद्वामहस्तस्तु तन्त्रिकाम् ॥
यत्र सारणया हन्ति प्राहुस्तामर्धकर्तरीम् ॥ ८० ॥

इत्यर्धकर्तरी ।

उत्सृष्टसारणा यत्र हन्ति तन्त्रीं प्रदेशिनी ॥
निष्कोटिताभिधं पाणिममुं वाद्यविदो विदुः ॥ ८१ ॥

इति निष्कोटितः ।

उत्क्षिप्तया सारणया वामस्तन्त्रीं द्रुतं यदा ॥
निहन्ति कर्तरीतुल्यो दक्षिणः स्खलितस्तदा ॥ ८२ ॥

इति स्खलितः ।

तन्त्रीकर्षोऽङ्गुष्ठतर्जन्यग्राभ्यां शुकवक्त्रकः ॥ ८३ ॥

इति शुकवक्त्रः ।

उद्वेष्टपरिवर्ताभ्यां तन्त्र्यां भ्राम्यति दक्षिणे ॥
स्वरस्थाने द्रुतं कम्प्रासारणं मूर्छना मता ॥ ८४ ॥

इति मूर्छना ।

॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥

तलेन दक्षिणो हस्तस्तन्त्रीं हन्तीतरः पुनः ॥
प्रदेशिन्या स्पृशेद्यत्र तलहस्तो भवेदसौ ॥ ८५ ॥

इति तलहस्तः ।

स्पर्शोऽङ्गुष्ठकनिष्ठाभ्यामर्धचन्द्रोऽभिधीयते ॥

इत्यर्धचन्द्रः ।

चतुरङ्गुलिसंघाते कुञ्चिताङ्गुष्ठके तले ॥
कनिष्ठातर्जनीपार्श्वस्पर्शस्तन्त्र्याः प्रसारकः ॥ ८६ ॥

इति प्रसारकः ।

करस्य किंचित्साङ्गुष्ठसकलाङ्गुलिकुञ्चने ॥
कनिष्ठाङ्गुष्ठसंस्पर्शस्तन्त्र्याः स्यात्कुहरः करः ॥ ८७ ॥

इति कुहरः ।

इति त्रयोदशोभयहस्तव्यापाराः ।

---

एतद्धस्तसमायोगाद्वादनं वाद्यमुच्यते ॥
छन्दो धारा कैकुटी च कङ्कालं वस्तु च द्रुतम् ॥ ८८ ॥
गजलीलं दण्डकं चोपरिवाद्यमतः परम् ॥
वाद्यं पक्षिरुतं चेति दशधा परिकीर्तितम् ॥ ८९ ॥
खसितस्फुरितौ यत्र क्रियेते बहुधा करौ ॥
तारं च स्पृश्यते स स्याच्छन्दो यतिमनोहरः ॥ ९० ॥

इति च्छन्दः ।

स्खलितो मूर्छना चाथ कर्तरीरेफसंयुतौ ॥
उल्लेखरेफौ यत्राऽऽस्तां धारां ब्रूते हरप्रियः ॥ ९१ ॥

इति धारा ।

शुकवक्त्रः स्फुरितको घोषः स्यादर्धकर्तरी ॥
क्रमादेते करा यत्र तामाहुः कैकुटीं बुधाः ॥ ९२ ॥

इति कैकुटी ।

स्फुरितैर्मूर्छनासंज्ञैः कर्तरीत्रितयेन च ॥
युक्तं करैः क्रमादेभिः कङ्कालं कथितं बुधैः ॥ ९३ ॥

इति कङ्कालम् ।

॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥

---

१ ख. °स्तन्त्र्यां प्र° । २ च. °स्तन्त्र्यां स्या° ।

स्पृष्टतारमुपेतं यत्कर्तर्या *खसितेन च ॥
कुहरेणाथ तद्वाद्यं वस्तु वस्तुविदो विदुः ॥ ९३ ॥
इति वस्तु ।
कर्तरीखसितौ यत्र क्रमेण कुहरः करः ॥
रेफभ्रमरघोषाश्च तद्द्रुतं ब्रुवते बुधाः ॥ ९४ ॥
इति द्रुतम् ।
बहुधा मूर्छना हस्ताः स्फुरिताः कर्तरी ततः ॥
खसितो यत्र तत्प्राहुर्गजलीलं कलाविदः ॥ ९५ ॥
इति गजलीलम् ।
स्खलितो मूर्छनाख्यश्च कर्तरीरेफसंयुतः ॥
खसितो यत्र वाद्यज्ञा दण्डकं तद्बभाषिरे ॥ ९६ ॥
इति दण्डकम् ।
ऊर्ध्वाधोगौ क्रमाद्धस्तौ रेफकर्तरिकाह्वयौ ॥
निष्कोटिते तले हस्ते द्वावप्युपरिवाद्यके ॥ ९७ ॥
इत्युपरिवाद्यकम् ।
समस्तहस्तवाद्यं तु वाद्यं पक्षिरुतं मतम् ॥
इति पक्षिरुतम् ।
इति दशविधं वाद्यम् ।

---

सकलं निष्कलं चेति द्विविधं वाद्यमुच्यते ॥ ९८ ॥
तन्त्रीसंलग्नजीवातः स्थूलो यत्र ध्वनिर्भवेत् ॥
तदुक्तं सकलं वाद्यमपरे त्वन्यथा जगुः ॥ ९९ ॥
आदोरिकं[1] पत्रिकं चेत्तर्जनीस्पर्शवर्जितम् ॥
सार्यते कम्रिकावाद्यं तदाहुः सकलाभिधम् ॥ १०० ॥
अपनीय कलां कम्रामधो नैषाददेशतः ॥
न नयेत्तर्जनीस्पर्शे[2] तन्त्रयाश्चेन्निष्कलं तदा ॥ १०१ ॥

॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ १०१ ॥

---

+ स्खलितेनेति क्वचित्पाठः ।

---

१ घ. ङ. °रिकां पत्रिकां चे°। २ घ. ङ. °स्पर्शस्तन्त्र्या° ।

सूक्ष्मश्चात्र भवेन्नादः सारणामत्र केचन ॥
आमध्यमस्वरस्थानं सारणायां प्रपेदिरे ॥ १०२ ॥
अवोचदिति निःशङ्कः शिष्याभ्यासाय वादनम् ॥
श्रुत्यादिक्रमतो गीतनिष्पत्तौ त्विदमादिशेत् ॥ १०३ ॥
वक्ष्यामः स्वररन्ध्राणां यद्वंशेऽष्टादशाङ्गुले ॥
प्रथमे सप्तके स्थानं वीणायामपि तन्मतम् ॥ १०४ ॥
स्वराणां किंतु वैणानामधराधरतारता ॥
मध्यमे सप्तके स्थानं ततः स्याद्द्विगुणान्तरम् ॥ १०५ ॥
तृतीये सप्तके स्थानं ततोऽपि द्विगुणान्तरम् ॥
अङ्केत च स्वरस्थानान्यमूनि सुखबुद्धये ॥ १०६ ॥
यथास्वं स्वरभेदानां विभागाच्छ्रुतिदेशधीः ॥
स्याद्ग्राममूर्छनादीनामुद्बोधः सुकरस्ततः ॥
ऐषा पिञ्जरकः(?) प्रोक्ता घोषकश्चैकतन्त्रिका ॥ १०७ ॥

इत्येकतन्त्रीलक्षणम् ।

॥ १०२ ॥ १०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥

तन्त्रीद्वयेन नकुलः स्यादन्वर्था त्रितन्त्रिका ॥
तन्त्रीभिः सप्तभिश्चित्रा विपञ्ची नवभिर्मता ॥ १०८ ॥
कोणाङ्गुलीवादनीया चित्रा तद्वद्विपञ्चिका ॥
क्रमादन्येऽङ्गुलीकोणव्यवस्थामूचिरे तयोः ॥ १०९ ॥
चित्रायामङ्गुलीमात्रं विपञ्च्यामुभयं परे ॥
तन्त्रीणामेकविंशत्या कीर्तिता मत्तकोकिला ॥ ११० ॥

नकुलादीनां लक्षणान्यपि स्पष्टार्थानि । तत्र त्रितन्त्रिकैव लोके जन्त्रशब्देनोच्यते । मत्तकोकिलैव लोके स्वरमण्डलमित्युच्यते ॥ १०८ ॥ १०९ ॥ ११० ॥

मुख्येयं सर्ववीणानां त्रिस्थानैः सप्तभिः स्वरैः ॥
संपन्नत्वात्तदन्यास्तु तस्याः प्रत्यङ्गमीरिताः ॥
करणैश्चित्रयन्त्यस्तास्तस्याः स्युरुपरञ्जिकाः ॥ १११ ॥
रूपं कृतप्रतिकृतं प्रतिभेदस्ततः परम् ॥
स्याद्रूपशेषमोघश्च प्रतिशुष्कोति षड्विधम् ॥
करणं तस्य वक्ष्यामि लक्ष्मोदाहरणैः समम् ॥ ११२ ॥

---

१ च. 'खसिद्ध' । २ घ. एषाऽपि जनकः । च. एषोऽपि जनकः ।

**मुख्येयमित्यादि** । इयं मत्तकोकिला सर्ववीणानां मुख्या प्रकृतिरित्यर्थः । तत्र हेतुः—**त्रिस्थानैः सप्तभिः स्वरैः संपन्नत्वादिति** । त्रिस्थानैर्मन्द्रमध्यताराख्यस्थानत्रयोद्भूतैरित्यर्थः । **तदन्यास्त्विति** । मत्तकोकिलातो व्यतिरिक्ता वीणास्तु तस्या मत्तकोकिलायाः । **प्रत्यङ्गमीरिता इति** । विकृतय इत्यर्थः । **करणैश्चित्रयन्त्य इति** । करणान्यनन्तरं वक्ष्यमाणानि रूपादीनि । **तस्याः स्युरुपरञ्जिका इति** । तदनुवादित्वादित्यर्थः ॥ १११ ॥ ११२ ॥

रूपादीनां करणानां लक्षणान्याह—

**मुख्यवीणाप्रयुक्तस्य गुर्वादेर्भञ्जनेन यत् ॥**
**युगपद्वादनं रूपं विपञ्च्यादिषु तद्यथा ॥ ११३ ॥**

**मुख्यवीणाप्रयुक्तस्येत्यादिना** । तान्यपि स्पष्टार्थानि ॥ ११३ ॥

**वाद्यते गुरुमुख्यायां यदा द्वे लघुनी तदा ॥**
**विपञ्च्यादौ यदा त्वस्यां लस्तद(दाऽ)न्यासु दद्वयम् ॥ ११४ ॥**

**इति रूपम् ।**

**एतत्कृतप्रतिकृतं पश्चात्प्रत्यङ्गवादने ॥**

**इति कृतप्रतिकृतम् ।**

**रूपक्रियाविपर्यासात्प्रतिभेदो भवेद्यथा ॥ ११५ ॥**
**वाद्यते लद्वयं तज्ज्ञैर्मत्तकोकिलया यदा ॥**
**गुरुस्तदा विपञ्च्यादिवीणाभिरिति तद्विधिः ॥ ११६ ॥**

**इति प्रतिभेदः ।**

**यदा विदारीविच्छेदं कुरुते मुख्यवैणिकः ॥**
**तदाऽन्यासां वादनं यद्रूपशेषं तदुच्यते ॥ ११७ ॥**

**इति रूपशेषम् ।**

**यदा विलम्बितलयं प्रयुङ्क्ते मुख्यवैणिकः ॥**
**तदैवातिद्रुतलयं करचातुर्ययोगतः ॥**
**वैपञ्चिकाद्याः कुर्युश्चेदोघमाचक्षते तदा ॥ ११८ ॥**

**इत्योघः ।**

**अंशसंवाद्यन्यतरस्वरव्यञ्जिकया यदा ॥ ११९ ॥**
**तच्चैकयैव करणं स्यान्मुख्यामुख्यवीणयोः ॥**
**प्रतिशुष्कां तदाऽऽचष्ट शार्ङ्गिदेवो विदांवरः ॥ १२० ॥**

**इति प्रतिशुष्का ।**

इति षट्करणानि ।

॥ ११४ ॥ ११५ ॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥ १२० ॥

पुष्णन्ति वीणावाद्यं ये रक्तिं दधति चातुलाम् ॥
कुर्वन्त्यदृष्टपुष्टिं च तान्धातूनधुना ब्रुवे ॥ १२१ ॥

धातूँल्लक्षयितुमादौ तत्प्रयोजनमाह—पुष्णन्तीत्यादि ॥ १२१ ॥

ये प्रहारविशेषोत्थाः स्वरास्ते धातवो मताः ॥
विस्तारकरणा विद्धव्यञ्जनाश्चेति धातवः ॥ १२२ ॥

धातुस्वरूपमाह—ये प्रहारेत्यादि ॥ १२२ ॥

चतुर्धा तेषु विस्तारश्चतुर्धा बोधितो बुधैः ॥
विस्तारजश्च संघातजोऽथ स्यात्समवायजः ॥ १२३ ॥
अनुबन्धश्चेति चतुर्भेदः संघातजो भवेत् ॥
द्विरुत्तरो द्विरधरोऽप्यधराद्युत्तरान्तकः ॥ १२४ ॥
उत्तराद्यधरान्तश्चेत्यष्टधा समवायजः ॥
त्रिरुत्तरस्त्रिरधरोऽथ द्विरुत्तरपूर्वकः ॥ १२५ ॥
अधरान्तो द्विरधरोत्तरान्तश्चोत्तरादिकान्(त्) ॥
परो द्विरधरोऽथ स्यादधरादिर्द्विरुत्तरः ॥ १२६ ॥
मध्योत्तरद्विरधरोऽधरमध्यद्विरुत्तरः ॥
एवं चतुर्दशविधो विस्तारः शार्ङ्गिणोदितः ॥ १२७ ॥
करणस्य तु भेदाः स्यू रिभितोच्चयसंज्ञकौ ॥
तथा नीरटितो ह्रादोऽनुबन्ध इति पञ्च ते ॥ १२८ ॥
क्षेपः प्लुतोऽतिपातश्चातिकीर्णोऽप्यनुबन्धकः ॥
इत्याविद्धे पञ्च भेदा दश तु व्यञ्जने मताः ॥ १२९ ॥
पुष्पं कलं तलं विन्दू रेफो निस्वनितं ततः ॥
निष्कोटितमथोन्मृष्टमवमृष्टनिवन्धनौ ॥
इति सर्वे चतुस्त्रिंशन्मिलिता धातवो मताः ॥ १३० ॥

॥१२३ ॥ १२४ ॥ १२५ ॥ १२६ ॥ १२७ ॥ १२८ ॥ १२९ ॥ १३० ॥

विस्तीर्णनादभेदत्वाद्विस्तारो धातुरुच्यते ॥
प्रहारलाघवात्कृत्वा स्वरानेकीकृतानिव ॥ १३१ ॥
वैचित्र्यात्क्वापि विश्रान्ति(न्तः) स्वरो विस्तारजो भवेत् ॥
एकविस्तारसंज्ञं तमपरे सूरयो जगुः ॥ १३२ ॥

**विस्तीर्णनादभेदत्वादिति** । विस्तीर्णश्चासौ नादभेदश्चेति कर्मधारयः । नादभेदस्य विस्तीर्णभेदत्वं नामायममुकः स्वर इति विविक्तत्वेन ज्ञानविषयत्वं द्रष्टव्यम् । **प्रहारला-**

**घवादिति** । वादने हस्तलाघवादित्यर्थः । **एकविस्तारसंज्ञमिति** । एकस्यैव स्वरस्य विविक्तत्वादिति भावः ॥ १३१ ॥ १३२ ॥

**अलंकारत्वमप्यस्य निःशङ्को निरदीधरत् ॥ १३३ ॥**

**इति विस्तारजः ।**

**अलंकारत्वमपीति** । अस्य विस्तारजस्य न केवलं स्वररूपत्वं किंतु विशिष्टवर्णसंदर्भस्वरूपत्वमपीत्यर्थः । एवमेकप्रहारभवो विस्तारजः । द्विप्रहारभवः संघातजः । त्रिप्रहारभवः समवायजः । यथायोगमेतद्भेदमिश्रणोद्भवोऽनुबन्धो नामान्वर्थो धातुरिति द्रष्टव्यम् ॥ १३३ ॥

**अत्रोत्तराधरौ ज्ञेयौ मन्द्रतारौ स्वरौ क्रमात् ॥**
**उत्तराधरघातौ हि तयोर्निष्पादकाविह ॥ १३४ ॥**

**अत्रोत्तराधराविति** । अत्र वीणायामुत्तरस्वरो मन्द्रः । अधा(अध)रस्वरस्तार इत्यनेन शरीरेभ्यो वैपरीत्यं दर्शितं भवति। शरीरे ह्याधा(ह्यध)रो मन्द्र उत्तरस्तार इति द्रष्टव्यम् । तत्रोपपत्तिमाह—**उत्तराधरघातौ हीति** । हि यस्मात्कारणादुत्तरतन्त्रीघातो मन्द्रस्वरस्य निष्पादकः । अधरतन्त्रीघातस्तारस्वरस्येत्यर्थः ॥ १३४ ॥

**संघातजे ये चत्वारस्तथाऽष्टौ समवायजे ॥**
**भेदास्तेऽन्वर्थनामानस्तल्लक्ष्मोक्तिरनर्थिका ॥ १३५ ॥**
**तथाऽपि बालबोधाय तान्वयं विवृणीमहे ॥**
**मन्द्रस्वरद्विरुच्चाराद्धातुरत्र द्विरुत्तरः ॥ १३६ ॥**

**इति द्विरुत्तरः ।**

**तारस्थाने द्विराघाताद्धातुर्द्विरधरो भवेत् ॥**

**इति द्विरधरः ।**

**यस्त्वादितारो मन्द्रान्तः सोऽधराद्युत्तरान्तकः ॥ १३७ ॥**

**इत्यधराद्युत्तरान्तकः ।**

**आदौ मन्द्रस्ततस्तार उत्तराद्यधरान्तके ॥**

**इत्युत्तराद्यधरान्तकः ।**

**एते संघातजे भेदा द्विःप्रहारभवे मताः ॥ १३८ ॥**

**इति संघातजस्य भेदचतुष्टयम् ।**

---

॥ १३५ ॥ १३६ ॥ १३७ ॥ १३८ ॥

---

१ ख. ग. घ. 'रधीधर'।

मन्द्रस्वरत्रिराघाताद्धातुमाहुस्त्रिरुत्तरम् ॥
इति त्रिरुत्तरः ।
त्रिस्तारस्वरघातेन धातुस्त्रिरधरो भवेत् ॥ १३९ ॥
इति त्रिरधरः ।
द्विरुत्तराधरान्तो द्विर्मन्द्रस्तारान्तगो भवेत् ॥
इति द्विरुत्तराधरान्तः ।
तारस्थानं द्विः प्रहृत्य विदध्यान्मन्द्रमन्ततः ॥ १०४ ॥
यदा तदा द्विरधरोत्तरान्तो धातुरुच्यते ॥
इति द्विरधरोत्तरान्तः ।
उत्तरादिद्विरधरे मन्द्रतारो द्विरिष्यते ॥ १४१ ॥
इत्युत्तरादिद्विरधरः ।
सकृत्तारोऽथ मन्द्रो द्विरधरादिद्विरुत्तरे ॥
इत्यधरादिद्विरुत्तरः ।
मध्योत्तरद्विरधरे तारौ मध्यस्थमन्द्रकौ ॥ १४२ ॥
इति मध्योत्तरद्विरधरः ।
मन्द्राद्यन्तो भवेत्तारोऽधरमध्यद्विरुत्तरे ॥
इत्यधरमध्यद्विरुत्तरः ।
त्रिप्रहारभवे भेदाः स्युरिमे समवायजे ॥ १४३ ॥
इत्यष्टौ समवायजभेदाः ।

---

सजातीयविजातीयभेदसंमिश्रणोद्भवः ॥
अनुबन्धाभिधो धातुः शार्ङ्गदेवेन कीर्तितः ॥ १४४ ॥
इत्यनुबन्धः ।
इति चतुर्दश विस्तारधातुभेदाः ।

---

लघुगुर्वात्मकैर्घातैः करणाविद्धयोः क्रियाः ॥
करणोऽल्पगुरुस्तत्र तद्भेदाँल्लक्षयेऽधुना ॥ १४५ ॥
रिभितो द्वौ लघू गान्तौ
इति रिभितः ।
चतुर्लान्तगुरू(रु)च्चयः ॥
इत्युच्चयः ।

षड्लोऽन्तगुर्नीरटितः

इति नीरटितः।

ह्रादोऽष्टलघुरन्तगः ॥ १४६ ॥

इति ह्रादः।

॥ १४६ ॥

करणस्यानुबन्धस्तु स्याद्विस्तारानुबन्धवत् ॥ १४७ ॥

इत्यनुबन्धः।

**करणस्यानुबन्धस्तु स्याद्विस्तारानुबन्धवदिति**। यथायोगं रिभितादिभेदमिश्रणोद्भव इत्यतिदेशार्थः ॥ १४७ ॥

इति पञ्च करणधातुभेदाः।

---

भूरिगुर्गुरुहीनो वाऽऽविद्धोऽस्य विष्टणे भिदाः ॥

क्षेपो लघुगुरुभ्यां स्यात्

इति क्षेपः।

प्लुतो लघुगुरुर्भवेत् ॥ १४८ ॥

इति प्लुतः।

॥ १४८ ॥

अतिपातो लगाभ्यां द्विः

इत्यतिपातः।

चतुर्वारं लगौ ततः ॥

लघुर्यत्रातिकीर्णोऽसौ

इत्यतिकीर्णः।

अनुबन्धस्तु पूर्ववत् ॥ १४९ ॥

इत्यनुबन्धः।

द्वाभ्यां त्रिभिश्चतुर्भिश्च नवभिर्लघुभिः क्रमात् ॥

क्षेपादयोऽत्र चत्वारो भवन्तीत्यपरेऽब्रुवन् ॥ १५० ॥

**अनुबन्धस्तु पूर्ववदिति**। आविद्धधात्वनुबन्धस्तु यथायोगं हेया(क्षेपा)दिभेदमिश्रणोद्भव इत्यर्थः ॥ १४९ ॥ १५० ॥

इति पञ्चाऽऽविद्धधातुभेदाः।

---

अङ्गुलीभेदमात्रेण व्यञ्जनस्तद्भिदा ब्रुवे ॥ १५१ ॥

---

१ ङ. लगुरुलैर्मे°।

अङ्गुलीभेदमात्रेणेति । व्यञ्जनधातौ प्रहारसंख्यानियमो लघुगुरुनियमश्च न विवक्षित इत्यर्थः ॥ १९१ ॥

अङ्गुष्ठाभ्यां कनीयस्या तन्त्रीरेका निहन्यते ॥
युगपद्यत्र तत्पुष्पमभिलेखुः पुरातनाः ॥ १९२ ॥

इति पुष्पम् ।

एकस्वरं यदा नानास्थानकं तन्त्रिकाद्वयम् ॥
अङ्गुष्ठाभ्यामेककाले निहन्ति स्यात्कलं तदा ॥ १९३ ॥

इति कलम् ।

दक्षिणाङ्गुष्ठतो हन्ति वामाङ्गुष्ठनिपीडिताम् ॥
तन्त्रीं यत्र तदाऽऽचष्ट तलं सोढलनन्दनः ॥ १९४ ॥

इति तलम् ।

विन्दुरेकत्र तन्त्र्यां स्यात्प्रहारो गुरुनादकृत् ॥

इति बिन्दुः ।

रेफस्त्वेकस्वरो घातः क्रमात्सर्वाङ्गुलीकृतः ॥ १९९ ॥

इति रेफः ।

तलं कृत्वाऽवरोहेण घातो निस्वनितं मतम् ॥

इति निस्वनितम् ।

वामाङ्गुष्ठेन तूर्ध्वाधोघातो निष्कोटितं मतम् ॥ १९६ ॥

इति निष्कोटितम् ।

घातोऽतिमधुरध्वानस्तर्जन्योन्मृष्टमुच्यते ॥

इत्युन्मृष्टम् ।

कनिष्ठया दक्षिणयाऽङ्गुष्ठाभ्यामप्यधः सरन् ॥ १९७ ॥
हन्ति त्रिस्थानकं तन्त्रीत्रयमेकस्वरं पृथक् ॥
यत्रावमृष्टमाचष्ट तद्यक्षपुरमंण्डनः ॥ १९८ ॥

इत्यवमृष्टम् ।

॥ १९२ ॥ १९३ ॥ १९४ ॥ १९९ ॥ १९६ ॥ १९७ ॥ १९८ ॥

उक्तानुबन्धवद्बोध्यमनुबन्धस्य लक्षणम् ॥
नन्वेकलक्ष्मभेदोऽयं गण्यते किं पृथक् पृथक् ॥ १९९ ॥

उक्तानुबन्धवद्बोध्यमनुबन्धस्य लक्षणमिति । यथायोगं पुष्पादिभेदमिश्रणोद्भव

---

१ ग. घ. 'मण्डवत् ॥१५८॥

इत्यथः। अत्रानुबन्धचतुष्टये द्वितीयाद्यनुबन्धलक्षणेषु पूर्वपूर्ववदित्यतिदेशाच्चतुर्णामप्येकलक्षणत्वेन पृथग्गणनमयुक्तमित्याक्षिपति—**नन्विति** ॥ १५९ ॥

**मैवं तद्धातुभेदानां बाहुल्यं यत्र दृश्यते ॥**
**विशिष्टो धातुना तेन सोऽनुबन्धो भिदां व्रजेत् ॥ १६० ॥**

तत्तद्धातुभेदानां पृथक्त्वे सत्येव पूर्वपूर्ववदित्यतिदेशस्य मिश्रणमात्रविषयत्वेन चतुर्णामपि भिन्नलक्षणत्वात्पृथग्गणनमुपपद्यत इति समाधत्ते—**मैवमिति** ॥ १६० ॥

**इत्यनुबन्धः।**

धातुलक्षणमुपसंहरति—

**इत्येते धातवः प्रोक्ताः सर्ववाद्योपयोगिनः ॥**
**यथास्थानं प्रयोक्तव्यास्ते च वृत्तिसमाश्रयाः ॥ १६१ ॥**
**तत्र जातिरुदात्ता स्याद्विस्तारे करुणे घना ॥**
**आविद्धधातौ रिभिता व्यञ्जने ललिता मता ॥ १६२ ॥**

**इति चतुस्त्रिंशद्धातवः।**

**इत्येत इति। सर्ववाद्योपयोगिन इति।** अत्र सर्वशब्दः संकुचद्वृत्तिस्ततवाद्यविषयो द्रष्टव्यः। इतरेषु प्रहारविशेषोत्थसकलस्वरासंभवात्। **वृत्तिसमाश्रया इति।** वृत्तयो वक्ष्यमाणाश्चित्रादयस्तासामाश्रयभूता इति तत्पुरुषः। **यथास्थानं प्रयोक्तव्या इति।** यस्मिन्रागे येन धातुना रक्तिविशेषो लभ्यते स तस्य स्थानं तदनतिवृत्ते(त्ये)त्यर्थः। सुगममन्यत् ॥ १६१ ॥ १६२ ॥

**इति चतुस्त्रिंशद्धातुलक्षणम्।**

---

अथ धात्वाश्रितत्वेन प्रसक्ता वृत्तीः ससामान्यं लक्षयति—

**वृत्तिर्गुणप्रधानत्वरूपा व्यवहृतिर्मता ॥**
**चित्रा वृत्तिर्दक्षिणा च तिस्रः स्युरिति वृत्तयः ॥ १६३ ॥**

**गुणेत्यादिना।** गुणप्रधानत्वरूपा व्यवहृतिरित्यत्र गुणप्रधानाद्ग(नग्र)हणसामर्थ्याद्गीतवाद्ययोर्व्यवहृतिरिति गम्यते। कथम्। प्रकृतत्वेन वाद्यस्यैवोपादान एकस्यैकदा गुणप्रधानभावायोगाद्द्वयोरुपादानं कर्तव्यम्। तत्र प्रकृतसाहचर्येण गीतनृत्ते प्रसक्ते। तयोर्मध्ये नृत्तापेक्षया वाद्यं प्रति गीतस्यैवान्तरङ्गत्वात्तदेवोपादेयं भवति। तेन गीतवाद्ययोर्व्यवहृतिरित्यर्थः ॥ १६३ ॥

**चित्रा वाद्यप्रधानत्वं गीतस्य गुणतोच्यते ॥**
**उभयोः समभावेन वृत्तिर्वृत्तिरुदाहृता ॥**
**गीतप्रधानतावाद्यगुणता दक्षिणा मता ॥ १६४ ॥**

---

१ ग. °माश्रिताः। त°।

चित्रादीनां विशेषलक्षणानि स्पष्टार्थानि ॥ १६४ ॥

**द्रुतादिकाल्ँयानासां नियच्छन्ति क्रमात्परे ॥**
**समां स्रोतोगतां तद्वद्गोपुच्छां च यतिं क्रमात् ॥ १६५ ॥**
**मागधीं संभाविताख्यां गीतिं च पृथुलां क्रमात् ॥**
**ओघं चानुगतं तत्त्वं वाद्यान्येतान्यनुक्रमात् ॥ १६६ ॥**
**मार्गं चित्रं वार्तिकाख्यं दक्षिणाख्यं यथाक्रमम् ॥**
**अनागतसमातीतान्ग्रहानिह च मन्वते ॥ १६७ ॥**

**इति वृत्तित्रयम् ।**

**द्रुतादिकानित्यादि** । चित्रायां द्रुतलयं वृत्तौ मध्यलयं दक्षिणायां विलम्बितलयं नियच्छन्ति नियमयन्ति । एवं यतिजा(गी)तिवाद्यमार्गग्रहानपि क्रमेण योजयेत्॥१६५॥ ॥ १६६ ॥ १६७ ॥

**इति वृत्तिलक्षणम् ।**

---

एवं वृत्तीनां प्रयोगनिरूपणे प्रयुक्तानि तत्त्वादीनि वाद्यानि ससामान्यं लक्षयितुमाह—

**तत्त्वं भवेदनुगतमोघश्चेति निरूपितम् ॥**
**गीतानुगं त्रिप्रकारं वाद्यं तल्लक्ष्म कथ्यते ॥ १६८ ॥**

**तत्त्वं भवेदित्यादिना** । अत्र गीतानुगमिति तत्त्वादीनां त्रयाणां वाद्यानां सामान्यलक्षणम् । तेषां विशेषलक्षणानि स्पष्टार्थानि । तत्र विरामशब्दस्य विलसनार्थत्वाल्लयाद्भेदो द्रष्टव्यः । तथा विरतिशब्दस्यापि ॥ १६८ ॥

**लयं तालं विरामं च यतिं गीतिं तथाऽक्षरम् ॥**
**वर्णग्रामविभागं च नानाजात्यंशकादिकम् ॥ १६९ ॥**
**व्यञ्जद्गीतगतं गीतमिलितं तत्त्वमुच्यते ॥**

**इति तत्त्वम् ।**

**किंचिद्गीतानुहरणाद्वाद्यं त्वनुगतं मतम् ॥ १७० ॥**
**यथा विरतिरन्यत्र स्थितिः स्थानान्तरेष्वपि ॥**
**विलम्बिते गीतलये वैदग्ध्याद्द्रुतवादनम् ॥ १७१ ॥**

**इत्यनुगतम् ।**

॥ १६९ ॥ १७० ॥ १७१ ॥

---

१ ख. ग. 'क्ष्म तद्ब्रुवे । ल' ।

गीतस्यान्तेऽनुकर्ताऽपि भागशश्चातुरीवशात् ॥
निरन्तरैः पाणिघातैः समुदायानुकारितम् ॥
वादको दर्शयेद्वाद्ये यत्रौघं तं प्रचक्षते ॥ १७२ ॥

इत्योघः।

एकविंशतितन्त्रीस्थमेतद्वात्वादिवादनम् ॥
एकतन्त्र्यादिवीणासु यथायोगं प्रवर्तयेत् ॥ १७३ ॥
एकतन्त्र्यां च यत्प्रोक्तं तज्ज्ञेयं नकुलादिषु ॥
वेणावपि तदिच्छन्ति वेणुप्रावीण्यशालिनः ॥ १७३ ॥

इति गीतानुगं वाद्यम्।

॥ १७२ ॥ १७३ ॥ १७४ ॥

इति गीतानुगवाद्यलक्षणम्।

---

एवं गीतानुगवाद्यप्रसङ्गाद्बुद्ध्यारूढान्संगीतवाद्यभेदाल्लँक्षयितुमाह—

भेदान्निर्गीतवाद्यस्य वैणस्याथ प्रचक्ष्महे ॥ १७५ ॥

**भेदान्निर्गीतवाद्यस्येत्यादिना**। अथानन्तरम्। **वैणस्येति**। वीणायाः संबन्धी वैणस्तस्य ॥ १७५ ॥

निर्गीतवाद्यभेदानुद्दिशति—

आश्रावणाऽऽरम्भविधिर्वक्त्रपाणिस्ततः परम् ॥
संखोटना चतुर्थी च पञ्चमी परिघट्टना ॥ १७६ ॥
मार्गासारितकं लीलाकृतमासारितत्रयम् ॥
दशेति शुष्कवाद्यानि तल्लक्ष्म व्याहरेऽधुना ॥ १७७ ॥

**आश्रावणेत्यादि**। **आसारितत्रयमिति**। ज्येष्ठं मध्यं कनिष्ठमित्यर्थः। **निर्गीत-वाद्यान्येव** शुष्कवाद्यानीत्युच्यन्ते ॥ १७६ ॥ १७७ ॥

विस्तारधातुभेदानामादिमं द्विः प्रयुज्यते ॥
द्वितीयं च प्रयुज्य द्विराद्यं भेदं द्वितीयकम् ॥ १७८ ॥
लीनाकृतिं द्विरुच्चार्य तद्वद्युग्मान्तराण्यपि ॥
प्राक्प्राग्युग्मोत्तरादीनि प्रयुञ्जीत तदा भवेत् ॥ १७९ ॥
आश्रावणं शुष्कवाद्यमत्र त्वाह विशाखिलः ॥
विस्तारधातुभेदानां प्रयोगे द्रुतरूपताम् ॥ १८० ॥

विस्तारधातुभेदानां चतुर्दशानामादिमं विस्तारजं नाम भेदं द्विर्द्विवारं प्रयुज्य।

---

१ च. 'न्त्रीणामे'। २ ङ. 'तद्वाद्यादि'।

द्वितीयं च द्विरुत्तराख्यमपि द्विः प्रयुज्याऽऽद्यं भेदं विस्तारजं द्वितीयकं द्विरुत्तरं लीनाकृतिमन्तर्भूताकारं द्विरुच्चार्य । **तद्वद्भेदा(युग्मा)न्तराण्यपि प्राक्प्राग्युग्मोत्तरादीनीति** । अयमर्थः । प्रथमद्वितीयभेदौ प्राग्युग्मम् । तदुत्तरस्तृतीयो भेदो द्विरु[त्त]राख्यं स आदिर्येस्य युग्मस्य तत्तथोक्तम् (येषां युग्मानां तानि तथोक्तानि) । तृतीयचतुर्थौ द्वितीयं युग्मम् । एवं पञ्चमषष्ठौ तृतीयं युग्मम् । सप्तमाष्टमौ चतुर्थं युग्मम् । एवं सप्त युग्मानि प्रयुञ्जीत चेत्तदाऽऽश्रावणा नाम शुष्कवाद्यभेदो भवति । विशाखिलो नामाऽऽचार्यः । द्रुतरूपतां द्रुतलघुयुक्तस्वरूपम् ॥ १७८ ॥ १७९ ॥ ॥ १८० ॥

प्रसङ्गादाश्रवणायां ध्रुवां लक्षयति—

**आद्यखण्डे यदाऽऽद्यौ(द्यौ) द्वावेकादशचतुर्दशौ ॥**
**वर्णः पञ्चदशस्तद्वच्चतुर्विंशो गुरुर्भवेत् ॥ १८१ ॥**

**आद्यखण्ड इत्यादि** । **आद्यौ द्वाविति** । प्रथमद्वितीयावित्यर्थः ॥ १८१ ॥

**लघवोऽष्टादशान्ये स्युरेवं खण्डे द्वितीयके ॥ १८२ ॥**

**लघवोऽष्टादशान्ये स्युरिति** । परिशेषवचनेनाऽऽद्यखण्डे चतुर्विंशतिवर्णके । तत्र प्रथमद्वितीयैकादशचतुर्दशपञ्चदशचतुर्विंशाः षड्गुरवः । इतरेऽष्टादश लघवः । **एवं खण्डे द्वितीयक इति** । तत्रापि वर्णसंख्या गुरुलघुसंनिवेशश्चाऽऽद्यखण्डवत्कर्तव्य इत्यर्थः ॥ १८२ ॥

**तृतीये तु तृतीयो गोऽष्टमपञ्चदशौ तथा ॥**
**शेषा द्वादश लाः खण्डैस्त्रिभिरेवं ध्रुवा भवेत् ॥**
**आश्रावणायां गेया सा सूरिभिः सिद्धिमीप्सुभिः ॥ १८३ ॥**

**तृतीये त्विति** । तृतीये खण्डे तु तृतीयो गः । तृतीयो वर्णो गुरुः कर्तव्यः । **अष्टमपञ्चदशौ तथेति** । गुरू कर्तव्यावित्यर्थः । शेषा द्वादश ला इत्यनेनास्य खण्डस्य पञ्चदशवर्णात्मकत्वं दर्शितं भवति । **सिद्धिमीप्सुभिरिति** । दृष्टादृष्टफलकाङ्क्षिभिरित्यर्थः ॥ १८३ ॥

**वक्ष्यामहे मुनिमतादस्यां पातकलाविधिम् ॥**
**द्वाविंशतिः(तिं) कला(लाः) केचित्केऽप्यष्टाविंशतिः(तिं)कलाः ॥१८४॥**
**अन्ये द्वात्रिंशतिं(तं) प्राहुस्तत्रैवं तालयोजना ॥ १८५ ॥**

अस्यामाश्रावणायां पातकलाविधिमाह—**वक्ष्यामह इत्यादिना** । तत्र द्वाविंशतिकलापक्षे ॥ १८४ ॥ १८५ ॥

**शम्पात्रयं ततस्तालास्त्रयोऽत्रानागतग्रहे ॥**
**ततः समग्रहे शम्याद्वयं तालद्वयं तथा ॥ १८६ ॥**

**शम्पात्रयमिति।** आद्यासु तिसृषु कलासु शम्पात्रयं योजयेत्। **ततस्तालास्त्रय इति।** ततश्चतुर्थ्यादिषु तिसृषु कलासु त्रयस्ताला योज्याः। **अनागतग्रह इति।** गीतादिकं किंचित्प्रथमं तालरहितमारभ्यानन्तरमेताः षट्कलाः प्रयोक्तव्या इत्यर्थः। **समग्रह इत्यादि।** ततः सप्तम्यादिषु चतसृषु कलासु शम्पाद्वयं तालद्वयं च योजयेत्। **समग्रह इति।** समकाल इत्यर्थः॥ १८६॥

**ततोऽतीतग्रहे शम्पातालौ द्वादश ताः कलाः॥**
**यथाक्षरस्योत्तरस्य षट्चतस्रस्तु युग्मजाः॥**
**कला द्वाविंशतावेवमथाष्टाविंशतौ विधिः॥ १८७॥**

**ततोऽतीतग्रह इत्यादि।** तत एकादशीद्वादश्योः कलयोः शम्पातालौ योजयेत्। **अतीतग्रह इति।** गीतादेः पूर्वमेव तालस्य किंचित्प्रवृत्तावित्यर्थः। एवं द्वादश कलाः प्रयुज्यानन्तरम्। **यथाक्षरस्योत्तरस्य षडिति।** त्रयोदश्यादिष्ववशिष्टासु दशसु कलासु मध्य आद्यासु षट्सु संताशताशता योज्या इत्यर्थः। **चतस्रस्तु युग्मजा इति।** एकोनविंशाद्यासु चतसृषु संशताशाः प्रयोज्या इत्यर्थः। एवं कला द्वाविंशतौ पातकलाविधिः कर्तव्यः। अष्टाविंशतिकलापक्षे पातकलाविधिं दर्शयितु-माह—**अथाष्टाविंशतावित्यादि**॥ १८७॥

**द्वादशात्र कलाः प्राग्वद्विकलोत्तरवत्ततः॥**
**कला द्वादश शेषास्तु स्युरेककलयुग्मवत्॥ १८८॥**
**अथ द्वाविंशतिः प्राच्याः स्युश्चतुर्विंशतिः कलाः॥**
**द्वितीयपक्षवत्प्रान्ते त्वष्टौ द्विकलयुग्मवत्॥ १८९॥**

**द्वादशात्र कलाः प्राग्वदिति।** प्राग्वदत्र द्वाविंशतिकलापक्षवदाद्यासु द्वादशकलासु शम्पादयः पूर्वोक्ता द्वादश पातकला योज्याः। ततस्त्रयोदश्यादिषु कलासु। **द्विकलोत्तरवदिति।** निप्रता शनिता निशता प्रनिसमिति द्वादश पातकला योज्याः। **शेषा इति।** पञ्चविंश्यादयश्चतस्रः। **एककलयुग्मवदिति।** निर(श)-निताशप्रनिसाः प्रयोज्या इत्यर्थः॥ १८८॥ १८९॥

**एषु त्रिष्वपि पक्षेषूत्तरश्चच्चत्पुटस्तथा॥**
**अतीतेन ग्रहेण स्याद्विदारीरथ कीर्तये॥ १९०॥**

आश्रावणायां तत्तन्मतभेदेन विदारीं दर्शयितुमाह—**विदारीरथेत्यादिना।** विदारी गीतखण्डमिति प्रागुक्तम्। अत्र वाद्यखण्डमिति द्रष्टव्यम्। विस्पष्टार्थो ग्रन्थः॥१९०॥

**शम्पात्रयेण प्रथमा परा तालत्रयेण तु॥**
**शम्पाद्वया तृतीया स्यात्तुर्या तालद्वयेन तु॥ १९१॥**

---

१ ख. ग. 'ली द्वौ दश।

पञ्चमी शम्पातालाभ्यां षष्ठी स्यात्पञ्चपाणिना ॥
चच्चत्पुटा सप्तमी स्यात्तास्तिस्रो मन्वते परे ॥ १९२ ॥
यथाक्षरस्य युग्मस्य द्विरावृत्त्या विदारिका ॥
आद्या तथा द्वितीया स्यात्तयोरन्ते कलाद्वयम् ॥ १९३ ॥
एवमष्टादश कलास्ततो युग्माद्यथाक्षरात् ॥
विदारी स्यात्तृतीयाऽन्ये विदारीरन्यथा जगुः ॥ १९४ ॥
[*आद्या द्विकलयुग्मेन द्वितीया च तथा भवेत् ॥
यथाक्षरेणोत्तरेण तृतीयाऽन्येऽन्यथा जगुः ] ॥ १९५ ॥
पूर्वोक्ता द्वादश कला विदार्याद्या परा पुनः ॥
यथाक्षरेणोत्तरेण शेषा युग्माद्यथाक्षरात् ॥
एवमाश्रावणामाह [1]श्रीमान्यज्ञपुराग्रणीः ॥ १९६ ॥

इत्याश्रावणा ।

॥ १९१ ॥ १९२ ॥ १९३ ॥ १९४ ॥ १९५ ॥ १९६ ॥

इत्याश्रावणा ।

---

अथाऽऽरम्भविधिं दर्शयति—

स्युरारोहावरोहाभ्यां युक्ता विस्तारधातुजाः ॥
भेदास्तलेन रिभितह्रादाभ्यां मिश्रिताः क्रमात् ॥ १९७ ॥

स्युरारोहावरोहाभ्यामित्यादि । विस्तारधातुजा भेदा इति । विस्तारजादयश्चतुर्दश । तलेनेति । व्यञ्जनधातुभेदेन । रिभितह्रादाभ्यामिति । करणधातुभेदाभ्याम् । क्रमान्मिश्रिता इति । प्रथमं तलेनानन्तरं रिभितेन तदनन्तरं ह्रादेन मिश्रिताः सन्त आरोहावरोहाभ्यां प्रत्येकं प्रयुक्ताः स्युः ॥ १९७ ॥

ततः करणभेदं द्विस्त्रिर्वाऽभ्यस्य विलीनवत् ॥ १९८ ॥
बहुलेन प्रयुक्ते चैकविस्तारे पुनस्तथा ॥
द्विरभ्यस्येदेवमेव करणस्य भिदाः पराः ॥ १९९ ॥
यत्राऽऽरम्भविधिः स स्यादथ तस्य ध्रुवां ब्रुवे ॥
गुरवोऽष्टौ द्वादशाथ लघवः पञ्च गा इति ॥ २०० ॥
पञ्चविंशत्यक्षरं स्यादाद्यखण्डं ततः परम् ॥
लघवोऽष्टौ गुरुर्लाश्च चत्वारो गश्चतुर्लघुः ॥ २०१ ॥

---

* अयं श्लोकः ख. ग. पुस्तकयोर्न विद्यते ।

---

१ ख. ग. श्रीमच्छार्ङ्गपु° ।

गश्चेत्येकोनविंशत्या वर्णैः खण्डं द्वितीयकम् ॥
यस्यास्तृतीयखण्डेऽष्टौ ला गोऽन्ते स्याद्ध्रुवाऽत्र सा ॥ २०२ ॥
एकविंशे गुरौ कार्या विश्रान्तिः पूर्वखण्डके ॥
द्वितीयखण्डे विश्राम्येद्गुरौ वर्णे चतुर्दशे ॥ २०३ ॥

**करणभेदमिति** । रिभितादिषु पञ्चस्वेकं द्विस्त्रिर्वाऽभ्यस्य । **विलीनवद्बहुलेनेति** । स्वरैकीकरणप्रचुरेणेत्यर्थः । तादृशेन प्रयोगेणैकविस्तार एकविस्तारापरपर्याये विस्तारजनाम्नि विस्तारधातुभेदे पुनर्भूयोऽपि प्रयुक्ते सति । **पराः करणस्य भिदा इति** । प्रथमप्रयुक्ताद्भेदादन्यान्भेदानित्यर्थः । **एवमेवेति** । एकविस्तारयोगेणेत्यर्थः । द्विरभ्यस्येद्यत्र वाद्यविधौ स आरम्भविधिः स्यात् । तस्याऽऽरम्भस्य ध्रुवां दर्शयति— **अथ तस्येत्यादि** ॥ १९८ ॥ १९९ ॥ २०० ॥ २०१ ॥ २०२ ॥ २०३ ॥

स्याद्द्वादशकलं खण्डमाद्यमन्यत्तु षट्कलम् ॥
चतुष्कलं तृतीयं स्यादथ तालोऽत्र कथ्यते ॥ २०४ ॥
तालत्रयं च शम्पैका तालौ द्वौ शम्पयोर्द्वयम् ॥
द्वौ तालौ संनिपातौ द्वावित्याद्ये शकले कलाः ॥ २०५ ॥
यथाक्षरस्योत्तरस्य क्रमाच्चच्चत्पुटस्य च ॥
कला भवन्ति शकले द्वितीये च तृतीयके ॥ २०६ ॥

इत्यारम्भविधिः।

द्वादशकलं खण्डं पञ्चविंशतिवर्णात्मकं द्वादशकलं स्यात् । अन्यत्त्वेकोनविंशतिवर्णात्मकं द्वितीयखण्डं तु षट्कलं स्यात् । तृतीयं नववर्णात्मकं खण्डं चतुष्कलं स्यादिति । अत्र लघुगुर्वात्मकान्वर्णान्पञ्चलघ्वक्षरोच्चारमितासु कलासु सलयं योजयेदित्यर्थः । सुगममन्यत् ॥ २०४ ॥ २०५ ॥ २०६ ॥

इत्यारम्भविधिः।

---

बहुलाविद्धकरण(णः) स्तोकव्यञ्जनधातुकः ॥
विस्तारधातुना हीनो वक्त्रपाणिः प्रकीर्तितः ॥ २०७ ॥

अथ वक्त्रपाणिं लक्षयति—बहुलाविद्धेत्यादि ॥ २०७ ॥

मुखप्रतिमुखे स्यातां तालाङ्गे द्वे च नाथवा ॥
प्रवृत्तं चैककं वर्णाङ्गमत्राथ ब्रुवे ध्रुवाम् ॥ २०८ ॥

अत्र वक्त्रपाणौ मुखप्रतिमुखे नाम तालाङ्गे विकल्पेन स्यातां प्रवृत्तमेककं वा वर्णाङ्गमेकं स्यात् ॥ २०८ ॥

गुरवः पञ्च लाः षट् च गुरवः षड्लघुद्वयम् ॥ २०९ ॥

चत्वारो गास्तथा लाः स्युस्त्रयो गा लघवोऽष्ट च ॥
यत्र स्याद्गुरुरन्ते सा वक्त्रपाणौ ध्रुवा भवेत् ॥ १० ॥

अथ ध्रुवामाह—लघ(गुर)वः पञ्चेत्यादि ॥ २०९ ॥ २१० ॥

या मात्रा वस्तुनोऽन्त्या स्याद्द्विकले मद्रके स्थिता ॥
तस्यास्तालोऽत्र कर्तव्यः कलास्वष्टासु तन्मुखम् ॥ २११ ॥

**या मात्रेत्यादि** । द्विकलमद्रके वस्तुत(न)श्चतुर्विंशतिकलात्मकस्यान्ते या मात्रा स्थितांऽशकलात्मिका । **तस्यास्तालोऽत्र कर्तव्य इति** । शताताशतासम्, इति वक्त्रपाणौ ध्रुवाया आद्यास्त्वष्टादशसु कलासु कर्तव्यो भवति । **तन्मुखमिति** । तालाङ्गं भवति ॥ २११ ॥

मतान्तरेण प्रतिमुखं दर्शयति—

अथ प्रतिमुखं कार्यं चतुरावृत्तियोगिना ॥
उत्तरेणापरेत्याहुः पूर्वोक्तो यः कलाष्टकः ॥
सोऽत्र कार्यस्त्रिरावृत्तो मात्रया तु विदारिका ॥ २१२ ॥

इति वक्त्रपाणिः ।

**अथ प्रतिमुखमित्यादि** । **चतुरावृत्तियोगिनेति** । चतसृणामावृत्तीनां योगोऽस्यास्तीति चतुरावृत्तियोगी तेनोत्तरेण षट्पितापुत्रकेण । स्वमतेन प्रतिमुखं दर्शयति—अत्र प्रतिमुखे । **पूर्वोक्त इति** । शताताशतासमिति । एवं त्रिवारमावृत्तः कार्यः । **मात्रया तु विदारिकेति** । मात्रयाऽष्टकलात्मिकया ॥ २१२ ॥

इति वक्त्रपाणिः ।

---

अथ संखोटनां लक्षयति—

अङ्गुष्ठाभ्यां च तर्जन्या तन्त्रीं निष्पीड्य वादयन् ॥
विन्दुं मिथो मेलयेत वादिसंवादिनौ स्वरौ ॥
बहुधा तद्गुणत्वेन प्रयुञ्जीतानुवादिनः ॥ २१३ ॥

**अङ्गुष्ठाभ्यामित्यादि** । विन्दुं व्यञ्जनधातुभेदं वादये(य)[न्नि]ति पूर्वेण संबन्धः । **वादिसंवादिनौ स्वरौ मिथो मेलयेतेति** । षड्जपञ्चमावृषभधैवतौ गान्धारनिषादावन्यौ वा स्वरौ विकृतावस्थौ द्वादशभिरष्टभिर्वा श्रुतिभिरन्तरितौ मिथः संगत्या संवादयेदित्यर्थः । **तद्गुणत्वेनेति** । तयोर्वादिनोर्गुणत्वेनोपसर्जनत्वेन । अनुवादिनः स्वरान्प्रयोगे बहुधा प्रयुञ्जीतेति । वादिनं वा स्थायिनं कृत्वा तत्परिवारत्वेनानुवादिनः प्रयुञ्जीतेत्यर्थः ॥ २१३ ॥

---

१ च. 'क्तोऽष्टकलाविधिः । सो° ।

**विवादिनोऽल्पकान्कुर्याद्विस्तारस्य भिदास्तथा ॥ २१४ ॥**
**धात्वन्तरैर्मिश्रयित्वाऽभ्यस्येद्विस्त्रिः पृथक्ततः ॥**
**केवलास्ताः प्रयुज्य द्विस्तासु मग्नानिवापरान् ॥**
**धातून्यत्र प्रयुञ्जीत प्राहुः संखोटनाममूम् ॥ २१५ ॥**

**विवादिनोऽल्पकान्कुर्यादिति** । यस्मिन्प्रयोगे यो विवादी स्वरस्तमनभ्यस्तं लङ्घितं वा कुर्यादित्यर्थः । **विस्तारस्य भिदा इति** । विस्तारजादींश्चतुर्दश विस्तारधातुभेदान्धात्वन्तरैः करणादिधातुभेदैरित्यर्थः । **मिश्रयित्वेति** । संकीर्णान्कृत्वेत्यर्थः । द्विस्त्रिर्वा पृथगभ्यसेदित्यर्थः । ततोऽनन्तरं ता विस्तारस्य भिदाः केवला धात्वन्तरामिश्रा द्विस्त्रिर्वा प्रयुज्य तासु मग्नानिव लीनानिवापरान्धातून्करणादिधातुभेदान्यत्र प्रयुञ्जीताममूं संखोटनां नाम निर्गीतवाद्यभेदं प्राहुः ॥ २१४ ॥ २१५ ॥

**गुरू द्वौ लघवोऽष्टौ च द्वौ गुरू च लघुर्गुरुः ॥**
**यत्र द्वादश ला गोऽन्ते सा स्यात्संखोटनाध्रुवा ॥ २१६ ॥**

अत्र ध्रुवामाह—**गुरू द्वावित्यादि** ॥ २१६ ॥

**यथाक्षरद्विकलयोः स्युरत्रोत्तरयोः कलाः ॥**
**नात्र संख्या विदारीणां भणिता भरतादिभिः ॥ २१७ ॥**

**इति संखोटना ।**

**यथाक्षरद्विकलयोरित्यादि** । अयमर्थः । सप्तविंशत्यक्षरात्मिकायां संखोटनाध्रुवायां यथाक्षरस्य षट्पितापुत्रस्य कलाः संताशताशता द्विकलस्य तस्यैव कला निप्रता शनितानि शताप्रनिसमित्येता यथायोगं प्रयोज्या इति । सुगममन्यत् ॥ २१७ ॥

**इति संखोटना ।**

---

अथ परिघट्टनां लक्षयति—

**भेदा व्यञ्जनधातूत्था भेदैः करणधातुजैः ॥ २१८ ॥**
**चित्रिता ललिताः स्निग्धाः क्रियन्ते करलाघवात् ॥**
**आरोहबहुला यस्यां तामाहुः परिघट्टनाम् ॥ २१९ ॥**

**भेदा इत्यादि** । व्यञ्जनधातूत्थाः पुष्पादयो दश भेदाः । **करणधातुजैरिति** । घातादिभिः पञ्चभिर्भेदैः । **चित्रिता इति** । यथायोगं मिश्रणेन रूपान्तरं प्रापिता इत्यर्थः । आरोहबहुलाः । आरोहिवर्णेन प्रचुराः ॥ २१८ ॥ २१९ ॥

**गुरूण्यष्टौ च लघवः स्युश्चतुर्विंशतिर्गुरू ॥**
**द्वौ षोडश लघून्यन्ते गुरुर्यत्र ध्रुवाऽत्र सा ॥ २२० ॥**

तत्र ध्रुवामाह—**गुरूण्यष्टेत्यादि** ॥ २२० ॥

संपक्केष्टाकवद्यद्वा स्युः संपिष्टकवत्कलाः ॥
संपिष्टके कलाः प्रोक्ता दश द्वादश वा पुरा ॥ २२१ ॥
संपिष्टककलास्त्वत्र द्वादशैवेति संमतम् ॥
द्वादशानां दशानां च प्राहुरन्ये समुच्चयम् ॥ २२२ ॥
संपक्केष्टाकतालं च द्विकलीकृत्य केचन ॥
तद्द्वादशकला तालयोगमत्र प्रचक्षते ॥ २२३ ॥
यथाक्षरद्विकलयोः संपक्केष्टाकयोरिह ॥
अष्टादश कलाः केचिदाचक्षत समुच्चिताः ॥ २२४ ॥

इति परिघट्टना ।

तस्याः पातकलायोगं दर्शयति—संपक्केष्टाकवदित्यादि । स्पष्टार्थो ग्रन्थः ॥२२१॥ ॥ २२२ ॥ २२३ ॥ २२४ ॥

इति परिघट्टना ।

---

अथ मार्गासारितं लक्षयति—

विस्ताराविद्धकरणभेदमिश्रप्रयोगतः ॥
यथा कलतलाख्याभ्यां मार्गासारितकं भवेत् ॥
अन्ये कलतलोन्मिश्रकरणं लक्ष्म चक्षते ॥ २२५ ॥

विस्ताराविद्धेत्यादि । कलतलाख्याभ्यां व्यञ्जनधातुभेदाभ्याम् ॥ २२५ ॥

गाश्चत्वारो लघून्यष्टौ गौ द्वावष्टौ लघून्यथ ॥ २२६ ॥
गौ ल इत्याद्यखण्डं स्यादेवं खण्डद्वयं परम् ॥
यस्यामसौ ध्रुवा ज्ञेया मार्गासारितसंश्रया ॥ २२७ ॥

तत्र ध्रुवामाह—गाश्चत्वार इत्यादि ॥ २२६ ॥ २२७ ॥

तस्यां पातकलायोगं दर्शयति—

एकं चच्चत्पुटे खण्डमुत्तरे शकलद्वयम् ॥
कनिष्ठासारितोक्तेन कार्यस्तालकलाविधिः ॥ २२८ ॥

इति मार्गासारितम् ।

एकं चच्चत्पुट इत्यादि । कनिष्ठासारितोक्तेनेति ।

"कनिष्ठासारिते युग्मः शम्यादिर्द्वावथोत्तरौ ।
एते यथाक्षरास्तेषां संनिपातोऽन्तिमोऽधिकः" ॥

इति पूर्वोक्तमत्रानुसंधेयम् ॥ २२८ ॥

इति मार्गासारितम् ।

---

अथ लीलाकृतं नाम निर्गीतवाद्यं लक्षयति—

**प्रयोगोऽभिसृतस्य स्यात्तथा परिसृतस्य चेत् ॥**
**तथा लयान्तरगतौ(तो) वाद्यतालकलाविधौ ॥**
**माधुर्यं सौकुमार्यं च तदा लीलाकृतं भवेत् ॥ २२९ ॥**

**प्रयोगोऽभिसृतस्येत्यादि** । अभिसृतस्य परिसृतस्य च । **प्रयोगस्तथा लयान्तरेति** । प्रयोगश्च वाद्यतालकलाविधौ स्यात् । माधुर्यसौकुमार्यं यतः स्यात्ततो लीलाकृतमित्यर्थः ॥ २२९ ॥

**षड्जग्रामस्थजात्यंशे यद्गीतं वार्तिके पथि ॥**
**आसारितं तदेवोक्तं धीरैरभिसृताह्वयम् ॥ २३० ॥**

अभिसृतस्य स्वरूपमाह—**षड्जग्रामस्येत्यादि** ॥ २३० ॥

**जात्यंशे मध्यमग्रामसंस्थे परिसृतं त्विदम् ॥ २३१ ॥**

परिसृतस्य स्वरूपमाह—**जात्यंश इत्यादि** ॥ २३१ ॥

तयोरेव मतान्तरेण स्वरूपमाह—

**अन्ये तु माषघातादिसप्ताङ्गमपरान्तकम् ॥ २३२ ॥**
**ब्रुवतेऽभिसृतं तत्तु प्रदानादिनवाङ्गकम् ॥**
**प्राहुः परिसृतं मृग्यं तालाध्याये लयान्तरम् ॥ २३३ ॥**

**अन्ये त्वित्यादि** । माषघातादीनि सप्ताङ्गानि यस्येति तत्तथोक्तम् । प्रदानादीनि नवाङ्गकानि यस्येति तत्तथोक्तम् । तदित्यपरान्तकं परामृश्यते । **लयान्तरं तालाध्याये मृग्यमिति** । तत्र हि तद्वल्लयान्तरं मार्गलयाभ्यां द्विगुणं तत इति कनिष्ठासारितद्वैगुण्येनोक्त आसारितभेदो द्रष्टव्यः ॥ २३२ ॥ २३३ ॥

**गीतकत्रयसंयोगादेवं लीलाकृतं त्रिधा ॥**
**प्रयोगौ द्वौ पदैश्चास्य(न्यः) सार्थकैश्च निरर्थकैः ॥ २३४ ॥**

**गीतकत्रयसंयोगादिति** । अभिसृतपरिसृतलयान्तराख्यस्य गीतकत्रयस्य प्रयोगात् । अस्य लीलाकृतस्य द्वौ प्रयोगावभिसृतपरिसृताख्यौ साध(र्थ)कैर्वाचकलक्षकव्यञ्जकैः पदैर्भवतः । अन्यस्तृतीयः प्रयोगो लयान्तराख्यो निरर्थकैस्तेनंतेनादिभिरनुकरणशब्दैर्वा भवन्ति ॥ २३४ ॥

**वीणावाद्यं मानतालयुक्तं शम्पादिवर्जितम् ॥**
**आहुरेके मानहीनमपि त्वाह विशाखिलः ॥ २३५ ॥**

अत्र वाद्ये मानयोगविषये मतभेदान्दर्शयति—**वीणावाद्यमित्यादि** ॥ २३५ ॥

**ध्रुवायां तूभयस्तालः परैस्त्वनियमात्मकः ॥ २३६ ॥**

इति लीलाकृतम् ।

ध्रुवायां तूभयस्ताल इति । अपरान्तकासारितात्मिकायां लीलाकृतध्रुवायामुभय-स्तालश्चतुरस्रत्र्यस्रश्च ॥ २३६ ॥

इति लीलाकृतम् ।

---

अथाऽऽसारितत्रयं लक्षयति—

आसारितत्रयं पूर्वं तालाध्याये निरूपितम् ॥
यथाक्षरं द्विसंख्यातं त्रिसंख्यातमिति त्रिधा ॥ २३७ ॥
प्रत्येकं तस्य चाऽऽवृत्तिर्वर्णालंकारशोभना ॥
वृत्तित्रयेण वाद्यैश्च तत्त्वाद्यैः करणेन च ॥
धातुना चित्रिता कार्या बुधैर्वीणाविधाविह ॥ २३८ ॥

इत्यासारितत्रयम् ।

इति नकुलादिपञ्चवीणालक्षणम् ।

आसारितत्रयमित्यादि । तस्याऽऽसारितत्रयस्य वर्णालंकारशोभना (नाऽऽ)-[वृत्तिः]। वृत्तित्रयेण चित्रावृत्तिदक्षिणानां त्रयेण । न(त)त्त्वाद्यैस्तत्त्वौघानुगतैः । करणेन करणधातुना प्रत्येकमष्टाभिः कर्तव्येत्यर्थः ॥ २३७ ॥ २३८ ॥

इत्यासारितत्रयम् ।

इति दशविधशुष्कवाद्यलक्षणानि ।

---

आलापिनीगतं लक्ष्म वक्ष्ये लक्ष्यविदां मतम् ॥
नवमुष्टिमितो दैर्घ्ये वैणवः सुषिरान्तरः ॥ २३९ ॥

आलापिन्याः किंनरीभेदानां लघ्वादीनां च लक्षणानि विस्पष्टार्थत्वाद्ग्रन्थत एवाव-गन्तव्यानि ॥ २३९ ॥

अङ्गुलद्वंद्वपरिधिः प्राग्वद्ग्रन्थ्यादिवर्जितः ॥
श्लक्ष्णः समः सुवृत्तश्च दण्डः स्यात्ककुभं दधत् ॥ २४० ॥
अङ्गुलद्वयविस्तारमङ्गुलार्धायतं तथा ॥
तदर्धं पिण्डसंयुक्तमुन्मुखं पत्रिकोज्झितम् ॥ २४१ ॥
एकदण्डमधोभागे शङ्कुना तु विराजितम् ॥
चतुरङ्गुलदैर्घ्येण बहिर्मध्योन्नतेन च ॥ २४२ ॥
तस्य तुम्बं परीणाहे द्वादशाङ्गुलसंमितम् ॥
चतुरङ्गुलवक्त्रं च दन्तनाभिसमन्वितम् ॥ २४३ ॥

॥ २४० ॥ २४१ ॥ २४२ ॥ २४३ ॥

अग्रादधस्तात्पादोने मुष्टियुग्मे निबध्यते ॥
अत्र मेषान्त्रतन्त्री स्यात्सूक्ष्मा श्लक्ष्णा समा दृढा ॥ २४४ ॥
कर्परं नारिकेलोत्थं दोरको दोरिकास्तथा ॥
त्रीण्येतानि निबध्यन्ते यत्र साऽऽलापिनी मता ॥ २४५ ॥
दशमुष्टिमितं दण्डमत्राऽऽहुः खादिरं परे ॥
पट्टसूत्रमयीं तन्त्रीं यद्वा कार्पाससूत्रजाम् ॥ २४६ ॥
रक्तचन्दनजान्सर्वान्वीणादण्डान्परे जगुः ॥
दशमुष्ट्यधिकं मानं क्वचिल्लक्ष्येषु दृश्यते ॥ २४७ ॥
तुम्बं वक्षसि निक्षिप्य वामाङ्गुष्ठेन तस्य च ॥
मूलमुत्पीड्य धृत्वा तामथ मध्यमया सुधीः ॥ २४८ ॥
दक्षिणस्यानामया वा वादयेद्विन्दुधातुवत् ॥
बिन्दुहस्तेन वा मन्द्रे मध्ये तारे च वादयेत् ॥ २४९ ॥
त्रयस्तु दक्षिणात्पाणेश्चत्वारो ना(वा)मतः स्वराः ॥
इत्युक्तं कैश्चिदाचार्यैरपरे त्वन्यथा जगुः ॥ २५० ॥
मध्यमो मुक्तया तन्त्र्या तर्जन्याद्यङ्गुलीत्रयात् ॥
वामस्यानामिकावर्ज्यास्त्र(त्र)यः स्युः पञ्चमादयः ॥ २५१ ॥
मुक्ततन्त्र्याऽथ षड्जः स्यादृषभस्तर्जनीभवः ॥
गान्धारो मध्यमाङ्गुल्या दक्षिणेनाथ वादनम् ॥ २५२ ॥
आरोहेणावरोहेण सप्तकद्वितये भवेत् ॥
एभिः स्वरैर्विरचितं विचित्रं रागमालपेत् ॥ २५३ ॥
गायेद्गीतं निबद्धं च प्रवीणो वीणयाऽनया ॥
इदमालापिनीलक्ष्म श्रीनिःशङ्केन कीर्तितम् ॥ २५४ ॥

इत्यालापिनीलक्षणम् ।

---

किंनरी द्विविधा लघ्वी बृहती चेति कीर्तिता ॥
तत्र लघ्वीगतं लक्ष्म सांप्रतं प्रतिपाद्यते ॥ २५५ ॥
स्याद्वितस्तित्रयं दैर्घ्ये मानं पञ्चाङ्गुलाधिकम् ॥
पञ्चाङ्गुलः परीणाहो वेणुदण्डस्य यत्र च ॥ २५६ ॥

॥ २४४ ॥ २४५ ॥ २४६ ॥ २४७ ॥ २४८ ॥ २४९ ॥ २५० ॥ २५१ ॥
॥ २५२ ॥ २५३ ॥ २५४ ॥ २५५ ॥ २५६ ॥

---

१ घ. च. नालिकेरोत्थं । २ घ. ङ. च. °नि न विद्यन्ते ।

गर्भेऽस्य व्यापकं रन्ध्रं ककुभः शाकदारुजः ॥
सार्धत्र्यङ्गुलविस्तारो दैर्घ्ये पञ्चाङ्गुलश्च सः ॥ २५७ ॥
तस्मादर्धाङ्गुलन्यूना दैर्घ्यविस्तारयोर्भवेत् ॥
मध्ये कूर्मोन्नता लौही पत्रिका ककुभस्थिता ॥ २५८ ॥
गृध्रवक्षोऽस्थिनलिका कनिष्ठाङ्गुलिसंमिता ॥
लौही कांस्यमयी यद्वा कीर्तिता सारिकाख्यया ॥ २५९ ॥
श्लिष्टा वस्त्रमंषीमिश्रमदनेन चतुर्दश ॥
चतुर्दशस्वरस्थाने दण्डपृष्ठे निवेशयेत् ॥ २६० ॥
सप्तकस्य द्वितीयस्य यो निषादो भवेदधः ॥
तस्य स्थाने भवेदाद्या सारिकाऽन्योर्ध्वमङ्गुलात् ॥ २६१ ॥
स्थापयेदन्तरे किंचित्किंचित्पूर्वाधिके परा ॥
त्र्यङ्गुलावध्यष्टमीं तु पूर्वस्यात्र्यङ्गुलान्तरे ॥ २६२ ॥
स्थापयित्वा पराः षट्च पूर्वपूर्वाधिकान्तरे ॥
चतुरङ्गुलपर्यन्तं सारिकाः संनिवेशयेत् ॥ २६३ ॥
तुम्बं दण्डस्य ककुभस्याधःसंधौ निवेशयेत् ॥
तृतीयतुर्यसार्योस्तु मध्येऽधस्ताद्द्वितीयकम् ॥ २६४ ॥
पूर्वस्मादपरं तुम्बं विस्तारेऽभ्यधिकं मनाक् ॥
दण्डाग्राद्त्र्यङ्गुलेऽधस्ताद्रन्ध्रं कृत्वाऽथ निक्षिपेत् ॥ २६५ ॥
चलशङ्कुं गले रन्ध्रं दधमानमतोऽङ्गुलात् ॥
अधस्तादङ्गुलोत्सेधं मेढकं बाणपुङ्खवत् ॥ २६६ ॥
कृत्वा ततोऽग्रतः किंचित्स्थिरशङ्कुं निवेशयेत् ॥
ततो लोहमयीं श्लक्ष्णां वर्तुलां च समां दृढाम् ॥ २६७ ॥
गजकेशोपमां तन्त्रीं निबध्य ककुभे दृढम् ॥
सारिकामस्तकन्यस्तामानीतां मेढकोपरि ॥ २६८ ॥
लग्नां द्वितीयप्रान्तेन वेष्टयेच्चलकीलके ॥
शङ्कुं तं भ्रामयेत्तावद्यावत्तन्त्री दृढा भवेत् ॥ २६९ ॥
भ्रामणं वैपरीत्येन तन्त्रीशैथिल्यकारणम् ॥
+तन्त्रीदार्ढ्येऽथ(?) दार्ढ्याय चलशङ्कोर्गलस्थिते ॥ २७० ॥

॥ २५७ ॥ २५८ ॥ २५९ ॥ २६० ॥ २६१ ॥ २६२ ॥ २६३ ॥ २६४ ॥
॥ २६५ ॥ २६६ ॥ २६७ ॥ २६८ ॥ २६९ ॥ २७० ॥

---

+ तन्त्रीदार्ढ्येति दार्ढ्यायेति क्वचित्पाठः ।

---

१ ख. ग. 'मयीमि' । २ ङ. तन्त्रां(न्त्री) दीर्घोऽथ । ३ ख. 'दार्ढ्येऽथ ।

छिद्रेऽन्यस्याथ संकीलं स्थिरशङ्कौ निवेशयेत् ॥
लघ्वी सा किंनरी प्रोक्ता शार्ङ्गदेवेन सूरिणा ॥ २७१ ॥
अस्यां स्थायिनमारभ्य गणयेत्सप्तकद्वयम् ॥
सारीककुभयोर्मध्ये तर्जन्याद्यङ्गुलित्रयात् ॥ २७२ ॥
वादयेत्किंनरीवीणातन्त्रीं दक्षिणपाणिना ॥
वामस्य तिसृभिस्ताभिरङ्गुलीभिस्तु तन्त्रिकाम् ॥ २७३ ॥
तत्तत्सारीप्रदेशस्थां स्वरव्यक्त्यै निपीडयेत् ॥
वितस्त्यभ्यधिका दैर्घ्ये परिणाहेऽङ्गुलाधिका ॥ २७४ ॥
लघ्व्या[ः] स्याद्बृहती स्नायुमया तन्त्रीस्त्रितुम्बिका ॥
आलापिनीवदस्यां च स्थाप्यं तुम्बं तृतीयकम् ॥
अन्यल्लघ्वीगतं लक्ष्म बृहतीं किंनरीं श्रयेत् ॥ २७५ ॥

इति द्विविधकिंनरीलक्षणम् ।

---

किंनरीत्रितयं तत्र देशीसंसिद्धमन्यथा ॥
बृहती मध्यमा लघ्वीत्यथाऽऽसां लक्ष्म वक्ष्यते ॥ २७६ ॥
तिर्यग्यवोदरैः षड्भिर्निस्तुषैः स्यादिहाङ्गुलम् ॥
बृहतीदण्डमानं स्याद्दैर्घ्ये पञ्चाशदङ्गुलम् ॥ २७७ ॥
षडङ्गुलोऽत्र परिधिर्दण्डे दैर्घ्ये(र्घ्यं) तु काकुभे ॥
षडङ्गुलं शिरस्त्वस्य दैर्घ्यविस्तारयोर्भवेत् ॥ ५७८ ॥
चतुरङ्गुलसंमानं त्र्यङ्गुलं तु तदुच्छ्रये ॥
निक्षिपेत्काकुभं दण्डं वीणादण्डोत्तरे तथा ॥ २७९ ॥
दण्डांशः परिशेषोऽत्र तावान्यावति शेषिते ॥
वीणादण्डान्तककुभशिरोमध्यान्तरे स्थितः ॥ २८० ॥
तन्त्रीभागस्तृतीयांशाधिकत्र्यङ्गुलको भवेत् ॥
मध्ये कूर्मोन्नतां लौहीं पत्रिकां शिरसि क्षिपेत् ॥ २८१ ॥
परितोऽर्धाङ्गुलन्यूना शिरसोऽसौ प्रकीर्तिता ॥
वीणाशीर्षादधस्ताच्च सार्धत्र्यङ्गुलतः स्थितम् ॥ २८२ ॥
ऊर्ध्वाधोदैर्घ्यभाग्रन्ध्रं विस्तारेऽर्धाङ्गुलायतम् ॥
तिर्यग्दैर्घ्यं तावदन्यद्रन्ध्रं चोभयतोमुखम् ॥ २८३ ॥

॥ २७१ ॥ २७२ ॥ २७३ ॥ २७४ ॥ २७५ ॥ २७६ ॥ २७७ ॥ २७८ ॥
॥ २७९ ॥ २८० ॥ २८१ ॥ २८२ ॥ २८३ ॥

---

१ ख. ग. ङ. पञ्चदशाङ्गुलम् ।

तिर्यग्रन्ध्रे चलं शङ्कुमूर्ध्वरन्ध्रनिविष्टया ॥
लौह्या सारिकया युक्तं न्यसेत्प्रान्तान्तरं पुनः ॥ २८४ ॥
सारिकायाः शिरोमूले बध्नीयात्ककुभे सुधीः ॥
तन्त्रीरन्ध्रात्पुरः सान्ध्री(स्त्राङ्घ्रि)द्व्यङ्गुले मेढको भवेत् ॥२८५॥
स च स्यात्कर्तरीयुक्तो गले रन्ध्रान्वितोऽथवा ॥
कर्तर्या गलरन्ध्रे वा सारिकां तां निवेशयेत् ॥ २८६ ॥
तद्रन्ध्रे दण्डान्तरालां(?) विदध्यात्सयवाङ्गुलम् ॥
मेढकात्पुरतः शङ्कुः स्थिरः सार्धाङ्गुलोत्तरे ॥ २८७ ॥
तिर्यग्रन्ध्रे निवेशोऽस्य चलशङ्कुवदिष्यते ॥
चलशङ्कुभ्रामणादि ज्ञेयं पूर्वोक्तरीतितः ॥ २८८ ॥
गृध्रवक्षोस्थिजा यद्वा तत्पादास्थिसमुद्भवाः ॥
कांस्यमय्योऽथवा लौह्यो नलिकाः सारिका मताः ॥ २८९ ॥
सार्धाङ्गुलास्ताः परिधौ दण्डपृष्ठे निवेशयेत् ॥
यन्मेढकशिरोमध्यादुपक्रम्यान्तरं भवेत् ॥ २९० ॥
सारीमस्तकमध्यानां तदिदानीं निरूप्यते ॥
आद्यान्तरं तत्र यवाधिकं पञ्चाङ्गुलं मतम् ॥ २९१ ॥
द्वितीयमन्तरालं तु चतुरङ्गुलमुत्तरम् ॥
तस्मात्तृतीयतुर्ये तु यवन्यूने मते सताम् ॥ २९२ ॥
यवाधिकत्र्यङ्गुलं तु ज्ञेयं पञ्चममन्तरम् ॥
यवोनद्व्यङ्गुलं षष्ठं सयवद्व्यङ्गुलं पुनः ॥ २९३ ॥
अन्तरालं सप्तमं स्यात्सार्धद्व्यङ्गुलमष्टमम् ॥
नवमं तु यवार्धेन सार्धाङ्गुलमितं मतम् ॥ २९४ ॥
दशमं द्व्यङ्गुलं हीनं यवेनैकादशं ततः ॥
द्वादशं तु तृतीयांशन्यूनं तस्मात्त्रयोदशम् ॥ २९५ ॥
सतृतीयांशाङ्गुलं स्यादङ्गुलं तु चतुर्दशम् ॥
द्वितीयान्तरतोऽधस्तान्न्यस्येत्तुम्बमधोमुखम् ॥ २९६ ॥
अन्यत्ककुभमूर्ध्वाधस्तुम्बकं संनिवेशयेत् ॥
षट्त्रिंशदङ्गुलं चक्रे परिधिस्त्वाद्यतुम्बके ॥ २९७ ॥

॥ २८४ ॥ २८५ ॥ २८६ ॥ २८७ ॥ २८८ ॥ २८९ ॥ २९० ॥ २९१ ॥
॥ २९२ ॥ २९३ ॥ २९४ ॥ २९५ ॥ २९६ ॥ २९७ ॥

---

१ ख. ग. °रः सान्त्री द्व्य° । ङ. °रः साङ्घ्रिद्व्य° । २ ख. ग. च. °काभिधाः । स° ।

किंचिन्न्यूनं ततस्तुम्बं परिधौ स्यादधस्तन[म्] ॥
ईषदस्पष्टसरिका सारिकास्ता निवेशयेत् ॥ २९८ ॥
मदनेनेष्टकाचूर्णमिश्रेण श्लेषणं दृढम् ॥
सारीणामथवा वस्त्रमषीमिश्रेण संमितम् ॥ २९९ ॥
मुक्ततन्त्रीभवं कृत्वा स्वरमाद्यं चतुर्दशम् ॥
स्वराः परे स्युः सारीणां चतुर्दशभिरन्तरैः ॥ ३०० ॥
सप्तकद्वयमेवं स्यादेकतारस्वराधिकम् ॥
यथास्वं स्वरदेशांशैः श्रुतिस्तैस्या विचिन्वते ॥ ३०१ ॥
द्वित्रास्ततोऽधिकाः सारीर्निबध्नीयात्परे त्विह ॥
लक्षयन्त्यन्तराण्यासां स्वराविर्भावतो बुधाः ॥ ३०२ ॥
श्रीशार्ङ्गदेवोपदेशात्तद्बोधः सुलभो नृणाम् ॥
केचित्त्रयोदशैवात्र सारीर्निदधते बुधाः ॥ ३०३ ॥
बृहती किंनरीत्येषा शार्ङ्गदेवेन कीर्तिता ॥
मध्यमायां दण्डदैर्घ्यं त्रिचत्वारिंशदङ्गुलम् ॥ ३०४ ॥
परिधिर्दृश्यते तत्र द्वियवोनषडङ्गुलः ॥
सार्धत्र्यङ्गुलविस्तारं प्राग्दैर्घ्यं काकुभं शिरः ॥ ३०५ ॥
क्षिपेत्ककुभदण्डस्य वीणादण्डेऽङ्गुलत्रयम् ॥
तावांश्च परिशेषेऽसौ यावतः परिशेषणे ॥ ३०६ ॥
दण्डान्तशीर्षमध्यान्ते सारिकावयवस्थितः ॥
तृतीयभागरहिताङ्गुलत्रयमितो भवेत् ॥ ३०७ ॥
दण्डान्ते सारिकोत्सेधः स्याद्यवोनाङ्गुलद्वयः ॥
तदर्धो मेढकोपान्त्ये सारीणामन्तरं त्विह ॥ ३०८ ॥
प्रथमं प्रथितं प्राज्ञैः सार्धाङ्गुलचतुष्टयम् ॥
द्वितीयमन्तरं मेयं[3] सयवैरङ्गुलैस्त्रिभिः ॥ ३०९ ॥
तृतीयं तु तृतीयांशाभ्यधिकैस्त्रिभिरङ्गुलैः ॥
चतुर्थं त्र्यङ्गुलं प्रोक्तं पञ्चमं सारिकान्तरम् ॥ ३१० ॥
यवाधिकाभ्यां सार्धाभ्यामङ्गुलाभ्यां मितं मतम् ॥
षष्ठं यवद्वयन्यूनत्र्यङ्गुलं सप्तमं पुनः ॥ ३११ ॥

॥ २९८ ॥ २९९ ॥ ३०० ॥ ३०१ ॥ ३०२ ॥ ३०३ ॥ ३०४ ॥ ३०५ ॥
॥ ३०६ ॥ ३०७ ॥ ३०८ ॥ ३०९ ॥ ३१० ॥ ३११ ॥

---

१ ग. 'स्तज्जा वितन्व' । २ ख. ग. मुकरो । ३ ख. ज्ञेयं ।

सयवार्धाङ्गुलद्वंद्वमष्टमं त्वङ्गुलद्वयम् ॥
अङ्गुलं सयवद्वंद्वं नवमं दशमं पुनः ॥ ३१२ ॥
यवोनमङ्गुलद्वंद्वमन्तरत्रितयं पुनः ॥
इतः परस्याः प्रत्येकं सपादाङ्गुलसंमितम् ॥ ३१३ ॥
विशेषोऽयमिहान्यत्तु लक्ष्म स्याद्बृहतीगतम् ॥
लघ्वीदण्डगतं दैर्घ्ये(र्घ्यं) स्यात्पञ्चत्रिंशदङ्गुलम् ॥ ३१४ ॥
परिधिस्तु तृतीयांशाभ्यधिकाङ्गुलपञ्चकः ॥
अङ्गुलत्रयविस्तारं ककुभस्य शिरो भवेत् ॥ ३१५ ॥
पूर्ववत्काकुभो दण्डो वीणादण्डे निधीयते ॥
परिशेषस्तथा सा स्याद्यथा दण्डान्ततन्त्रिका ॥ ३१६ ॥
आ काकुभशिरोमध्याद्भवेत्त्र्यङ्गुलसंमिता ॥
दण्डान्ते सारिकोत्सेधः स्यात्सार्धाङ्गुलसंमितः ॥ ३१७ ॥
तदर्धे मेढकोपान्ते तत्राऽऽद्यं सारिकान्तरम् ॥
प्रोक्तं यवेनाभ्यधिकैश्चतुर्भिर्मितमङ्गुलैः ॥ ३१८ ॥
द्वितीयं द्वियवोपेताङ्गुलद्वंद्वमितं भवेत् ॥
यवोनाभ्यामङ्गुलीभ्यां तृतीयं मीयते बुधैः ॥ ३१९ ॥
पादोनत्र्यङ्गुलं तुर्यमथ पञ्चममन्तरम् ॥
यवार्धोनाङ्गुलद्वंद्वं षष्ठं सार्धाष्टभिर्यवैः ॥ ३२० ॥
सप्तमं तु यवोनेनाङ्गुलद्वंद्वेन मीयते ॥
सार्धाङ्गुलं त्वष्टमं स्यान्नवमं त्वष्टभिर्यवैः ॥ ३२१ ॥
दशमैकादशे प्रोक्ते सपादाङ्गुलके पृथक् ॥
यवन्यूनाङ्गुलमितं द्वादशं च त्रयोदशम् ॥ ३२२ ॥
अन्यत्तु लघुकिंनर्या लक्ष्म पूर्ववदिष्यते ॥
न बृहत्यधिकं मानं न हीनं त्रिंशदङ्गुलात् ॥ ३२३ ॥
आदर्तव्यं किंनरीणां रक्तिमाधुर्यवर्जनात् ॥
एतयोरन्तराले तु यथेष्टं मानकल्पना ॥ ३२४ ॥
शक्ता विवेक्तुमत्रापि स्वरस्थानानि तद्विदः ॥ ३२५ ॥

॥ ३१२ ॥ ३१३ ॥ ३१४ ॥ ३१५ ॥ ३१६ ॥ ३१७ ॥ ३१८ ॥ ३१९ ॥
॥ ३२० ॥ ३२१ ॥ ३२२ ॥ ३२३ ॥ ३२४ ॥ ३२५ ॥

प्रदर्शनार्थं केषांचिद्रागाणां वादनक्रमम् ॥
अस्यां किंनरवीणायां वक्ति श्रीकरणेश्वरः ॥ ३२६ ॥

अथ किंनरवीणायां केषांचिदधुना प्रसिद्धानां रागाणां वादनक्रमं दर्शयितुमाह—**प्रदर्शनार्थमित्यादिना** ॥ ३२६ ॥

तत्राऽऽदौ मध्यमादेः स्वस्थाने च(नच)तुष्टये स्वरसंनिवेशमाह—

**स्थायिनं मध्यमं मन्द्रं मध्यं वा स्थायतत्प(यिनः प)रान् ॥**
**आरुह्य पनिसान्पश्चावरोह(ह्य) क्रमतः स्वरान् ॥ ३२७ ॥**
**षड्जतः स्थायिपर्यन्ताद्यथा(दाऽऽ)हन्यात्तु धैवतम् ॥**
**मध्यमादेः समाख्यातं स्वस्थानं प्रथमं तदा ॥ ३२८ ॥**

**स्थायिनं मध्यममित्यादि** । मन्द्रं मध्यमं मध्यं मध्यमं वा स्थायिनं कृत्वा । स्थायिनं रागस्थितं स्थानमित्यर्थः । तथैव स्थायिलक्षणं प्रागेवोक्तम्—'यत्रोपविश्यते रागः स्वरे स्थायी स कथ्यते' इति । स्थायिमन्द्रमध्यमान्मध्यममध्यमाद्वा तत्प(द्वा प)रान्पनिसानारुह्येत्यनेनास्मिन्रागे धैवतस्य तत्संवादिन ऋषभस्य च वर्ज्यत्वमवगन्तव्यम् । क्रमतः षड्जतः स्थायिपर्यन्तान्पञ्च स्वरानवरुह्य सनिधपमानित्यर्थः । अनेनावरोहे क्वचिद्वर्ज्यस्यापि स्वरस्योच्चारणं रागहानिकरत्वाभावेनाभ्युपगतं भवति । **यदाऽऽहन्यात्तु धैवतमिति** । धैवतस्वरमाहतं गमकयुक्तं कुर्याच्चेदित्यर्थः । तदा मध्यमादेः प्रथमं स्वस्थानं भवति ॥ ३२७ ॥ ३२८ ॥

**द्व्यर्धमर्धस्थितं तद्वदारुह्य द्विगुणं स्वरम् ॥**
**आद्यं स्वस्थानमातिष्ठेत्स्वस्थानं (न)त्रितये परे ॥ ३२९ ॥**

**परे स्वस्थानं तृती(नत्रित)य इति** । द्वितीयतृतीयचतुर्थेषु स्वस्थानेष्वित्यर्थः । द्वितीये द्व्यर्धस्वरमारुह्य द्व्यर्ध इति स्थायिनश्चतुर्थस्वर उक्तः । तृतीयेऽर्धस्थितं स्वरमारुह्य द्व्यर्धद्विगुणमध्यस्योर्ध्वस्थित उक्त इत्युक्तः(?) । चतुर्थे द्विगुणं स्वरमारुह्य । द्विगुणो नाम स्थायिस्वरादष्टम उक्तः । तत्राऽऽरुह्येत्यस्यायमर्थः । द्व्यर्धादिषु स्थित्वा रागं प्रदर्शयेदिति । आद्यं स्वस्थानमातिष्ठेदिति । प्रतिसं(स्व)स्थानं योज्यम् ॥ ३२९ ॥

सकलरागसाधारणं न्यायं दर्शयति—

**असंभवे पूर्वपूर्वस्वरस्य तु परं परम् ॥**
**क्रमेण स्वरमारोहेत्सर्वरागेष्विति स्थितिः ॥ ३३० ॥**

**इति मध्यमादिः ।**

**असंभव इत्यादि** । पूर्वपूर्वस्वरस्यासंभवस्तु तस्य वर्ज्यत्वेन द्रष्टव्यः ॥ ३३० ॥

**इति मध्यमादिः ।**

---

अथ बङ्गालाख्यदेशीरागभेदस्य लक्ष्यलक्षणविरोधमुद्भाव्य परिहरति—

**किंनरीवादकाः प्रायः स्थायिनं पञ्चमं स्वरम् ॥**
**रागे कुर्वन्ति बङ्गाले तदज्ञानविजृम्भितम् ॥ ३३१ ॥**

**किंनरीवादका इत्यादि** । तदज्ञानविजृम्भितमिति । तेषां लक्षणपरिज्ञानाभावात्तत्कृतं लक्ष्यं [न] प्रामाणिकमित्यर्थः ॥ ३३१ ॥

**ग्रहो हि मध्यमो रागस्यास्य शास्त्रे प्रकीर्तितः ॥ ३३२ ॥**

शास्त्रोक्तं लक्षणं दर्शयति—**ग्रहो हीति** ॥ ३३२ ॥

एवं लक्षणविरोधाल्लक्ष्यस्यासमीचीनतामुक्त्वा विषयव्यवस्थयाऽत्र लक्ष्यस्यैव प्राधान्यं दर्शयति—

**यद्वा लक्ष्यप्रधानानि शास्त्राण्येतानि मन्वते ॥**
**तस्माल्लक्ष्यविरुद्धं यत्तच्छास्त्रं नेयमन्यथा ॥ ३३३ ॥**

**यद्वा लक्ष्येति** । एतानि शास्त्राणि देशीविषयाणीत्यर्थः । लक्ष्यप्रधानानि लक्ष्यमेव प्रधानं येषां तानि । मन्वत आचार्या इति शेषः । तस्मात्कारणाल्लक्ष्यविरुद्धं यत्तु शास्त्रं बङ्गालरागादेर्मध्यमग्रहत्वाद्यभिधायकं तच्छास्त्रम् । **अन्यथा नेयमिति** । यथा लक्ष्यविरोधि न भवति तथा व्याख्येयमित्यर्थः ॥ ३३३ ॥

तदन्यथानयनप्रकारमेव दर्शयति—

**मध्यमादिपदं ज्ञेयं पञ्चमाद्युपलक्षणम् ॥ ३३४ ॥**
**प्राथम्यसाम्यतो यद्वा नियमाद्दष्टकल्पना ॥**
**मध्यमादिग्रहे कार्या नन्वस्मिन्मध्यमे ग्रहे ॥ ३३५ ॥**
**अधस्तनः स्याद्गान्धारो मध्यमः पञ्चमग्रहे ॥**
**तुर्यादिव्यत्ययेऽप्येवं रागसाम्यं कथं भवेत् ॥ ३३६ ॥**

**मध्यमादिपदमिति** । पञ्चमाद्युपलक्षणत्वे हेतुमाह—**प्राथम्यसाम्यत इति** । अस्यायमर्थः । मूर्छनास्वरूपनिरूपणावसरे षड्जस्थानस्थितैर्वाद्यै रजन्याद्याः परे जगुरिति देशीप्रपञ्चमभिसंधायोक्तम् । तेन देश्यां षड्जस्थानं(न?) एव निषादाद्याः समावेश्यन्ते । तदा सर्वेषामपि प्राथम्यं समानं भवति । अतः प्राथम्यसाम्येन हेतुना मध्यमादिपदं पञ्चमाद्युपलक्षणं भवतीति । तस्मादस्य बङ्गालस्य देशीरागत्वादत्र लक्षणे ग्रहत्वेन मध्यमस्य वचनं लक्ष्यप्रसिद्धपञ्चमोपलक्षणमिति लक्ष्यस्य प्राधान्यात्तद्विरोधिलक्षणं तदनुसारेण नेतव्यमिति मन्तव्यम् । पक्षान्तरेण विरोधं परिहर्तुमाह—**यद्वेति** । मध्यमादिग्रहे बङ्गालादीनां लक्ष्यप्रसिद्धपञ्चमादिग्रहत्वपरिहारेण शास्त्रोक्तमध्यमादिग्रहत्वोक्तत्वे नि(ग्रहे नि)यमाद्दष्टकलान्य(ल्पना)कार्या । अरक्तिलाभ एव दृष्टफलम् । तत्तु यथा तथा वा भवत्येव स्थानस्यैकत्वादित्यनियमे प्रसक्ते शास्त्रेण नियमो विधीयते । तेन नियमेनादृष्टं फलं कल्प्यते । तस्मान्नियमानुष्ठानेऽभ्यधिकमदृष्टं फलं भवति यथा प्राङ्मुखत्वेन भोजने । तथा बङ्गालस्यास्य मध्यमग्रहेऽभ्यधिकमदृष्टं फलमिति

---

१ ग. 'माद्दष्टादश ते कला नाका'।

भावः । इमं पक्षमास्थाय चोदयति—**नन्विति** । अस्मिन्वङ्गालरागे मध्यमस्वरे ग्रहे सति गान्धारस्तस्य मध्यमस्याधस्तनः स्यात् । पञ्चमे ग्रहे सति मध्यमः पञ्चमस्याधस्तनः स्यात् । एवं पक्षद्वयेऽपि । **तुर्यादिव्यत्यय इति** । मध्यमस्य ग्रहत्वे निषादस्तुर्यः । पञ्चमस्य ग्रहत्वेऽपि षड्जस्तुर्यः । आदिशब्देनार्थस्थिताष्टमादयो गृह्यन्ते । एवं सर्वेषां स्वराणां व्यत्यये सति रागसाम्यं कथं भवेदित्याक्षेपः ॥ ३३४ ॥ ३३५ ॥ ॥ ३३६ ॥

तस्य समाधानं कर्तुमाह—

**निःशङ्कोऽत्र समाधत्ते गान्धाराद्यप्रयोजकम् ॥**
**किंतु स्थायिनमारभ्य ये स्युस्तुर्यादयः स्वराः ॥ ३३७ ॥**
**रागाभिव्यक्तिशक्ताः स्युर्ननु शास्त्रेष्वनर्थिका ॥**
**षड्जाद्युक्तिः प्रसज्येत सत्यं तत्रोच्यते त्विदम् ॥ ३३८ ॥**
**मध्यमादिग्रहः शास्त्रे नियतस्तदपेक्षया ॥**
**तुर्यादयो निषादाद्या भवन्तीत्युपपद्यते ॥ ३३९ ॥**

**निःशङ्कोऽत्रेति** । **गान्धाराद्यप्रयोजकमिति** । मध्यमे ग्रहे गान्धारोऽधस्तनः । आदिशब्देन पञ्चमे ग्रहे मध्यमोऽधस्तन(*निषादाद्यास्तुर्यादय) इति च सर्व[म]प्रयोजन(क)म् । **किंतु स्थायिनमारभ्येति** । षड्जस्थानस्थितं मध्यमस्थानस्थितं वा स्वरमारभ्य । **तुर्यादय इति** । तत्तत्स्थानं(न) प्राधान्येन तत्तद्ग्रहानुसारेण च स्थिता अधस्तात्तुर्यादयः स्वरा रागाभिव्यक्तिशक्ताः स्युरित्युत्तरम् । यद्येवं शास्त्रेषु षड्जाद्युक्तिरनर्थिकैवेति प्रसज्येतेति शङ्कते—**नन्विति** । **षड्जाद्युक्तिरिति** । षड्जादीनां ग्रहत्वाद्युक्तिरित्यर्थः । अर्धाङ्गीकारेण परिहरति—**सत्यमिति** । अत्र रक्तिलाभरूपदृष्टफलाय स्थानस्यैव प्रयोग(ज?)कत्वात्तदर्थं षड्जाद्युक्तिरनर्थिकैवेत्यङ्गीकृतोंऽशः । तथाऽपि नानर्थिका । अदृष्टफलापेक्षया शास्त्रे मध्यमादीनां नियतत्वादिति परिहारः । **तदपेक्षयेति** । शास्त्रनियतमध्यमादिग्रहापेक्षया ॥ ३३७ ॥ ३३८ ॥ ३३९ ॥

प्रकारान्तरेणाप्यनर्थकत्वं परिहर्तुमाह—

**ग्रहांशन्यासनियमौ(मो) यद्वा शास्त्रार्थ(स्त्रस्य)गोचरः ॥**
**गुम्फः स्वरान्तराणां तु लक्ष्यस्थाने(स्थो न) विरुध्यते ॥ ३४० ॥**

**ग्रहांशेत्यादि** । ग्रहांशन्यासनियमो ग्रहांशन्यासानामेव नियमः शास्त्रस्य गोचरो विषयः । **स्वरान्तराणां गुम्फ इति** । स्वरान्तराणि ग्रहांशन्यासेभ्योऽतिरिक्तानि, अपन्यासादयोऽन्तरमार्गस्वराश्चोच्यन्ते । तेषां गुम्फस्तु लक्ष्यस्थः शास्त्रेण न विरुध्यत इति वाऽर्धाङ्गीकारेण परिहारः ॥ ३४० ॥

---

* धनुश्चिह्नान्तर्गतमधिकमिव भाति ।

उक्तः परिहारोऽन्यत्रापि योजनीय इत्याह—

सर्वत्र परिहारोऽयं लक्ष्ये लक्ष्माविरोधिनि ॥
देशीरागेषु निर्णीतः शार्ङ्गदेवेन सूरिणा ॥ ३४१ ॥

**सर्वत्रेति देशीरागेष्विति** । रागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गरागा देशीरागा इति प्रागुक्ताः । तेष्वयं विरोधपरिहारो निर्णीत इति । अनेन शुद्धसाधारितादिषु ग्रामरागादिषु मार्गरागेषु लक्षणस्यैव प्राधान्यात्तदनुसारेण लक्ष्यस्योन्नेयत्वाद्विरोध एव न प्राप्तस्तत्र कुतस्तत्परिहार इत्यभिप्रायो वेदितव्यः । तथाहि मूर्छनालक्षणावसरे—

"मध्यस्थान[स्थ]षड्जेन मूर्छनाऽऽरम्यतेऽग्रिमा ।
अधस्तनैर्निषादाद्यैः षडन्या मूर्छनाः क्रमात्" इति ॥

तथा—"मध्यमध्यममारम्य सौवीरी मूर्छना भवेत् ।
षडन्यास्तदधोधस्थाः(स्थ) स्वरानारम्य तु क्रमात्" इति च,

जात्याद्यन्तरभाषान्त[र?]मार्गविषयत्वेन यः पक्ष उक्तस्तत्र षड्जादिग्रहत्वोक्तेरन्यथाभावाभावाद्विरोधो नोदेत्येवेत्यलम् ॥ ३४१ ॥

एवं देशीरागविषययोर्लक्ष्यलक्षणयोर्विरोधं परिहृत्य प्रकृतमनुसंदधानो बङ्गालरागस्य स्वरसंनिवेशं दर्शयति—

मध्यमं स्थायिनं कृत्वा गान्धारात्तदधस्तनात् ॥
पश्चाऽऽरुह्य निषादान्तान्गपर्यन्तावरोहणम् ॥ ३४२ ॥
कृत्वा स्थायिनिषादौ च विधायाऽऽहत्य धैवतम् ॥
स्थाय्यन्तमवरोहश्चे(हेच्चे)द्बङ्गालो जायते तदा ॥ ३४३ ॥

इति बङ्गालः ।

**मध्यमं स्थायिनमित्यादि** । तदधस्तनाद्गान्धारादिति ल्यब्लोपे पञ्चमी । गान्धारमारभ्येत्यर्थः । **निषादान्तान्पश्चाऽऽरुह्येति** । गमपधनीनित्यर्थः । **गपर्यन्तावरोहणं कृत्वेति** । निधपमगानवरुह्य स्थायिनिषादौ च *स्थायी मध्यमनी विधाय धैवतमाहत्याऽऽहताख्यगमकयुक्तं कृत्वा स्थाय्यन्तं मध्यमान्तमवरोहेद्यदि तदा बङ्गालो जायत इति बङ्गालस्य प्रथमं स्वस्थानमित्यर्थः । परमपि स्थानत्रयं मध्यमादिवदुन्नेयम् ॥ ३४२ ॥ ३४३ ॥

इति बङ्गालः ।

---

अथ भैरवमाह—

धैवतं स्थायिनं कृत्वा तृतीयं च चतुर्थकम् ॥
तस्मात्कृत्वाऽवरोहेण स्थायिपर्यन्तमेत्य च ॥ ३४४ ॥

---

* इदं पदमधिकमिव भाति ।

तृतीयं च ततोऽधस्थं विधाय स्थायिनं व्रजेत् ॥
यदा तदा भैरवः स्याल्लक्ष्ये स्थायी निरीक्ष्यते ॥ ३४५ ॥

इति भैरवः ।

धैवतं स्थायिनमित्यादि । लक्ष्ये स्थायी निरीक्ष्यत इति । लक्षणे धैवत उक्तः । लक्ष्ये निर्निषादः स्थायीक्ष्यत इत्यन्वयः ॥ ३४४ ॥ ३४५ ॥

इति भैरवः ।

---

स्थायिनो धैवतात्पूर्वं स्वरमागत्य तत्परान् ॥
पश्चानारुह्य तुर्यं च द्वितीयं द्विः प्रयुज्यते ॥ ३४६ ॥

इतः परं स्थायिनो धैवतात्पूर्वमित्येतदारभ्य 'एवं कतिपयरागाः' इत्यन्तेन ग्रन्थसंदर्भेण वराट्यादीनां रागाणां स्वरसंनिवेश उक्तरीत्या द्रष्टव्यः । अत्र प्रकरणे स्थायीति ग्रहपर्यायत्वेन मन्तव्यम् । नहि क्वचिद्ग्रहाद्व्यतिरिक्तस्यांशस्य संभवेऽपि तत्पर्यायत्वेन । अन्यथाऽत्र स्थायिग्रहयोर्भेदेऽङ्गीक्रियमाणे सति गू(गु)र्जर्याः स्थायिनं मध्यमृषभं कृत्वेत्युक्त्वा ग्रहो गान्धार एवास्या दृश्यते लक्ष्यगोचर इति । तथा देशीसंज्ञके राग ऋषभं स्थायिनं कृत्वेत्युक्त्वा गान्धारस्तु ग्रहो देश्या देशीविदिषु दृश्यत इति । तथा देशाख्यसंज्ञके रागे स्थायिनं मध्यगान्धारं कृत्वेत्युक्त्वा लक्ष्ये दृष्टोऽस्या मध्यमो ग्रह इत्येवमादिषु लक्ष्यलक्षणयोर्विरोधोद्भावनमनुपपन्नं स्यात् । किंच बङ्गालरागे किंनरीवादकाः पञ्चमं स्वरं स्थायिनं कुर्वन्तीत्यादिकाया आक्षेपपरम्पराया ग्रहो हि मध्यमो रागस्यास्य शास्त्रेषु कीर्तित इत्यादिना महता यत्नेन कृता परिहारपरम्पराऽपि निरर्थिका स्यात् । अतोऽत्र ग्रह एव स्थायी स्थाय्येव ग्रह इति मन्तव्यम् । सुबोधमन्यत् ॥ ३४६ ॥

स्थायिनि न्यस्यते रागो वराटी जायते तदा ॥
लक्ष्ये तु दृश्यते स्थायी किंनर्यामृषभस्वरः ॥ ३४७ ॥

इति वराटी ।

---

स्थायिनं मध्यमृषभं कृत्वा द्वौ तदधस्तनौ ॥
गत्वा स्थायिनमारभ्य त्रीनारुह्यावरुह्य तु ॥ ३४८ ॥
पञ्च स्वरान्न्यस्यते चेदृषभे गुर्जरी तदा ॥
ग्रहो गान्धार एवास्या दृश्यते लक्ष्यगोचरे ॥ ३४९ ॥

इति गुर्जरी ।

॥ ३४७ ॥ ३४८ ॥ ३४९ ॥

---

१ ख. ग. स्थायिभिरिष्यते ।

मध्यषड्जाद्ग्रहात्पूर्वं स्वरमेत्य तृतीयकम् ॥ ३५० ॥
तुर्यं चोक्त्वा द्वितीयादींस्त्रीनारुह्यावरुह्य च ॥
ग्रहन्यासाद्वसन्तः स्याल्लक्ष्ये त्वस्यर्षभो ग्रहः ॥ ३५१ ॥

इति वसन्तः ।

मध्यषड्जं ग्रहं कृत्वा तृतीयं च चतुर्थकम् ॥
उक्त्वा द्वितीयतृतीयौ स्पृष्ट्वा तुर्यं च पञ्चमम् ॥ ३५२ ॥
एतत्क्रमेणावरोहस्त्यक्त्वा स्थायिद्वितीयकम् ॥
स्थायिपूर्वान्तिमागत्य ग्रहं तस्मात्तृतीयकम् ॥ ३५३ ॥
तुर्यं ततस्तृतीयं च प्रोच्यते न्यस्यते ग्रहे ॥
धन्नासी स्यात्तदा दृष्टो लक्ष्ये स्यात्पञ्चमो ग्रहः ॥ ३५४ ॥

इति धन्नासी ।

---

ऋषभं स्थायिनं कृत्वा परं स्पृष्ट्वा ततः परम् ॥
विलम्ब्य तुर्यमान्दोल्य स्पृष्ट्वा तुर्यादधस्तनौ ॥ ३५५ ॥
ग्रहान्निःसरणं कृत्वा परौ प्रोच्य द्वितीयकम् ॥
एत्य स्थायिनि चेन्न्यासो देशीरागस्तदा भवेत् ॥
गान्धारस्तु ग्रहो देश्यां देशीवेदिषु दृश्यते ॥ ३५६ ॥

इति देशी ।

---

स्थायिनं मध्यगान्धारं कृत्वाऽधस्तुर्यमेत्य च ॥
तस्मादाषष्ठमारुह्य स्वरांस्तानवरुह्य च ॥ ३५७ ॥
ग्रहाधस्तात्तृतीयं च कृत्वा चेन्न्यस्यते ग्रहे ॥
देशाख्या सा तदा लक्ष्ये दृष्टोऽस्या मध्यमो ग्रहः ॥ ३५८ ॥

इति देशान्तराख्या(देशाख्या) ।

इति रागाङ्गानि(णि) ।

---

ग्रहान्मध्यस्थितात्षड्जाद्द्वितीयं स्वरमेत्य चेत् ॥
तृतीयं तदधस्थं च विलम्ब्य स्थायिनं स्पृशेत् ॥ ३५९ ॥

॥ ३५० ॥ ३५१ ॥ ३५२ ॥ ३५३ ॥ ३५४ ॥ ३५५ ॥ ३५६ ॥ ३५७ ॥
॥ ३५८ ॥ ३५९ ॥

अधस्तृतीयतुर्यौ च तं तृतीयं पुनः स्वरम् ॥
कृत्वा स्थायिस्वरे न्यासो डोम्बक्री जायते तदा ॥
भूपाली सा जनैरुक्ता स्थाय्यस्या मध्यमो मतः ॥ ३६० ॥

इति डोम्बक्री ।

( लोके प्रसिद्धा भूपाली )

मन्द्रस्थं पञ्चमं कृत्वा स्थायिनं सह तेन च ॥ ३६१ ॥
आरुह्य षट्स्वरानेषामवरोहे तृतीयकम् ॥
विलम्ब्य कम्पितं कृत्वा तुर्यं स्थायिनमाव्रजेत् ॥ ३६२ ॥
क्रमेण यदि जायेत तदा प्रथममञ्जरी ॥
अस्यास्तु मन्द्रगान्धारः स्थायी लक्ष्येषु दृश्यते ॥ ३६३ ॥

इति प्रथममञ्जरी ।

---

धैवतं स्थायिनं कृत्वाऽऽन्दोल्य तस्मादधस्तनम् ॥
आरुह्य चतुरस्तस्मादवरोहे ग्रहं व्रजेत् ॥
यदा तदा स्यात्कामोदा मध्यमोऽस्या ग्रहो भवेत् ॥ ३६४ ॥

इति कामोदा ।

इति भाषाङ्गानि(णि) ।

---

षड्जं तु स्थायिनं कृत्वा तत्पूर्वस्वरमेत्य च ॥ ३६५ ॥
स्वरद्वयं द्विरारुह्य तृतीयं च चतुर्थकम् ॥
प्रकम्प्याथ तृतीयं च विलम्ब्याऽऽहत्य पञ्चमम् ॥ ३६६ ॥
स्थाय्यन्तमवरोहेच्चेत्स्वरानृषभवर्जितान् ॥
मध्यषड्जं ग्रहं कृत्वा सह प्राचा परौ स्वरौ ॥ ३६७ ॥
प्रोच्य तुर्यं विलम्ब्याथ तृतीयं सद्वितीयकम् ॥
स्पृष्ट्वा यदा ग्रहे न्यासस्तदा रामकृतिर्भवेत् ॥ ३६८ ॥

इति रामकृतिः ।

स्थायिनं मध्यमं कृत्वाऽधश्चतुर्थमुपेत्य च ॥
ग्रहाधरांस्त्रीनारुह्य स्वरं स्पृष्ट्वा तृतीयकम् ॥ ३६९ ॥
ग्रहाधस्तुर्यपर्यन्तमागत्याप्यवरोहिणा ॥
ततस्तृतीयमारुह्य क्रमादेत्य प्रकम्प्य च ॥ ३७० ॥

॥ ३६० ॥ ३६१ ॥ ३६२ ॥ ३६३ ॥ ३६४ ॥ ३६५ ॥ ३६६ ॥ ३६७ ॥
॥ ३६८ ॥ ३६९ ॥ ३७० ॥

ग्रहे न्यासो यदा रागस्तदा गौडकृतिर्भवेत् ॥
पञ्चमो लक्ष्यते स्थायी लक्ष्ये स्याल्लक्ष्यवेदिभिः ॥ ३७१ ॥

इति गौडकृतिः ।

मध्यषड्जं ग्रहं कृत्वाऽधस्तमेत्य पुनर्ग्रहम् ॥
कृत्वा तृतीयतुर्यौ च कम्पितं पञ्चमं स्वरम् ॥ ३७२ ॥
वादयित्वा ग्रहात्तुर्यं तृतीयं स्थायिनं तथा ॥
द्वितीयं कम्पयित्वा च तृतीयं स्वरमास्पृशेत् ॥ ३७३ ॥
ततो यदि ग्रहे न्यासस्तदा देवकृतिर्भवेत् ॥
अस्यास्तु मध्यमो न्यासो लक्ष्ये श्रीशार्ङ्गिणोदितः ॥ ३७४ ॥

इति देवकृतिः ।

इति क्रियाङ्गानि(णि)

---

धैवतं स्थायिनं कृत्वा गत्वाऽधस्थं पुनर्ग्रहम् ॥ ३७५ ॥
तत्परं स्थायिनं तस्मात्पूर्वमागत्य च ग्रहम् ॥
आरुह्य त्रींस्तृतीयादीन्पञ्चमादवरुह्य च ॥ ३७६ ॥
षट्स्वरान्ग्रहमुच्चार्य तृतीयं कम्पयेत्ततः ॥
तुर्यपञ्चमतुर्यांश्च स्पृष्ट्वा प्रोच्य तृतीयकम् ॥ ३७७ ॥
द्वितीयं च ग्रहे न्यासो यदा स्याद्भैरवी तदा ॥
अस्य रागस्य गान्धारः स्थायी लक्ष्येषु दृश्यते ॥ ३७८ ॥

इति भैरवी ।

मन्द्रषड्जं ग्रहं कृत्वा मध्यषड्जमुपेत्य च ॥
अवरोहिक्रमादेत्य ग्रहमारोहिणा ततः ॥ ३७९ ॥
पमागत्य विलम्ब्यामुं स्पृष्ट्वा धैवतमाव्रजेत् ॥
ग्रहाच्चेदवरोहेण च्छायानट्टा तदा भवेत् ॥ ३८० ॥

इति च्छायानट्टा ।

मध्यषड्जं ग्रहं कृत्वा तत्परौ द्वौ च पञ्चमम् ॥ ३८१ ॥
षष्ठं कृत्वाऽवरुह्येमौ तृतीयादवरुह्य च ॥
आग्रहं प्राक्तृतीयाद्वाऽवरुह्य प्राक्तृतीयकम् ॥ ३८२ ॥

॥ ३७१ ॥ ३७२ ॥ ३७३ ॥ ३७४ ॥ ३७५ ॥ ३७६ ॥ ३७७ ॥ ३७८ ॥
॥ ३७९ ॥ ३८० ॥ ३८१ ॥ ३८२ ॥

प्रकम्प्य तत्परं मोच्य ग्रहे चेन्न्यस्यते तदा ॥
रामक्री स्यादसौ प्रोक्ता बहुलीपूर्विका जनैः ॥ ३८३ ॥

इति बहुलीरामक्री ।

धैवतं स्थायिनं कृत्वा तत्परं तु विलम्बितम् ॥
स्पृष्ट्वा ग्रहद्वितीयौ च ग्रहात्तु प्राक्तृतीयकम् ॥ ३८४ ॥
ईषद्विलम्ब्य चाऽऽरुह्य ग्रहादीन्वा तृतीयकम् ॥
विलम्ब्य तदधस्थं वाऽवरुह्य स्पर्शनात्ततः ॥ ३८५ ॥
ग्रहादींस्त्रीन्स्वरान्स्पृष्ट्वा ग्रहमुच्चार्य तत्परम् ॥
ग्रहे चेन्न्यस्यते रागो मेह्लारो जायते तदा ॥
रागेऽत्र पञ्चमः स्थायी दृश्यते लक्ष्यगोचरः ॥ ३८६ ॥

इति मह्लारः ।

स्थायिनो मध्यमात्पश्चावरुह्य यदि मावधीन् ॥
मात्तृतीयं व्रजेत्तस्मादारुह्य चतुरः स्वरान् ॥ ३८७ ॥
स्पृष्ट्वा स्थायिनमेतस्मात्पूर्वं कृत्वा विलम्बितम् ॥
षड्जे चेन्न्यस्यते गौडकर्णाटो जायते तदा ॥ ३८८ ॥
लक्ष्ये तु पञ्चमस्थायी गौडस्यास्य विलोक्यते ॥
ग्रहान्मन्द्रनिषादाच्चेत्समुच्चार्य स्वरं परम् ॥ ३८९ ॥
ततस्तृतीयतुर्यौ च गत्वा स्थायितृतीयकम् ॥
स्थायितुर्यं च कृत्वाऽस्मात्स्वरान्पश्चावरुह्य च ॥ ३९० ॥
स्थायिनोऽधस्तुरीयं च स्थायिनोऽधस्तनं ततः ॥
स्थायिनं तत्परं चोक्त्वा स्थायितुर्यं ग्रहात्परम् ॥ ३९१ ॥
कृत्वा न्यासो ग्रहे गौडस्तौरुष्को जायते तदा ॥
स एव मालवीत्युक्तः स्थायी लक्ष्येऽस्य पञ्चमः ॥ ३९२ ॥

इति तुरुष्कगौडः ।

ग्रहं मालविनः कृत्वा द्वितीयं प्रोच्य तत्परम् ॥
लङ्घयेल्लङ्घितादूर्ध्वं त्रीण्यारुह्यावरुह्य च ॥ ३९३ ॥
प्रकम्प्य लङ्घितं तस्मात्पूर्वं प्रोच्य ग्रहं व्रजेत् ॥
यदा तदा द्राविडः स्याद्गौडोऽसौ सालको जनैः ॥ ३९४ ॥

॥ ३८३ ॥ ३८४ ॥ ३८५ ॥ ३८६ ॥ ३८७ ॥ ३८८ ॥ ३८९ ॥ ३९० ॥
॥ ३९१ ॥ ३९२ ॥ ३९३ ॥ ३९४ ॥

---

१ च. मल्लारो ।

अस्यापि स्थायिनं प्राहुर्लक्ष्यज्ञाः पञ्चमं स्वरम् ॥ ३९५ ॥
इति द्राविडगौडः ( लोके प्रसिद्धः सालकः )

इत्युपाङ्गानि ।

---

स्थानिनो धैवतात्प्राच्यादवरुह्य ग्रहान्तरम् ॥
ग्रहं चोक्त्वा तृतीयं च तुर्यं कृत्वा विलम्बितम् ॥ ३९६ ॥
तस्मादधस्तनौ स्पृष्ट्वा तृतीयं तु विलम्बयेत् ॥
स्पृष्ट्वा ग्रहात्परं पूर्वौ पूर्वं चोक्त्वा ग्रहे यदि ॥ ३९७ ॥
कम्पिते न्यस्यते रागस्तदा स्याल्ललिताभिधः ॥
अत्र गान्धारमेवाऽऽहुः स्थायिनं लक्ष्यवेदिनः ॥ ३९८ ॥
इति ललितः ।

---

एवं कतिपये रागाः प्रोक्ताः संमुग्धबुद्धये ॥
वस्तुतः सर्वयन्त्रेषु रागाणां वादनं समम् ॥ ३९९ ॥
ग्रहादिस्वरसंभूतिद्वारतोऽन्विष्यतां बुधैः ॥
किंनर्यां यैः स्वरैः स्वस्वस्थानजैर्यस्य संभवः ॥
रागस्य तस्य तैरेव वंशादावपि दृश्यते ॥ ४०० ॥
इति किंनरीलक्षणम् ।

---

॥ ३९५ ॥ ३९६ ॥ ३९७ ॥ ३९८ ॥ ३९९ ॥ ४०० ॥

पिनाक्यां धनुषः कम्बैकचत्वारिंशदङ्गुला ॥
दैर्घ्ये स्यान्मध्यविस्तारः स्यात्सपादाङ्गुलद्वयम् ॥ ४०१ ॥
अथ पिनाक्या निःशङ्कवीणायाश्च लक्षणं स्फुटार्थम् ॥ ४०१ ॥
अन्ते चाङ्गुलमानेन शिखां कुर्यादधस्तनीम् ॥
सपादाङ्गुलमात्रा तु कार्मुकस्योत्तरा शिखा ॥ ४०२ ॥
कार्यावङ्गुलदैर्घ्यौ च पादोनाङ्गुलपिण्डकौ ॥
खटकौ शिखयोर्लग्नौ ताभ्यां त्ववाग्रुपान्त(न्त्य)योः ॥ ४०३ ॥
पादोनमङ्गुलद्वंद्वं विस्तारे मानमिष्यते ॥
मध्यप्रान्तान्तराले तु विस्तारं कल्पयेत्सुधीः ॥ ४०४ ॥
तन्त्रीमानेन बध्नीयाच्छिखयोर्निपुणो गुणम् ॥
मानं वादनचापे स्यादङ्गुलान्येकविंशतिः ॥ ४०५ ॥
॥ ४०२ ॥ ४०३ ॥ ४०४ ॥ ४०५ ॥

दैर्घ्ये मुष्टौ तु विस्तारोऽत्राङ्गुलित्रितयान्मितः ॥
स[1] त्वङ्गुलतृतीयांशः शिखे त्यक्त्वाऽन्तयोर्भवेत् ॥ ४०६ ॥
ऊर्ध्वाधरशिखाद्वंद्वमानं पादोनमङ्गुलम् ॥
अश्ववालधिकेशोत्थो गुणो वादनधन्वनः ॥ ४०७ ॥
तुम्बं धृत्वाऽथ पादाभ्यां भुवि न्यस्तमधोमुखम् ॥
तत्र लग्नशिखाऽथोर्ध्वा पिनाकीस्कन्धसंश्रिता ॥ ४०८ ॥
आक्रम्य वामहस्तस्थतुम्बमूलेन तद्गुणम् ॥
ततो दक्षिणहस्तस्थधनुषो वादयेज्ज्यया ॥ ४०९ ॥
रालासंलिप्तयाऽस्यां च स्वरस्थानानि निर्णयेत्[3] ॥
एकतन्त्रीवदधराधरतारतया सुधीः ॥ ४१० ॥

इति पिनाकीलक्षणम् ।

---

वध्यमान्तातिरिक्तेंऽशे तन्त्री दैर्घ्ये चतुष्करा ॥ ४११ ॥
उपरिस्थे[4] क्वचित्काष्ठे प्रान्तेनैकेन वध्यते ॥
प्रान्तान्तरेणान्यकाष्ठेऽधस्थे सार्धकरायते ॥ ४१२ ॥
स्थौल्येनाऽऽलापिनीतुल्ये त्यक्त्वाऽग्रादङ्गुलद्वयम् ॥
तन्त्रीं बद्ध्वा ततोऽधस्तात्तुम्बमाबध्य दारु तत् ॥ ४१३ ॥
वामोरुमूलाक्रान्ताग्रं जङ्घायां कुञ्चिताकृतौ ॥
भूलग्नबाह्यपार्श्वायां वामायां न्यस्य जङ्घया ॥ ४१४ ॥
आक्रम्य वामेतरया पिनाक्यामिव वादनम् ॥
धनुषा वामहस्तस्थतुम्बकेन च सारणा ॥ ३१५ ॥
आर्द्रचर्मकृतां शुष्कां पेशीं कोणान्वितां खराम् ॥
वामेनाऽऽदाय तत्कोणेनाथत्रा सारणा भवेत् ॥ ४१६ ॥
यत्र निःशङ्कवीणा सा शार्ङ्गदेवेन कीर्तिता ॥
त्रिस्थानस्वररागादिव्यक्तिः संजायते तया ॥ ४१७ ॥

इति निःशङ्कवीणालक्षणम् ।

---

यथा यथा स्वरे व्यक्ती रक्तेः प्रचुरता भवेत् ॥
तथा तथा विधातव्यं ततं लोकानुसारतः ॥ ४१८ ॥

॥ ४०६ ॥ ४०७ ॥ ४०८ ॥ ४०९ ॥ ४१० ॥ ४११ ॥ ४१२ ॥ ४१३ ॥
॥ ४१४ ॥ ४१५ ॥ ४१६ ॥ ४१७ ॥ ४१८ ॥

---

१ ङ. सा । २ ङ. °खेत्युक्त्वा° । ३ ख. ग. °नि वर्णे° । ४ ख. ग. °रिटे क्व° ।

सम्यक्स्वरोपयोगीनि तन्त्रीवाद्यानि कानिचित् ॥
उक्तान्यन्यान(न्य)पि प्राज्ञस्तर्कयेदनया दिशा ॥ ४१९ ॥

॥ ४१९ ॥

यो वीणावादनं वेत्ति तत्त्वतः श्रुतिजातिवित्[1] ॥ ४२० ॥
तालपातकलाभिज्ञः सोऽक्लेशान्मोक्षमृच्छति ॥
तस्माद्वीणा निषेव्येति याज्ञवल्क्यादयोऽब्रुवन् ॥ ४२१ ॥

वीणावादनपरिज्ञाने फलमाह—वीणावादनमिति ॥ ४२० ॥ ४२१ ॥

नादश्रुतिस्वरग्रामजातिरागादितत्त्ववित् ॥
देहसौष्ठवसंपन्नः स्थिरासनपरिग्रहः ॥ ४२२ ॥
जितश्रमकरद्वंद्वस्त्यक्तभीतिर्जितेन्द्रियः ॥
प्रगल्भधीः सुशारीरो गीतवादनकोविदः ॥
सावधानमनाश्चेति वैणिके वर्णिता गुणाः ॥ ४२३ ॥

इति ततवाद्यलक्षणम् ।

प्रसङ्गाद्वीणावादकस्य गुणानाह—नादश्रुत्यादि ॥ ४२२ ॥ ४२३ ॥

इति ततवाद्यलक्षणम् ।

---

अथ सुषिरवाद्येषु प्रथमोद्दिष्टं वंशं लक्षयति—

वैणवः खादिरो दान्तश्चान्दनो र(रा)क्तचन्दनः ॥
आयसः कांस्यजो रौप्यो वंशः स्यात्काञ्चनोऽथवा ॥ ४२४ ॥
वर्तुलः सरलः श्लक्ष्णो ग्रन्थिभेदव्रणोज्झितः ॥
कनिष्ठाङ्गुलिविस्तारं गर्भे च सुषिरं दधत् ॥ ४५५ ॥

वैणव इत्यादि । दान्तो गजदन्तनिर्मितः ॥ ४२४ ॥ ४२५ ॥

स्वदैर्घ्यमानदैर्घ्ये च समाकृति समन्ततः ॥
तस्य द्वे त्रीणि चत्वारि चाङ्गुलानि शिरःस्थलात् ॥ ४२६ ॥
त्यक्त्वा फूत्कारसुषिरं कार्यमङ्गुलसंमितम् ॥
मुखरन्ध्रान्तरे(त्तार) रन्ध्रं भवेदेकाङ्गुलान्तरम् ॥ ४२७ ॥

तस्य शिरःस्थलादिति । वंशदण्डस्य मूलस्थलाद्दारुमूलभागादित्यर्थः । तच्छिरःस्थलमारभ्य द्वे त्रीणि चत्वारि वेति पक्षत्रयम् । तेष्वेकपक्षाश्रयणेनाङ्गुलपरित्यागं कृत्वाऽङ्गुलसंमितं वर्तुलत्वेन परितोऽङ्गुलपरिमाणं फूत्कारसुषिरं मुखसंयोगेन वायुपूरणार्थं रन्ध्रं कर्तव्यम् । तदेव मुखरन्ध्रमित्युच्यते । तस्मान्मुखरन्ध्रात्ताररन्ध्रं तारस्व-

---

१ ख. ग. 'तिरागवि' ।

राभिव्यक्तिनिमित्तम्। तत्र फूत्काररन्ध्रसंनिहिते रन्ध्रे तारस्वर एव जायते। यथा शरीरे सकलस्वरसाधारणेन ताल्वोष्ठादिव्यापारेणाभिवादने क्रियमाणे तत्संनिहितत्वेन मूर्ध्नि तारस्वर एव जायते। यथा वैकतन्त्र्यादिकायां विना(वीणायां?) सकलस्वरसाधारणेन दक्षिणहस्ताङ्गुलिव्यापारेण तन्त्रीवादने क्रियमाणे तत्संनिहितसारिकादिषु तार एव स्वरो जायते। एवमत्रापि द्रष्टव्यम्। तच्च मुखरन्ध्रादेकाङ्गुलान्तरं भवेत्॥ ४२६॥ ४२७॥

**अर्धाङ्गुलान्तराणि स्यू रन्ध्राण्यन्यानि सप्त च॥**
**तान्यष्टौ बदरीबीजसंकाशानि प्रचक्षते॥ ४२८॥**

अन्यानि सप्त रन्ध्राण्यर्धाङ्गुलान्तराणि। अङ्गुलस्यार्धमर्धाङ्गुलं तदन्तरं मध्यं येषां तानि तथोक्तानि। **बदरीबीजसंकाशानीति**। यद्यपि रन्ध्राणामाकाशात्मकत्वेनामूर्तत्वाद्बदरीबीजसंकाशत्वं नोपपद्यते तथाऽपि बदरीबीजप्रवेशार्हत्वेनौपाधिकं परिमाणमुक्तमित्यविरोधः॥ ४२८॥

**वंशोऽ(शेऽ)धः सर्वरन्ध्रेभ्यः परिशेष्योऽ(ष्या)ङ्गुलद्वयम्॥**
**तेषु स्वरविभागाय सप्त रन्ध्राणि मन्वते॥ ४२९॥**
**नादहेतोर्मारुतस्य निर्गमायाष्टमं मतम्॥**
**फूत्कारप्रभवो वायुः पूर्यते मुखरन्ध्रतः॥ ४३०॥**

**सर्वरन्ध्रेभ्य इति**। नवभ्यो रन्ध्रेभ्योऽधः सर्वाग्रभाग इत्यर्थः। **अङ्गुलद्वयं परिशेष्येति**। तत्र रन्ध्रमकृत्वेत्यर्थः। अनेनास्य वंशस्याऽऽयामपरिमाणमूलभागेऽङ्गुलद्वयं त्यक्तं चेद्द्वादशाङ्गुलम्। अङ्गुलत्रयं त्यक्तं चेत्त्रयोदशाङ्गुलम्। चतुरङ्गुलं त्यक्तं चेच्चतुर्दशाङ्गुलमित्युक्तं भवति। एवं नवसु रन्ध्रेष्वाद्यन्तरन्ध्रे विहाय मध्यस्थितेषु सप्तसु रन्ध्रेषु स्वरविभागाये(गो भव)तीत्याह—**तेषु स्वरविभागाये(ये)ति**॥४२९॥४३०॥

**वंशस्थैर्नवभी रन्ध्रैरेकवीरो निगद्यते॥ ४३१॥**

**एकवीरो निगद्यत इति**। एकवीरसंज्ञया प्रसिद्ध इत्यर्थः। मुखताररन्ध्रयोरेकाङ्गुलान्तरितत्वादनर्थता च द्रष्टव्या॥ ४३१॥

मुखताररन्ध्रयोरन्तरालेऽङ्गुलवर्धनादन्यांश्चतुर्दश वंशभेदानाह—

**वंशस्य मुखरन्ध्रस्य ताररन्ध्रस्य चान्तरे॥**
**एकैकाङ्गुलवृद्ध्या स्युरन्ये वंशाश्चतुर्दश॥**
**अ(आ)ष्टादशाङ्गुलाद्वंशादेतदङ्गुलवर्धनम्॥ ४३२॥**

**वंशस्येत्यादि**। अङ्गुलवर्धनस्य परावधिमाह—**अ(आ)ष्टादशाङ्गुलाद्वंशादिति**। अष्टादशाङ्गुलो नामान्वर्थो वंशो वक्ष्यते। तत्पर्यन्तमित्यर्थः। **एतदङ्गुलवर्धनमिति**। मुखताररन्ध्रयोरन्तरालेऽङ्गुलवर्धनं कर्तव्यमित्यर्थः॥ ४३२॥

उमापतिर्द्व्यङ्गुलः स्यात्त्रिभिस्त्रिपुरुषोऽङ्गुलैः ॥
चतुर्मुखश्चतुर्भिः स्यात्पञ्चवक्त्रस्तु पञ्चभिः ॥ ४३३ ॥
षडङ्गुलः षण्मुखः स्यान्मुनिः सप्ताङ्गुलो मतः ॥
वसुरष्टाङ्गुलः प्रोक्तो नाथेन्द्रस्तु नवाङ्गुलः ॥ ४३४ ॥

**द्व्यङ्गुलः स्यादिति।** प्रकृतेऽन्तराले द्वे अङ्गुली यस्येति तथोक्तः स उमापतिरित्युच्यते ॥ ४३३ ॥ ४३४ ॥

दशाङ्गुलो महानन्दो रुद्रस्त्वेकादशाङ्गुलः ॥ ४३५ ॥
द्वादशाङ्गुल आदित्यो मनुर्वंशश्चतुर्दशः ॥
कलानिधिः षोडशः स्यादन्वर्थोऽष्टादशाङ्गुलः ॥ ४३६ ॥

**मनुर्वंशश्चतुर्दश इति ।** चतुर्दशाङ्गुल इत्यर्थः । ततश्च(न तु च)तुर्दशो वंशः । षोडशः स्यादित्यपि षोडशाङ्गुलान्तर इत्यर्थः । नतु षोडशो वंशः । **अन्वर्थ इति ।** षोडशाङ्गुल इति संज्ञा लक्षणं चेत्यर्थः ॥ ४३५ ॥ ४३६ ॥

एकैकाङ्गुलवृद्ध्या स्युरित्येकादिक्रमेण प्रक्रम्य त्रयोदशपञ्चदशसप्तदशाङ्गुलानां परित्यागे हेतुमाह—

अविस्पष्टान्तरत्वेन नेष्टः सप्तदशाङ्गुलः ॥
त्रयोदशाङ्गुलस्तद्वन्न च पञ्चदशाङ्गुलः ॥ ४३७ ॥
मुरल्याख्योऽपरैर्वंशो विंशत्यङ्गुलकः स्मृतः ॥
द्वाविंशत्यङ्गुलोऽप्यन्यो वंशस्तज्ज्ञेषु दृश्यते ॥ ४३८ ॥
तं च श्रुतिनिधिं प्राहुर्वंशं वंशविदो जनाः ॥
अतिमन्द्रध्वनित्वेन नेष्यतेऽसौ विचक्षणैः ॥ ४३९ ॥

**अविस्पष्टान्तरत्वेनेति ।** अविस्पष्टमन्तरं भेदा यस्येति तथोक्तः। तस्य भावस्तत्त्वम् । अयमर्थः । पूर्वोत्तरयोः षोडशाष्टादशाङ्गुलयोः सारूप्येण मध्यमस्य सप्तदशाङ्गुलस्य ताभ्यां भेदे विद्यमानेऽप्यविस्पष्टः संस्तयोर्भ्रान्तिं जनयतीति । **तद्वदिति ।** उक्तहेतुना त्रयोदशाङ्गुलः पञ्चदशाङ्गुलश्च नेष्ट इति संबन्धः । द्वादशाङ्गुलादर्वाचीनेषु वंशेषु त्वङ्गुलानामल्पसंख्यात्वेन भेदस्य स्फुटत्वाद्भ्रान्तिर्न जायत इति भावो ज्ञेयः । एवमेकवीरादयः पञ्चदश वंशभेदा भवन्ति ॥ ४३७ ॥ ४३८ ॥ ४३९ ॥

विरलाश्चातितारत्वाद्वंशाः पञ्चाङ्गुलादधः ॥ ४४० ॥

**पञ्चाङ्गुलादध इति ।** चतुरङ्गुलत्र्यङ्गुलद्व्यङ्गुलैकाङ्गुलान्तरा ए(नै?)व वंशा इत्यर्थः । अयमभिप्रायः । वंशस्या[ति]दीर्घत्वेऽतिमन्द्रस्वरत्वमतिह्रस्वत्वेऽतितारस्वरत्वं वा सर्वगातृसाधारणत्वाभावाद्दोष इति ॥ ४४० ॥

अष्टादशाङ्गुले वंशे स्वररन्ध्रेषु सप्तसु ॥ ४४१ ॥

मुद्रितेषु भवेत्षड्जो मन्द्रसप्तकसंस्थितः ॥
षट्स्वेवमन्यवंशेषु स्युः क्रमादृषभादयः ॥ ४४२ ॥

**अष्टादशाङ्गुल इति** । अस्मिन्वंशे सप्तसु स्वररन्ध्रेषु । **मुद्रितेष्विति**। वायुनिर्गमनिमित्तमष्टमं रन्ध्र(न्ध्रं)मुक्त्वा सप्तमादिषु सप्तसु रन्ध्रेषु यथाशास्त्रं हस्तद्व्यङ्गुलमुखैः पिहितेषु सत्सु मन्द्रसप्तकस्याऽऽदिमः षड्जो भवेत् । **एवं षट्स्वन्यवंशेषु ऋषभादयः क्रमात्स्युरिति** । कलानिधौ सप्तरन्ध्रमुद्रणे कृते मन्द्रर्षभो भवेत् । मनौ मन्द्रगान्धारः । आदित्ये मन्द्रमध्यमः । रुद्रे मन्द्रपञ्चमः । महानन्दे मन्द्रधैवतः । नाथेन्द्रे मन्द्रनिषाद इति क्रमो द्रष्टव्यः ॥ ४४१ ॥ ४४२ ॥

आरभ्याष्टाङ्गुलादेवमधो वंशेषु सप्तसु ॥
मध्यस्थानगताः सप्तोद्यन्ति षड्जादयः क्रमात् ॥ ४४३ ॥

**आरभ्येत्यादि** । अष्टाङ्गुलाद्वसुसंज्ञकाद्द्वा*दशादारभ्याधः सप्तसु वंशेषु । एवमुक्तप्रकारेण मध्यस्थानगताः षड्जादयः सप्त क्रमादुद्भवन्तीति । वसौ सप्तस्वररन्ध्रेषु मुद्रितेषु मध्यषड्जो भवेत् । मुनौ मध्यर्षभः। षण्मुखे मध्यगान्धारः । पञ्चवक्त्रे मध्यमध्यमः । चतुर्मुखे मध्यपञ्चमः । त्रिपुरुषे मध्यधैवतः । उमापतौ मध्यनिषादश्च क्रमेण भवेदित्यर्थः ॥ ४४३ ॥

तारस्थानस्थितः षड्जस्त्वेकवीरस्य जायते ॥ ४४४ ॥

**तारस्थानस्थित इति** । एकवीराख्यवंशस्य तु पूर्ववद्रन्ध्रमुद्रणे क्रियमाणे तारषड्जो जायते ॥ ४४४ ॥

सर्वेष्वेतेषु वंशेषु मुक्ते रन्ध्रद्वयेऽन्तिमे ॥
स्वरो द्वितीयो जायेत तृतीयाद्यास्ततः क्रमात् ॥
सप्तमान्ताः प्रजायन्ते त्र्यादिरन्ध्रविमोचनात् ॥ ४४५ ॥

**सर्वेष्वित्यादि** । तेष्वष्टादशाङ्गुलादिष्वन्तिमे रन्ध्रद्वये मुक्ते सत्यमुद्रिते सति । **द्वितीयः स्वरो जायेतेति** । यस्मिन्वंशे यः स्वरः प्रथमत्वेन जायत इत्युक्तं तदपेक्षया तत्र द्वितीयो जायत इत्यर्थः । तद्यथा । अष्टादशाङ्गुले द्वितीयो मन्द्रर्षभः । कलानिधौ द्वितीयो मन्द्रगान्धारः । एवं सर्वत्रोह्यम् । ततः । **त्र्यादिरन्ध्रविमोचनात्तृतीयाद्याः सप्तमान्ताः क्रमाज्जायन्त इति** । पूर्ववत्तत्तदपेक्षया ते ते तृतीयादयो द्रष्टव्याः । तद्यथा । अष्टादशाङ्गुले वंशेऽन्तिमरन्ध्रत्रये मुक्ते सति मन्द्रषड्जात्तृतीयो मन्द्रगान्धारः । कलानिधौ रन्ध्रत्रये मुक्ते मन्द्रर्षभात्तृतीयो मन्द्रमध्यमः । एवं सर्वत्र द्रष्टव्यम् । तथा च ताररन्ध्र(रन्ध्रचतुष्टय)विमोचनेऽपि तत्तदपेक्षया चतुर्थस्वरादयो द्रष्टव्याः ॥ ४४५ ॥

---

* 'द्वादशा' इत्यक्षरत्रयमधिकम् ।

---

१ ख. ग 'ङ्गुलेष्वेव'। २ ग. 'था चतुरारं र'।

मुक्ते तुताररन्ध्रेऽन्यरन्ध्रेषु पिहितेषु च ॥
अष्टमस्वरसंभूतिः पूर्वाचार्यैरुदीरिता ॥ ४४६ ॥

**मुक्ते त्विति । अष्टमस्वरसंभूतिरिति ।** यस्मिन्वंशे ताररन्ध्रादिसप्तरन्ध्रमुद्रणे कृते यः स्वरो जायतेऽन्यरन्ध्रेषु पिहितेषु ताररन्ध्रे मुक्ते स एवाष्टमत्वेन जायत इत्यर्थः ॥ ४४६ ॥

[1]व्यक्तमुक्ताङ्गुलित्वेन समग्रो जायते स्वरः ॥
अङ्गुल्याः कम्पने त(त्व)त्र श्रुतिरेकाऽपचीयते ॥ ४४७ ॥

**व्यक्तमुक्ताङ्गुलित्वेन समग्र इति ।** शुद्धावस्थोक्तश्रुतियुक्त इत्यर्थः । **अङ्गुल्याः कम्पने त्वत्र स्वर एका श्रुतिरपचीयत इति ।** स स्वरः स्वोपान्त्यश्रुतिं गच्छतीत्यर्थः ॥ ४४७ ॥

श्रुतिद्वयं त्वर्धमुक्ते तत्कम्पे तु श्रुतित्रयम् ॥
अन्यथा वर्णयन्तीह केचित्सप्तस्वरोदयम् ॥ ४४८ ॥

**श्रुतिद्वयं त्विति ।** अर्धमुक्ते श्रुतिद्वयमपचीयते । **तत्कम्पे त्विति ।** अर्धमुक्ताङ्गुलिकम्पे तु श्रुतित्रयमपचीयत इति संबन्धः ॥ ४४८ ॥

मतान्तरेण वंशेषु स्वरोत्पत्तिं दर्शयितुमाह—

अर्धेन्दुनागफणवद्वंशे स्थाप्यं करद्वयम् ॥
वामस्यानामिकाङ्गुल्या षड्जो मध्यमया पुनः ॥ ४४९ ॥
ऋषभः स्यात्प्रदेशिन्या गान्धार इति वामतः ॥
त्रयः स्वराः प्रजायन्ते चत्वारो दक्षिणात्करात् ॥ ४५० ॥
कनिष्ठया मध्यमः स्यात्पञ्चमोऽनामया स्वरः ॥
धैवतः स्यान्मध्यमया प्रदेशिन्या निषादवान् ॥ ४५१ ॥

**अर्धेन्दुनागफणवदिति ।** अर्धेन्दुरर्धचन्द्रः । नागफणो हस्तविक्षेपः(शेषः) । वक्ष्यति च—"एकतोऽङ्गुलिसंघाते यत्राङ्गुष्ठे स्थितेऽन्यतः ।
चन्द्ररेखाकृतिर्भाति सोऽर्धचन्द्रोऽभिधीयते" इति ॥

नागफणः सर्पशिरा नाम हस्तविक्षेपः(शेषः) । पताको निम्नमध्यो यः स तु सर्पशिराः कर इति वक्ष्यमाणलक्षणः । तद्वत् । ताविवार्धेन्दुनागफणाविव । अत्र त(व)त्करणेन तयोः सादृश्यं गम्यते नतु तावेव । एतदुक्तं भवति । करद्वयेऽङ्गुष्ठयोः पृथक्स्थिताः प्रत्येकमर्धेन्दुवदितरासामङ्गुलीनामूर्ध्वाभिमुखीनां नतत्वेन प्रत्येकं नागफणवच्च प्रतीतिर्यथा भवति तथेति । एवंरूपं करद्वयं वंशे स्थाप्यम् । अङ्गुष्ठयोर्भागयोर्वंशं

---

1 ख. ग. व्यक्ता मुक्ता°।

धृत्वाऽङ्गुलीभागौ तत्र संनिवेशयेत्यर्थः । वामस्यानामयाऽङ्गुल्या षड्जः स्यादित्यादिना हस्तयोर्व्यत्यासेन संनिवेशः सूचितः ॥ ४४९ ॥ ४५० ॥ ४५१ ॥

**स्थानत्रयस्य निष्पत्ति *र्न ते चास्मिन्नन्यथा जगुः ॥ ४५२ ॥**

**स्थानत्रयस्येति ।** अस्मिन्पक्षे स्थानत्रयस्य मन्द्रमध्यताराख्यस्य । **निष्पत्तिर्नैवेति ।** अन्यथा प्रकारान्तरेण जगुरन्य आचार्या इति शेषः ॥ ४५२ ॥

**सुशिक्षितेन रचितात्फूत्कारान्मध्यसप्तके ॥**
**जायन्ते वैणशारीरस्वरसंवादिनः स्वराः ॥ ४५३ ॥**
**तारस्था मुखसंयोगसंकटे मुखरन्ध्रके ॥**
**तं वादनप्रकारं च टीपामाचक्षते जनाः ॥ ४५४ ॥**
**तया यद्वाद्यते रन्ध्रे तत्स्वरो द्विगुणो भवेत् ॥**
**रन्ध्रस्य मुखसंयोगविप्रकर्षात्तु मन्द्रगाः ॥ ४५५ ॥**

**सुशिक्षितेनेति ।** न सर्वसाधारणमित्यर्थः । तेन **रचितात्फूत्कारादिति ।** मुखरन्ध्रयोः संयोगविशेषकृतादित्यर्थः । **मध्यसप्तके वैणशारीरसंवादिन इति ।** वंशस्य मध्यसप्तकस्थिताः स्वरा वैणैः शारीरैश्च स्वरैरेकतारूपा इत्यर्थः । **मुखसंयोगसंकटे मुखरन्ध्रक इति ।** अतिसंनिकृष्टत्वेनेत्यर्थः । तत्स्वरो द्विगुणो भवेदिति फूत्कारेण प्रयत्नविशेष उक्तः । तदा तारस्थाः स्वरा भवन्ति । मुखसंयोगविप्रकर्षादिति प्रयत्नशैथिल्यमुक्तम् । तदा मन्द्रगाः स्वरा भवन्ति ॥ ४५३ ॥ ४५४ ॥ ४५५ ॥

**तीव्रातीव्रतया वायोः शीघ्रमन्थरभावतः ॥**
**पूरणापूरणाभ्यां चोपचयापचयाद्ध्वनेः ॥**
**कुर्वन्त्येकत्र रन्ध्रेऽपि तज्ज्ञा नानास्वरोदयम् ॥ ४५६ ॥**

एवं फूत्कारप्रयत्नभेदेन स्थानत्रयस्य निष्पत्तिमुक्त्वा ततोऽपि कुशलैरेकस्मिन्नेव रन्ध्रे नानास्वरोदयः क्रियत इत्याह—**तीव्रातीव्रतयेत्यादिना** ॥ ४५६ ॥

**कम्पिता वलिता मुक्ताऽर्धमुक्ता च निपीडिता ॥**
**इति वंशे गतिः प्रोक्ता शार्ङ्गदेवेन पञ्चधा ॥ ४५७ ॥**
**अधरस्थस्य वंशस्य कम्पनात्कम्पिता मता ॥**
**वर्णालंकारनिष्पत्तिः प्रयोगेऽस्याः प्रयोजनम् ॥ ४५८ ॥**

**इति कम्पिता ।**

**भवेत्संचारिनिष्पत्तौ वलिताऽङ्गुलिचालनम् ॥**

**इति वलिता ।**

---

* निष्पत्तिर्नैवास्मिन्निति टीकायां लब्धः पाठः ।

---

१ ख. ग. टीपमा° । च. टीपिमा° ।

रन्ध्रेऽखिलेऽङ्गुलीमुक्ते मुक्ता स्यान्मुक्तशब्दकृत् ॥ ४५९ ॥

इति मुक्ता ।

अथ वंशे पञ्च गतीर्दर्शयति—कम्पितेत्यादि ॥ ४५७ ॥ ४५८ ॥ ४५९ ॥

अर्धमुक्ताऽर्धमुक्तेः स्याद्धृतशब्दविधायिनी ॥ ४६० ॥

इत्यर्धमुक्ता ।

समन्तात्सर्वरन्ध्राणि पिधायाङ्गुलिभिर्यदा ॥
वंशं पूरयते तज्ज्ञस्तदा ज्ञेया निपीडिता ॥ ४६१ ॥

इति निपीडिता ।

अर्धमुक्तेरिति । अङ्गुल्यग्रार्धेन रन्ध्राग्रमुक्तेर्हेतोरित्यर्थः । धृतशब्दविधायिनीति । उत्पन्नं शब्दं धारयन्तीत्यर्थः ॥ ४६० ॥ ४६१ ॥

अत्र कीर्तिधरस्त्वन्यां व्यवस्थामभ्युपागमत् ॥ ४६२ ॥

अत्र कीर्तिधर इत्यादि । अत्र वंशविषयेऽन्यव्यवस्थां वक्ष्यमाणस्थानत्रयव्यवस्थाम् ॥ ४६२ ॥

षट्सप्ताष्टाङ्गुला वंशास्तारस्वरविधायकाः ॥
मध्यस्वरा नवदशैकादशाङ्गुलकास्त्रयः ॥ ४६३ ॥

तामेव दर्शयति—षट्सप्तेत्यादिना ॥ ४६३ ॥

अङ्गुलैर्यो द्वादशभिः स्यात्त्रयोदशभिश्च यः ॥
हेतू मन्द्रस्वराणां तौ सर्ववंशमयः पुनः ॥ ४६४ ॥
चतुर्दशाङ्गुलो वंशस्त्रिस्थानस्वरसाधकः ॥
वर्णालंकारधात्वादिवाद्यसंवादनक्षमः ॥
एवं वंशा नवैवेति युक्तायुक्तविदो विदुः ॥ ४६५ ॥

सर्ववंशमय इति । उक्ताष्टविधवंशरूप इत्यर्थः । तत्र त्रिस्थानस्वरसाधक इति हेतुगर्भितं विशेषणम् ॥ ४६४ ॥ ४६५ ॥

अथ केषांचिद्देशीविदां मतेनैतानेवैकवीरादिकान्वंशान्मानान्तरेण भिन्नलक्षणान्दर्शयितुमाह—

केचिद्देशीविदो वंशानेकवीरादिकानमून् ॥
मानान्तरेणाभिदधुस्तेषां मतमिदं ब्रुवे ॥ ४६६ ॥
प्राक्चतुर्दशवंशान्तेऽ(त्तेऽ)ङ्गुलं पञ्चयवं जगुः ॥
चतुर्दशादिवंशेषु सार्धपञ्चयवं त्विदम् ॥ ४६७ ॥

---

१ ख. ग. स्याद्वृत्तश° । २ ख. °रध्वनिवि° । ३ ख. ग. °नू । नामान्त° ।

केचिद्देशीविद इत्यादि । ते देशीविदः । चतुर्दशान्मनुसंज्ञकाद्वंशात्प्राक्प्राक्तनेष्वादित्याद्येकवीरान्तेषु । अङ्गुलं पञ्चयवं विदु(जगु)रिति । पञ्चयवमितमङ्गुलप्रमाणमित्यर्थः । अत्र चतुर्द[शवं]शादिति ल्यब्लोपे पञ्चमी । अत एव चतुर्दशादिवंशेष्वित्युच्यते । चतुर्दशादिवंशेषु मनुकलानिध्यष्टादशाङ्गुलेषु त्रिषु वंशेषु । इदमङ्गुलम् । सार्धपञ्चयवमिति पूर्ववंशेभ्यो मानभेदकथनम् । ॥ ४६६ ॥ ४६७ ॥

चतुर्दशाङ्गुलं दण्डमेकवीरे प्रचक्षते ॥
सार्धाङ्गुलौ शिरःप्रान्तौ पृथग्जातिमुखेऽङ्गुलम् ॥ ३६८ ॥
मानं तारादिरन्ध्राणि प्रत्येकं त्रियवानि तु ॥
त्रियवान्यन्तरालानि पृथक्स्थानेषु मूलतः ॥
पञ्चमांशोनितं मानं कनिष्ठापर्वमध्यतः ॥ ४६९ ॥

शिरःप्रान्तौ मूलाग्रभागावित्यर्थः । जातिमुखं नाम फूत्काररन्ध्रम् ॥४६८॥४६९॥

उमापतेस्तु वंशस्य दण्डः पञ्चदशाङ्गुलः ॥
पादोनेन यवद्वंद्वेनाधिकोऽस्यान्तरेषु तु ॥ ४७० ॥
सपादत्रियवं मानं पृथगन्यत्तु पूर्ववत् ॥
अङ्गुलैः सप्तदशभिर्यवयुग्माधिकैर्मतः ॥ ४७१ ॥
दण्डस्त्रिपुरुषे वंशे पृथगन्तरसप्तके ॥
यवोनमङ्गुलं मानमपरं लक्ष्म पूर्ववत् ॥ ४७२ ॥
यवद्वयाधिकैः सार्धैरष्टादशभिरङ्गुलैः ॥
मितश्चतुर्मुखे दण्डे शिरोन्तौ तु मितौ पृथक् ॥ ४७३ ॥
पादोनाभ्यामङ्गुलाभ्यां लक्षणं पूर्ववत्परम् ॥
यवस्य सार्धपादेन न्यूना द्वाविंशतिर्मता ॥ ४७४ ॥
अङ्गुलानां दण्डमानं पञ्चवक्त्रे शिरोन्तयोः ॥
सार्धाङ्गुलद्वयं मानं पृथगन्तरसप्तके ॥ ४७५ ॥
चतुर्यवी सार्धपादाभ्यधिकाऽन्यत्तु पूर्ववत् ॥
षण्मुखे यवपादाभ्यां सपादाभ्यां सहाङ्गुलैः ॥ ४७६ ॥
चतुर्विंशतिसंख्यैः स्याद्दण्डः परिमितस्ततः ॥
ताराद्यष्टसु रन्ध्रेषु सपादत्रियवा मितिः ॥ ४७७ ॥

॥ ४७० ॥ ४७१ ॥ ४७२ ॥ ४७३ ॥ ४७४ ॥ ४७५ ॥ ४७६ ॥ ४७७॥

---

१ ख. ग. 'थग्जातेषु । घ. 'थग्जातेस्तु मू' ।

प्रत्येकमन्तरालेषु षोडशांशोनिता यवाः ॥
पञ्चमानमिताः शेषं लक्ष्म स्यात्पञ्चवक्त्रवत् ॥ ४७८ ॥
अतः परेषु वंशेषु सप्तस्वभ्यधिको यवः ॥
स्वमानाद्दृश्यते ताररन्ध्रे जातिमुखान्तरे ॥ ४७९ ॥
युक्ता यवेन सार्धेनाङ्गुलषड्विंशतिर्भवेत् ॥
प्रमाणं मुनिदण्डस्य मानं रन्ध्राष्टके पुनः ॥ ४८० ॥
यवत्रयं सार्धपादाधिकं प्रत्येकमीरितम् ॥
पृथक्पञ्चयवी सार्धान्तरेष्वन्यत्तु पूर्ववत् ॥ ४८१ ॥
वसुवंशे तु दण्डस्याङ्गुलाष्टाविंशतिर्मितिः ॥
यवाधिका जातिमुखं यवेनाधिकमङ्गुलम् ॥ ४८२ ॥
यवाधिकाङ्गुला ज्ञेयाऽन्तरालेषु मितिः पृथक् ॥
शेषं तु पूर्ववद्वंशे नाथेन्द्रे दण्डसंमितिः ॥ ४८३ ॥
यवपादाधिका त्रिंशदङ्गुलानां शिरोन्तयोः ॥
पादोनत्र्यङ्गुलं मानं पृथगन्तरसप्तके ॥ ४८४ ॥

॥ ४७८ ॥ ४७९ ॥ ४८० ॥ ४८१ ॥ ४८२ ॥ ४८३ ॥ ४८४ ॥

सपादमङ्गुलं मानं खानिमानं तु मूलतः ॥
षष्ठभागविहीनं स्यात्कनिष्ठापर्व मध्यमम् ॥ ४८५ ॥

खानिमानं तु मूलत इति । खानिर्नाम यावद्दण्डमायातं गर्भे सुषिरम् । तस्य मानं षष्ठभागविहीनं मध्यमं कनिष्ठापर्व स्यादिति । तेन मितमित्यर्थः । मूलतो दण्डस्य शिरोभागात् । अस्मिन्मते च वंशलक्षणानि ग्रन्थत एव सुबोधानि ॥ ४८५ ॥

अपरं पूर्ववद्दण्डे महानन्दस्य संमितिः ॥
पादन्यूनेन पादेन यवस्याभ्यधिका भवेत् ॥ ४८६ ॥
द्वात्रिंशदङ्गुलानां तच्छिरोन्तौ त्र्यङ्गुलौ पृथक् ॥
सपादाङ्गुलकं जातिमुखमन्तरसप्तके ॥ ४८७ ॥
पृथक्सपादपादेनाभ्यधिकं मानमङ्गुलम् ॥
मूलतः सप्तमांशोनकनिष्ठामध्यपर्वणा ॥ ४८८ ॥
मिता खानिः परं लक्ष्म पूर्वोक्तं तैरुदीरितम् ॥
सपादानि चतुस्त्रिंशदङ्गुलानि मितिर्भवेत् ॥ ४८९ ॥

॥ ४८६ ॥ ४८७ ॥ ४८८ ॥ ४८९ ॥

यवार्धसहिता रुद्रदण्डस्यान्तरसप्तके ॥
सार्धाङ्गुलं पृथङ्मानं कनिष्ठामध्यपर्वणा ॥ ४९० ॥
खानिः परिमिता शेषं पूर्ववंशवदिष्यते ॥
सप्तत्रिंशद्यवार्धेनाभ्यधिकान्यङ्गुलानि तु ॥ ४९१ ॥
आदित्ये दण्डमानं स्यात्पादोनं त्वङ्गुलद्वयम् ॥
अन्तरेषु पृथङ्मानमपरं रुद्रवंशवत् ॥ ४९२ ॥
मनोर्दण्डे सपादैकोनचत्वारिंशदङ्गुलम् ॥
यवाधिकं सपादेनाष्टमांशेन यवस्य च ॥ ४९३ ॥
सहितं मानमाख्यातं पादन्यूनाङ्गुलत्रयैः ॥
शिरःप्रान्तौ पृथग्जातिमुखे स्यान्मानमङ्गुलम् ॥ ४९४ ॥
षोडशांशोनपादेनाधिकं रन्ध्राष्टके पुनः ॥
यवत्रयं पृथक्सार्धमन्तरेषु च सप्तसु ॥ ॥ ४९५ ॥
प्रत्येकं यवपादेन न्यूनं स्यादङ्गुलद्वयम् ॥
मानं लक्षणमन्यत्तु भवेदादित्यवंशवत् ॥ ४९६ ॥
यवस्य सार्धपादाभ्यां द्वात्रिंशांशे नवाधिकैः ॥
चतुश्चत्वारिंशता स्यात्पादोनैरङ्गुलैर्मितः ॥ ४९७ ॥
दण्डः कलानिधौ वंशे शिरोन्तौ त्र्यङ्गुलौ पृथक् ॥
अन्तरेष्वङ्गुलद्वंद्वं सपादयवसंयुतम् ॥ ४९८ ॥
प्रत्येकं मानमाख्यातं लक्ष्मान्यन्मनुवन्मतम् ॥
यवस्याष्टमभागेन सपादेन समन्वितैः ॥ ४९९ ॥
अष्टाचत्वारिंशता स्यात्पादोनैः संमितोऽङ्गुलैः ॥
अष्टादशाङ्गुले दण्डः सार्धं त्वङ्गुलयोर्द्वयम् ॥ ५०० ॥
अन्तरेषु पृथङ्मानं वेद्यमन्यत्कलानिधेः ॥
नात्र त्रयोदशो वंशो नव(वा) पञ्चदशाङ्गुलः ॥ ५०१ ॥
इष्यतेऽल्पान्तरत्वेन नव(च) सप्तदशाङ्गुलः ॥
एवं पञ्चदशैवैते वंशास्तेषामिमे मताः ॥ ५०२ ॥
माधुर्यरक्तिसंयुक्ता रागाभिव्यक्तिहेतवः ॥
यदिदं लक्ष्म शास्त्रोक्तं यच्च देशीगतं मतम् ॥
ते द्वे रञ्जयितुं शक्ते न मनांसि कलाविदाम् ॥ ५०३ ॥

॥ ४९० ॥ ४९१ ॥ ४९२ ॥ ४९३ ॥ ४९४ ॥ ४९५ ॥ ४९६ ॥ ४९७ ॥
॥ ४९८ ॥ ४९९ ॥ ५०० ॥ ५०१ ॥ ५०२ ॥ ५०३ ॥

यदिदं लक्ष्मेत्यादिना पूर्वोक्तं लक्षणद्वयमरञ्जकमित्युक्त्वाऽङ्गुष्ठपर्वदैर्घ्याङ्गुलमानेन यल्लक्षणं तत्प्रशंसति—

**वक्त्रे फूत्काररन्ध्रस्थे कस्य वा विततात्कृतेः ॥**
**स्वररन्ध्राण्याप्नुयातामपि दीर्घतरौ करौ ॥ ५०४ ॥**

**वक्त्रे फूत्काररन्ध्रस्थ इत्यादि ।** विततात्कृतेः कस्य वा वांशिकस्य दीर्घतरावपि करौ स्वररन्ध्राण्याप्नुयातामिति काक्का नैवाऽऽप्नुयातामिति गम्यते । फूत्कारध्वनिनैव तस्यापि पारवश्यं भवतीति भावः ॥ ५०४ ॥

**अन्तरं स्वररन्ध्राणामुक्तमर्धाङ्गुलं च यत् ॥**
**शास्त्रेण तेन कस्यापि स्वरस्य व्यक्तिरीरिता ॥ ५०५ ॥**
**ये पूर्वोक्तक्रमाः सप्त स्वराः सरिगमादयः ॥**
**मानेऽत्र दृश्यते तेषां नासौ क्रमपरिक्रमः ॥ ५०६ ॥**

पुनरपि शास्त्रोक्तमुपालभते—**अन्तरं स्वररन्ध्राणामित्यादिना तदास्तामित्यन्तेन** ॥ ५०५ ॥ ५०६ ॥

**मूर्छनारागभाषादेः सुदूरोत्सारिता कथा ॥**
**किंचिच्छास्त्रकृतां प्राचामाचार्याणां महात्मनाम् ॥ ५०७ ॥**
**उपालम्भोऽपि दोषाय किं तया कथयाऽपि नः ॥**
**तदास्तामुच्यते किंतु किंचिद्देशीविदः प्रति ॥ ५०८ ॥**

**मूर्छनारागभाषादेरिति ।** अत्र रागशब्देन ग्रामरागोपरागा उच्यन्ते । भाषाशब्देन भाषाविभाषान्तरभाषा उच्यन्ते । आदिग्रहणेन रागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गानि गृह्यन्ते तेषाम् । **कथा सुदूरोत्सारितेति ।** मूर्छनादयो न भवन्त्येवेत्यर्थः । शास्त्रोक्तानि कानिचिद्वंशलक्षणान्यनुभाष्य तेषु लक्ष्यविरोधं दर्शयित्वा तथा शास्त्रे निराकृतानामपि त्रयोदशाङ्गुलादीनां वंशानां लक्ष्ये व्यवहारं दर्शयित्वा पुरातनानां मतं दूषयति—**उच्यते किं त्वित्यादिना सूरिः श्रीकरणाग्रणीरित्यन्तेन** ॥ ५०७ ॥ ॥ ५०८ ॥

**माने पञ्चयवे कस्माद्दृश्यतेऽत्र यवोऽधिकः ॥**
**सप्ताङ्गुलादिवंशेषु कथं चोर्ध्वं चतुर्दशात् ॥ ५०९ ॥**
**पूर्वमानाधिकाः सन्ति ते सप्ताष्ट न वा यवाः(?) ॥**
**सार्धपञ्चयवे माने लक्ष्म स्यादव्यवस्थितम् ॥ ५१० ॥**
**त्रयोदशादयो ये च त्रयो वंशा निराकृताः ॥**
**न तत्र युक्तिलेशोऽस्ति येन तुष्यन्ति सूरयः ॥ ५११ ॥**

॥ ५०९ ॥ ५१० ॥ ५११ ॥

अल्पान्तरत्वमुक्तं यत्तदसारतरं पुनः ॥
वंशान्तरान्तरैस्तुल्यमन्तरं तेषु दृश्यते ॥ ५१२ ॥
द्वादशार्धस्वरन्यूनो यथैकादशवंशतः ॥
मुद्रितः स्वररन्ध्रः स्यात्तथा तस्मात्त्रयोदश ॥ ५१३ ॥
एवं चतुर्दशात्पञ्चदशो वंशात्तु षोडशात् ॥
वंशः सप्तदशो लक्ष्माप्रसिद्धमिति चेन्न तत् ॥ ५१४ ॥
वक्तुं तदुक्तरीत्या हि शक्यं तेष्वपि लक्षणम् ॥
त्रयोदशाङ्गुलो वंशो विश्वमूर्तिरुदाहृतः ॥ ५१५ ॥
अधिकं यवपादेन स्याच्चत्वारिंशदङ्गुलम् ॥
विश्वमूर्तौ दण्डमानं तारादौ सुषिराष्टके ॥ ५१६ ॥
प्रत्येकं त्रियवी सार्धा मानमन्तरसप्तके ॥
अङ्गुलद्वितयं मानं पृथगादित्यवत्परम् ॥ ५१७ ॥
युक्तैर्यवेन पादेन द्वाचत्वारिंशदङ्गुलैः ॥
यवस्य चाष्टमांशेन सपादेनाधिकैर्मतः ॥ ५१८ ॥
दण्डः श्रीशार्ङ्गिदेवोक्तो वंशे पञ्चदशाङ्गुले ॥
अङ्गुलत्रितयं मानं शिरःप्रान्ते प्रदेशयोः ॥ ५१९ ॥
प्रत्येकमन्तरालेषु सप्तस्वर्धयवाधिकम् ॥
अङ्गुलद्वितयं मानं मनुवल्लक्षणं परम् ॥ ५२० ॥
यवस्य सार्धपादेन द्वात्रिंशांशयवाधिकः ॥
षट्चत्वारिंशता पादन्यूनैः स्यादङ्गुलैर्मितः ॥ ५२१ ॥
दण्डः सप्तदशे वंशेऽन्तरेषु त्वङ्गुलद्वयम् ॥
पृथक्सद्वियवं मानं स्यात्कलानिधिवत्परम् ॥ ५२२ ॥
एवं प्रसिद्धलक्ष्माणो रागादिव्यक्तिहेतवः ॥
त्रयोदशादयो वंशा निषिध्यन्ते मुधा परैः ॥ ५२३ ॥
अपि पञ्चयवं मानं वंशेष्वष्टादशस्वपि ॥
व्यक्तं प्रगल्भते वक्तुं सूरिः श्रीकरणाग्रणीः ॥ ५२४ ॥

॥ ५१२ ॥ ५१३ ॥ ५१४ ॥ ५१५ ॥ ५१६ ॥ ५१७ ॥ ५१८ ॥ ५१९॥
॥ ५२० ॥ ५२१ ॥ ५१२ ॥ ५२३ ॥ ५२४ ॥

तस्मादृश्यनुसारेण लक्ष्यलक्षणतत्त्ववित् ॥
शार्ङ्गदेवोऽन्यथा वंशस्वरूपं प्रत्यपादयत् ॥ ५२५ ॥

---

१ ग. घ. ङ. 'दशोऽर्ध' ।

अङ्गुलं निबबन्धासौ सिद्धं गणितशास्त्रतः ॥
न ह्यङ्गुलं पञ्चयवं दृश्यते शास्त्रलोकयोः ॥ ५२६ ॥
अङ्गुलं निस्तुषैः षड्भिस्तिर्यग्भिः स्याद्यवोदरैः ॥
दक्षिणस्य करस्य स्यात्खानिमाने कनिष्ठिका ॥ ५२७ ॥

अथ देश्यनुसारेण स्वाभिमतं वंशलक्षणं वक्तुमाह—**तस्माद्देश्यनुसारेणेत्यादिना त्रयः प्राग्वन्न संमता** इत्यन्तेन ॥ ५२५ ॥ ५२६ ॥ ५२७ ॥

न स्थूला न कृशाऽत्यन्तं गृह्यते किंतु मध्यमा ॥
मूलशब्दोऽन्वयं याति मध्यमेनात्र पर्वणा ॥ ५२८ ॥

**मूलशब्दोऽन्वयं याति मध्यमेनात्र पर्वणेति** । कनिष्ठामध्यमपूर्वमूलमित्यर्थः(?) । व्याख्यातप्रायमन्यत् ॥ ५२८ ॥

समा सर्वत्र खानिः स्याद्विषमः स्वरभङ्गकृत् ॥
चतुर्दशाङ्गुलो दण्ड एकवीरस्य देश्यते[1] ॥ ५२९ ॥
तच्छिरःप्रान्तयोर्मानमङ्गुलद्वितयं पृथक् ॥
मानं जातिमुखाख्ये स्यात्फूत्कारसुषिरेऽङ्गुलम् ॥ ५३० ॥
ताररन्ध्रं ततोऽधस्तादङ्गुलान्तरितं मतम् ॥
षोडशांशाधिकं तस्य मानमर्धाङ्गुलं विदुः ॥ ५३१ ॥
तदधोऽधश्च तावन्ति सप्त रन्ध्राणि कल्पयेत् ॥
तेष्वष्टासूर्ध्वरन्ध्राणि सप्त स्युः स्वरसिद्धये ॥ ५३२ ॥
अन्तिमं वायुरन्ध्रं स्यादन्तरालानि सप्त च ॥
पृथगर्धाङ्गुलान्येषां गर्भरन्ध्रं तु संमितम् ॥ ५३३ ॥
मूलतः पञ्चमांशेन कनिष्ठामध्यपर्वणा ॥
खानिस्तदुच्यते देश्यां[2] पूर्वोक्तोक्तस्वरोदयः ॥ ५३४ ॥
त्रयोदशापरे ताररन्ध्रजातिमुखान्तरे ॥
एकैकाङ्गुलवृद्ध्या[3] स्युराचतुर्दश वंशतः ॥ ५३५ ॥
उमापतौ दण्डमानं भवेत्पञ्चदशाङ्गुलम् ॥
एकवीरवदन्यत्तु लक्ष्म त्रिपुरुषे पुनः ॥ ५३६ ॥
दण्डः सार्धैः षोडशभिः सयवार्धैर्मितोऽङ्गुलैः ॥
सप्तान्तराण्यधस्तारात्पृथक्सार्धैस्त्रिभिर्यवैः ॥ ५३७ ॥

॥ ५२९ ॥ ५३० ॥ ५३१ ॥ ५३२ ॥ ५३३ ॥ ५३४ ॥ ५३५ ॥ ५३६ ॥ ॥ ५३७ ॥

---

१ ग. °कविंशस्य द° । २ च. शस्यते । ३ ग. °वृद्धाः स्यु° ।

मितानि लक्षणं शेषं पूर्ववंशवदिष्यते ॥
दण्डश्चतुर्मुखे सार्धाष्टादशाङ्गुलसंमितः ॥ ५३८ ॥
पृथक्सप्तान्तरालानि चतुर्भिः साङ्घ्रिभिर्यवैः ॥
मितानि पूर्ववच्छेषं पञ्चवक्त्रे तु संमितिः ॥ ५३९ ॥
दण्डश्च यवयुग्मेनाभ्यधिकाऽङ्गुलविंशतिः ॥
सप्तानामन्तरालानां पृथक्पञ्चयवा मितिः ॥ ५४० ॥
अन्यत्तु पूर्ववल्लक्ष्म दण्डमानं तु षण्मुखे ॥
अङ्गुलानां यवार्धानां द्वाविंशतिरुदीरिता ॥ ५४१ ॥
सार्धपञ्चयवं मानं पृथगन्तरसप्तके ॥
शेषं तु पूर्ववद्वंशे मुनौ दण्डमितिः पुनः ॥ ५४२ ॥
त्रयोविंशत्य(त्याऽ)ङ्गुलानां सार्धयाऽन्तरसप्तके ॥
प्रत्येकमङ्गुलं मानं शेषं पूर्ववदिष्यते ॥ ५४३ ॥
वंशे वसौ दण्डमानं चतुर्भिरधिका यवैः ॥
पञ्चविंशतिराख्याताऽङ्गुलानामन्तराणि तु ॥ ५४४ ॥
पृथक्सप्तयवानि स्युः शेषं पूर्वोक्तमिष्यते ॥
नाथेन्द्रदण्डमानं स्यात्सपादा सप्तविंशतिः ॥ ५४५ ॥
अङ्गुलानामन्तराणि स्युः सपादाङ्गुलानि तु ॥
प्रत्येकं मूलतः षष्ठांशोनमध्यमपर्वणा ॥ ५४६ ॥
कनिष्ठाया मिता खानिरन्यल्लक्ष्म तु पूर्ववत् ॥
मानं महानन्ददण्डे त्रिंशदङ्गुलकं मितम् ॥ ५४७ ॥
पृथक्सार्धाङ्गुलानि स्युरन्तरालानि सप्त च ॥
नाथेन्द्रवत्परं लक्ष्म रुद्रे दण्डमितिः पुनः ॥ ५४८ ॥
सपादानि त्रयस्त्रिंशदङ्गुलान्यन्तरेषु तु ॥
प्रत्येकं मानमाख्यातं पादन्यूनाङ्गुलद्वयम् ॥ ५४९ ॥
रन्ध्रेष्वष्टसु तारादिष्वष्टमांशसमन्वितम् ॥
अङ्गुलार्धं पृथङ्मानं खानेर्मानं तु मूलतः ॥ ५५० ॥
सप्तमांशविहीनं स्यात्कनिष्ठापर्व मध्यमम् ॥
पूर्वोक्तमन्यदादित्ये वंशे दण्डस्तु कथ्यते ॥ ५५१ ॥

॥ ५३८ ॥ ५३९ ॥ ५४० ॥ ५४१ ॥ ५४२ ॥ ५४३ ॥ ५४४ ॥ ५४५ ॥
॥ ५४६ ॥ ५४७ ॥ ५४८ ॥ ५४९ ॥ ५५० ॥ ५५१ ॥

अष्टमांशाधिकैः पञ्चत्रिंशता संमितोऽङ्गुलैः ॥
अन्तरेष्वष्टमांशोनमङ्गुलद्वितयं पृथक् ॥ ५५२ ॥
मानं खानौ त्वष्टमांशन्यूनमामूलदेशतः ॥
कनिष्ठामध्यपू(प?)र्वोक्तमपरं रुद्रवंशवत् ॥ ५५३ ॥
षोडशांशोनितैः सार्धैः सप्तत्रिंशन्मिताङ्गुलैः ॥
मितो दण्डो विश्वमूर्तावन्तरेष्वङ्गुलद्वयम् ॥ ५५४ ॥
षोडशांशाधिकं माने प्रत्येकं मध्यपर्वणा ॥
कनिष्ठाया मिता खानिः शेषमादित्यवंशवत् ॥ ५५५ ॥
मनौ दण्डस्तु पादोनैकचत्वारिंशताऽङ्गुलैः ॥
मितः शिरःपृथक्प्रान्तदेशौ सार्धाङ्गुलद्वयौ ॥ ५५६ ॥
प्रत्येकमन्तरालेषु सपादत्र्यङ्गुला मितिः ॥
विश्वमूर्तिवदन्यत्तु लक्ष्म श्रीशार्ङ्गिणोदितम् ॥ ५५७ ॥
वंशाश्चतुर्दशैवैवं प्रोक्ताः सोढलसूनुना ॥
नातः परं तु वंशानामीदृशामस्ति संभवः ॥ ५५८ ॥
तेषु रन्ध्राङ्गुलीप्राप्तिर्न कस्यापि हि दृश्यते ॥
अतिमन्द्रध्वनित्वाच्च न ते तत्त्वविदां मताः ॥ ५५९ ॥
गतानुगतिकत्वेन त्वेकवीरादयस्त्रयः ॥
कथिता न तु तेष्वस्ति रक्तिमाधुर्यधुर्यता ॥ ५६० ॥
चतुर्मुखादयस्तस्मादेकादश मनोहराः ॥
स्वमतेऽभ्युपगम्यन्ते वंशाः सोढलसूनुना ॥ ५६१ ॥
शार्ङ्गदेवोऽन्यमानेन वंशरूपं न्यरूपयत् ॥
तिर्यग्यवोदरैः सार्धैश्चतुर्भिर्निस्तुषैरिह ॥ ५६२ ॥
अङ्गुलं तेन पूर्वोक्तरीत्याऽऽरभ्यैकवीरतः ॥
सन्ति द्वाविंशतिर्वंशविशेषास्तेषु चक्ष्महे ॥ ५६३ ॥
वंशश्रेणीमिमामाह निःशङ्कोऽनुपमाभिधाम् ॥
एकवीरे दण्डमानं स्यात्षोडशभिरङ्गुलैः ॥ ५६४ ॥
सार्धेन यवपादेनाभ्यधिकैस्तच्छिरोन्तयोः ॥
सार्धाङ्गुलद्वयं मानं प्रत्येकं परिकीर्तितम् ॥ ५६५ ॥

॥ ५५२ ॥ ५५३ ॥ ५५४ ॥ ५५५ ॥ ५५६ ॥ ५५७ ॥ ५५८ ॥ ५५९ ॥
॥ ५६० ॥ ५६१ ॥ ५६२ ॥ ५६३ ॥ ५६४ ॥ ५६५ ॥

सपादमङ्गुलं जातिमुखे रन्ध्राष्टके पुनः ॥
पृथक्तृतीयभागोनमङ्गुलं मानमिष्यते ॥ ५६६ ॥
अर्धाङ्गुलानि प्रत्येकमन्तरालानि सप्त च ॥
मूलतः पञ्चमांशोनकनिष्ठामध्यपर्वणा ॥ ५६७ ॥
मिता खानिर्भवेत्तारन्ध्रजातिमुखान्तरम् ॥
एकवीरादिसंज्ञाभिः सर्ववंशेषु वेदितम् ॥ ५६८ ॥
अष्टमांशविहीनेन यवार्धेनाधिकैर्भवेत् ॥
अङ्गुलैः सप्तदशभिर्दण्डमानमुमापतौ ॥ ५६९ ॥
एकाङ्गुलाधिकस्तस्माद्दण्डस्त्रिपुरुषे मतः ॥
अनयोर्वंशयोः शेषं लक्ष्म स्यादेकवीरवत् ॥ ५७० ॥
मानं स्याद्यवपादोनविहीनाङ्गुलविंशतिः ॥
चतुर्मुखस्य दण्डस्यान्तरालेष्वर्धमङ्गुलम् ॥ ५७१ ॥
अष्टमांशाधिकं मानं पृथगन्यत्तु पूर्ववत् ॥
सद्वात्रिंशांशपादोनद्वियवाधिकया मितः ॥ ५७२ ॥
दण्डोऽङ्गुलैकविंशत्या पञ्चवक्त्रस्य कीर्तितः ॥
अङ्गुलस्य त्रिभिः पादैः पादोनैरन्तराणि तु ॥ ५७३ ॥
मितानि सप्त प्रत्येकं पूर्ववल्लक्षणं परम् ॥
सार्धत्रयोविंशतिः स्यादङ्गुलानां यवाधिका ॥ ५७४ ॥
मानं षण्मुखदण्डस्य पादोनं त्वङ्गुलत्रयम् ॥
पृथक्शिरोन्तयोर्मानमन्तरेषु तु सप्तसु ॥ ५७५ ॥
यवपादाधिकं मानं पृथक्पादोनमङ्गुलम् ॥
शेषं तु पूर्ववद्वंशे मुनौ स्याद्दण्डसंमितिः ॥ ५७६ ॥
यवपादोनपादोनाङ्गुलषड्विंशतिर्मता ॥
अङ्गुलं यवपादेन न्यूनमन्तरसप्तके ॥ ५७७ ॥
प्रत्येकं मानमाख्यातं शेषं षण्मुखवंशवत् ॥
वसौ वंशे यवार्धेन द्वात्रिंशांशयुजाऽधिका ॥ ५७८ ॥
स्यात्सप्तविंशतिः सार्धाङ्गुलानां दण्डसंमितिः ॥
सपादेन तु पादेन द्वात्रिंशांशयुतेन च ॥ ५७९ ॥

॥ ५६६ ॥ ५६७ ॥ ५६८ ॥ ५६९ ॥ ५७० ॥ ५७१ ॥ ५७२ ॥ ५७३ ॥
॥ ५७४ ॥ ५७५ ॥ ५७६ ॥ ५७७ ॥ ५७८ ॥ ५७९ ॥

यवस्याभ्यधिकं मानमन्तरेष्वङ्गुलं पृथक् ॥
शेषं तु मुनिवद्दण्डे नाथेन्द्रस्य तु संमितिः ॥ ५८० ॥
यवाष्टमांशसहितैरेकोनत्रिंशदङ्गुलैः ॥
सार्धपादाधिकैरुक्ता पृथक्तु सुषिराष्टके ॥ ५८१ ॥
तारादौ यवयुक्तेनार्धाङ्गुलेन मितिर्भवेत् ॥
अन्तरेषु पृथङ्मानमष्टमांशाधिकाङ्गुलम् ॥ ५८२ ॥
शेषं तु पूर्ववद्दण्डे महानन्दस्य संमितिः ॥
उक्ता यवाष्टमांशोनाङ्गुलैकत्रिंशदिष्यते ॥ ५८३ ॥
सपादावन्तरालेषु प्रत्येकं मानमुच्यते ॥
सपादमङ्गुलं शेषं पूर्वोक्तं शार्ङ्गिणोदितम् ॥ २८४ ॥
अङ्गुलानि त्रयस्त्रिंशदष्टमांशयुतानि तु ॥
यवाष्टमांशयुक्तानिं रुद्रे दण्डमितिर्भवेत् ॥ ५८५ ॥
युक्तं सार्धेन पादेनाङ्गुलमन्तरसप्तके ॥
प्रत्येकं मानमाख्यातं खानेर्मानं तु मूलतः ॥ ५८६ ॥
षष्ठांशोनं मध्यपर्व कनिष्ठायाः प्रकीर्तितम् ॥
शेषं प्राग्वदथाऽऽदित्ये स्यात्पञ्चत्रिंशताऽङ्गुलैः ॥ ५८७ ॥
यवाष्टमांशसहितैर्दण्डमानमथान्तरम् ॥
सार्धाङ्गुलकमेकैकं खानिमानं तु कीर्तितम् ॥ ५८८ ॥
मूलतः सप्तमांशोनं कनिष्ठापर्व मध्यमम् ॥
प्राग्वत्परं विश्वमूर्तौ वंशे दण्डस्य संमितिः ॥ ५८९ ॥
यवाष्टमांशसहितैः स्यात्सप्तत्रिंशताऽङ्गुलैः ॥
सार्धपादाधिकैः शीर्ष(र्ष)प्रान्तौ त्र्यङ्गुलकौ पृथक् ॥ ५९० ॥
अन्तरेष्वष्टमांशोनाधिकं सार्धाङ्गुलं पृथक् ॥
मानं खानेस्त्वष्टमांशन्यूनमामूलतो मतम् ॥ ५९१ ॥
मध्यपर्व कनिष्ठायाः पूर्वोक्तं शेषमिष्यते ॥
दण्डमानं मनोरेकोनचत्वारिंशताऽङ्गुलैः ॥ ५९२ ॥
सपादैरष्टमांशेन यवस्य सहितैरपि ॥
पादोनमङ्गुलद्वंद्वं पृथगन्तरसप्तके ॥ ५९३ ॥

॥ ९८० ॥ ९८१ ॥ ९८२ ॥ ९८३ ॥ ९८४ ॥ ९८५ ॥ ९८६ ॥ ९८७ ॥
॥ ९८८ ॥ ९८९ ॥ ९९० ॥ ९९१ ॥ ९९२ ॥ ९९३ ॥

मानं खानिस्तु मातव्या कनिष्ठामध्यपर्वणा ॥
पूर्वोक्तमपरं सार्धैकचत्वारिंशताऽङ्गुलैः ॥ ५९४ ॥
युक्तैर्यवस्य पादोनपादद्वंद्वेन संमितिः ॥
दण्डे पञ्चदशस्य स्यात्ततः सार्धयवत्रया ॥ ५९५ ॥
प्रत्येकमष्टरन्ध्री स्यादन्तरेष्वङ्गुलद्वयम् ॥
अष्टमांशोनितं मानं प्रत्येकं मनुवत्परम् ॥ ५९६ ॥
कलानिधौ सपादैः स्यात्रिचत्वारिंशताऽङ्गुलैः ॥
यवाधिकैर्दण्डमानमन्तरालेषु सप्तसु ॥ ५९७ ॥
प्रत्येकमङ्गुलद्वंद्वं सपादं पूर्ववत्परम् ॥
दण्डोऽष्टादशवंशस्याष्टाचत्वारिंशताऽङ्गुलैः ॥ ५९८ ॥
यवान्वितैः सपादेन सपादेनाधिकैर्मितः ॥
प्रत्येकं षोडशांशोनसार्धाङ्गुलयुगं मतम् ॥ ५९९ ॥
प्रमाणमन्तरालेषु परं पूर्ववदिष्यते ॥
दण्डे त्वेकोनविंशस्य साङ्घ्रि पञ्चाशदङ्गुलम् ॥ ६०० ॥
यवेनाभ्यधिकं मानमन्तरेषु तु सप्तसु ॥
प्रत्येकं षोडशांशोनाधिकं सार्धाङ्गुलद्वयम् ॥ ६०१ ॥
प्राग्वत्परं मुरल्यास्तु दण्डमानं यवाधिकम् ॥
द्वापञ्चाशद्भवेत्सार्धाङ्गुलानामन्तराणि तु ॥ ६०२ ॥
पादोनत्र्यङ्गुलानि स्युः प्रत्येकं पूर्ववत्परम् ॥
एकविंशे दण्डमानं पञ्चपञ्चाशदङ्गुलम् ॥ ६०३ ॥
सपादं षोडशांशेनाभ्यधिकं यवसंयुतम् ॥
अङ्गुलान्यन्तराणि स्युः प्रत्येकं पूर्ववत्परम् ॥ ६०४ ॥
दण्डमानं श्रुतिनिधावष्टापञ्चाशदङ्गुलम् ॥
सार्धं यवाधिकं तस्य त्वन्तरेष्वङ्गुलत्रयम् ॥ ६०५ ॥
सपादषोडशांशोनाधिकं मानं पृथङ्मतम् ॥
पूर्वोक्तमपरं लक्ष्म शार्ङ्गदेवेन कीर्तितम् ॥ ६०६ ॥
सर्वेषामपि वंशानां पिण्डः सार्धयवो भवेत् ॥
रक्तिमाधुर्यविरहात्पञ्चवक्त्रादधस्तनाः ॥ ६०७ ॥

॥ ५९४ ॥ ५९५ ॥ ५९६ ॥ ५९७ ॥ ५९८ ॥ ५९९ ॥ ६०० ॥ ६०१ ॥
॥ ६०२ ॥ ६०३ ॥ ६०४ ॥ ६०५ ॥ ६०६ ॥ ६०७ ॥

चतुर्मुखादयो वंशा नेष्टाः श्रीशार्ङ्गिसूरिणा ॥
देशीवंशेषु सर्वेषु मुद्रितात्पूर्ववंशतः ॥ ६०८ ॥
उत्तरो मुद्रितो वंशः स्वरार्धेनाधिको भवेत् ॥
वंशानामल्पमानानां सर्वत्रोत्तरता मता ॥ ६०९ ॥
स्वरार्धं स्यादूर्ध्वतया(?) दक्षिणस्य कनिष्ठया ॥
अतस्तस्यां मुद्रितायां(?) पूर्ववंशस्य जायते ॥ ६१० ॥
उत्तरो मुद्रितो वंशः पूर्वतुल्यस्वरोदयः ॥
उद्धृताङ्गुलिवृद्धौ तु तस्मादप्युत्तरोत्तरे ॥ ६११ ॥
मिलन्ति मुद्रिता वंशा यथासंख्यं पुरातनैः ॥
स्वरोदयेऽप्यङ्गुलयः शास्त्रीये लौकिके तथा ॥ ६१२ ॥
वंशे तुल्यमकाराः स्युरिति श्रीशार्ङ्गिणोदितम् ॥
एकस्वराणि रन्ध्राणि संनिधौ व्यवधावपि ॥ ६१३ ॥
मिलन्ति सर्ववंशानामिति ब्रूते हरप्रियः ॥
मानहीनं तु यद्रन्ध्रं खानिर्वा यत्र तादृशी ॥ ६१४ ॥
न तद्रन्ध्रैः स्वजातीयैर्मिलन्ति स्वरभङ्गतः ॥
चतुर्दशादिवंशानामावंशादेकवीरतः ॥ ६१५ ॥
यथैकैकस्वराधिक्यं वंशे स्यादुत्तरोत्तरे ॥
मुद्रिते पूर्वपूर्वस्माद्वंशान्मुद्रितरन्ध्रकात् ॥ ६१६ ॥
इदानीं तादृशीं वंशस्वरूपरचनामिमाम् ॥
शार्ङ्गदेवः समाचष्टे शिवानुग्रहशुद्धधीः ॥ ६१७ ॥
वंशपद्धतिरेषा च शार्ङ्गविद्वा(द्या?)भिधीयते ॥
अङ्गुलं षड्यवं चात्र रन्ध्रादिमितये मतम् ॥ ६१८ ॥
एकवीरे दण्डमानं सपादद्वादशाङ्गुलम् ॥
यवार्धेनाधिकं तस्य शिरोन्तौ द्व्यङ्गुलौ पृथक् ॥ ६१९ ॥
मुखरन्ध्रेऽङ्गुलं मानं तारादौ सुषिराष्टके ॥
प्रत्येकमङ्गुलदलं तेषां त्वन्तरसप्तके ॥ ६२० ॥
यवद्वयं पृथङ्मानमुक्तं श्रीशार्ङ्गिसूरिणा ॥
सर्ववंशेषु तारस्य मुखरन्ध्रस्य चान्तरे ॥ ६२१ ॥

॥ ६०८ ॥ ६०९ ॥ ६१० ॥ ६११ ॥ ६१२ ॥ ६१३ ॥ ६१४ ॥ ६१५ ॥
॥ ६१६ ॥ ६१७ ॥ ६१८ ॥ ६१९ ॥ ६२० ॥ ६२१ ॥

---

१ घ. ङ. स्यादुद्धृत॰ । २ घ. ङ. ॰स्यामुद्धृता॰ ।

एकवीरादिसंज्ञाभिर्विज्ञेयाऽङ्गुलसंमितिः ॥
उमापतौ त्रिपुरुषे चैकैकाङ्गुलवर्धितम् ॥ ६२२ ॥
दण्डमानं परं लक्ष्म त्वेकवीरवदिष्यते ॥
चतुर्मुखे दण्डमानं पादन्यूनयवाधिकैः ॥ ६२३ ॥
अङ्गुलैः पञ्चदशभिः सार्धैरस्यान्तरेषु तु ॥
सपादद्वियवी मानं पृथगन्यत्तु पूर्ववत् ॥ ६२४ ॥
सपादैः सप्तदशभिः पादन्यूनयवाधिकैः ॥
अङ्गुलैर्दण्डमानं स्यात्पञ्चवक्त्रेऽन्तरेषु तु ॥ ६२५ ॥
षोडशांशाधिका मानं पादोनत्रियवी पृथक् ॥
शेषं तु पूर्ववद्दण्डे षण्मुखस्य तु संमितिः ॥ ६२६ ॥
युक्ता यवेन सार्धेनाष्टमांशरहितेन च ॥
एकोनविंशतिः प्रोक्ताऽङ्गुलानामन्तरेषु तु ॥ ६२७ ॥
यवस्य सार्धपादाभ्यां युक्तमर्धाङ्गुलं पृथक् ॥
पूर्वोक्तमपरं लक्ष्म दण्डे तु स्यान्मितिर्मुनेः ॥ ६२८ ॥
अङ्गुलैरेकविंशत्या सार्धपादद्वयाधिकैः ॥
यवस्य चाष्टमांशेन सपादेन समन्वितैः ॥ ६२९ ॥
सपादयवपादेन द्वात्रिंशांशयुतेन च ॥
युक्तमन्तरमानं स्यात्पृथक्पादोनमङ्गुलम् ॥ ६३० ॥
शेषं तु पूर्ववल्लक्ष्म ज्ञेयं वंशे वसौ पुनः ॥
अष्टमांशविहीनेन यवेनाधिकया भवेत् ॥ ६३१ ॥
चतुर्विंशत्यङ्गुलानां चरणन्यूनया मितिः ॥
पृथगष्टासु रन्ध्रेषु सपादत्रियवी मितिः ॥ ६३२ ॥
प्रत्येकमन्तरालेषु साष्टमांशयवाधिकम् ॥
पादोनमङ्गुलं मानमपरं लक्ष्म पूर्ववत् ॥ ६३३ ॥
सपादयवसंयुक्ताऽङ्गुलषड्विंशतिर्भवेत् ॥
मानं नाथेन्द्रदण्डस्यान्तरालेषु तु सप्तसु ॥ ६३४ ॥
अष्टमांशाधिकं मानमङ्गुलं पूर्ववत्परम् ॥
यवाष्टमांशसहिता सार्धाष्टाविंशतिर्मता ॥ ६३५ ॥

॥ ६२२ ॥ ६२३ ॥ ६२४ ॥ ६२५ ॥ ६२६ ॥ ६२७ ॥ ६२८ ॥ ६२९ ॥
॥ ६३० ॥ ६३१ ॥ ६३२ ॥ ६३३ ॥ ६३४ ॥ ६३५ ॥

अङ्गुलानां दण्डमानं महानन्देऽन्तरेषु तु ॥
सपादमङ्गुलं सार्धयवपादाधिकं पृथक् ॥ ६३६ ॥
प्राग्वत्परं रुद्रदण्डे त्वङ्गुलानां यवाधिका ॥
एकत्रिंशन्मिता मानमथ सार्धयवत्रया ॥ ६३७ ॥
प्रत्येकमष्टरन्ध्री स्यादन्तरालेषु सप्तसु ॥
सार्धाङ्गुलं पृथङ्मानं पूर्वोक्तं शेषमिष्यते ॥ ६३८ ॥
दण्डस्य मानमादित्ये स्याच्चतुस्त्रिंशदङ्गुलम् ॥
यवेन च सपादेन द्वात्रिंशांशयुजाऽधिकम् ॥ ६३९ ॥
द्वात्रिंशांशोनपादाभ्यां यवस्य सहितं पृथक् ॥
पादोनमङ्गुलद्वंद्वं मानमन्तरसप्तके ॥ ६४० ॥
प्राग्वत्परं विश्वमूर्तौ स्यात्सप्तत्रिंशदङ्गुलम् ॥
दण्डमानं युतं सार्धयवपादद्वयेन च ॥ ६४१ ॥
प्रत्येकमन्तरालेषु त्वङ्गुलद्वितयं मतम् ॥
यवस्य सार्धपादेनाभ्यधिकं पूर्ववत्परम् ॥ ६४२ ॥
दण्डो यवाष्टमांशेन सपादेन समन्वितैः ॥
चतुश्चत्वारिंशता स्यादङ्गुलैः संमितो मनोः ॥ ६४३ ॥
सार्धाङ्गुलद्वयमितौ शिरःप्रान्तौ मतौ पृथक् ॥
सार्धेन षोडशांशेन यवस्याभ्यधिकैस्त्रिभिः ॥ ६४४ ॥
पादोनैरङ्गुलैर्मानमन्तरालेषु सप्तसु ॥
पूर्वोक्तं लक्षणं शेषमवोचत्करणाग्रणीः ॥ ६४५ ॥
खानिः सर्वेषु वंशेषु कनिष्ठामध्यपर्वणा ॥
मूलेन संमिता कार्येत्युक्तं सोढलसूनुना ॥ ६४६ ॥
सर्वमन्यत्तु वंशानां देशीशास्त्रभुवां समम् ॥
एकवीरादयोऽत्रापि त्रयः प्राग्वन्न संमताः ॥ ६४७ ॥

॥ ६३६ ॥ ६३७ ॥ ६३८ ॥ ६३९ ॥ ६४० ॥ ६४१ ॥ ६४२ ॥ ६४३॥
॥ ६४४ ॥ ६४५ ॥ ६४६ ॥ ६४७ ॥

धातून्वृत्तित्रयं तत्त्वानुगतौघांश्च यान्पुरा ॥
वाद्यान्याश्रावणादीनि वीणायां यान्यवादिषम् ॥ ६४८ ॥
गेयं श्रुतिस्वरग्राममूर्छनादि च यन्मतम् ॥
तत्सर्वं वंशवाद्येऽत्र विशेषेणोपदर्शयेत् ॥ ६४९ ॥

---

१ ग. 'न्तरेषु तु स'। २ च. 'तुर्विंश'।

वंशवीणाशरीराणि त्रयोऽमी स्वरहेतवः ॥
ललितो मधुरः स्निग्धस्तेषु वंशः प्रशस्यते ॥ ६५० ॥

वीणायामिति(व) वंशेऽपि धात्वादयः कर्तव्या इत्याह—**धातूनित्यादि** ॥ ६४८॥ ॥ ६४९ ॥ ६५० ॥

वंशवीणाशरीराणामेकीभावेन यो ध्वनिः ॥
तत्र रक्तिविशेषस्य प्रमाणं विबुधा विदुः ॥ ६५१ ॥

वंशवीणाशरीरमेलनोत्पन्नस्य ध्वने रक्तिं स्तौति—**प्रमाणं विबुधा विदुरिति** ॥ ६५१ ॥

अध्वन्यानां प्रवासेषु कामिनीनिर्जितेषु[१] च ॥
शोकार्तेषु प्रयुञ्जीत मृदुमध्यलयध्वनिम् ॥ ६५२ ॥
वंशं युञ्जीत शृङ्गारे द्रुतादिललितध्वनिम् ॥
कम्पितस्फुरितध्वानं वंशं द्रुतलयाश्रयम् ॥
क्रोधाभिमानयोः कुर्यान्मतङ्गेनेति कीर्तितम् ॥ ६५३ ॥

वंशस्य विनियोगं दर्शयति—**अध्वन्यानामित्यादि** ॥ ६५२ ॥ ६५३ ॥

स्निग्धता घनता रक्तिव्यक्तिः प्रचुरता ध्वनेः ॥
लालित्यं कोमलत्वं च नादानुरणनं तथा ॥ ६५४ ॥
त्रिस्थानत्वं श्रावकत्वं माधुर्यं सावधानता ॥
द्वादशेति गुणाः प्रोक्ताः फूत्कारे सूरिशार्ङ्गिणा ॥ ६५५ ॥

अथ फूत्कारस्य गुणानाह—**स्निग्धतेत्यादि** ॥ ६५४ ॥ ६५५ ॥

तत्र शब्दगुणेष्वेवैकादश प्रोक्तलक्षणाः ॥
*फूत्कृतेः सावधानत्वं न्यूनताधिक्यवर्जनम् ॥ ६५६ ॥

**तत्र शब्दगुणेष्वेवैकादश प्रोक्तलक्षणा इति** । तत्र द्वादशगुणेषु मध्ये । एकादश सावधानताव्यतिरिक्ताः स्निग्धतादय एकादश गुणाः । **शब्दगुणेष्वेवेति** । प्रकीर्णकाध्याये मृष्टादयः पञ्चदश गुणा उक्ताः । तत्रैव प्रोक्तलक्षणा द्रष्टव्याः । प्रोक्तलक्षणत्वं च शरीरस्य वंशस्य च शब्दस्यैकरूपतासंपादनादिति भावः । सावधानतां लक्षयति—**फूत्कृतेरिति** । अत्र फूत्कारशब्देन मुखरन्ध्रजनितः शब्द उच्यते॥ ६५६

इति द्वादश फूत्कारगुणाः ।

---

* फूत्कार इति पाठोऽत्र टीकानुरोधेन युक्तः ।

---

[१] ख. य. 'नीर्गर्जि' ।

फूत्कारो यमलः स्तोकः कृशः स्खलित इत्यमी ॥
फूत्कारदोषा यमलं ब्रुवते प्रतिफूत्कृतिम् ॥
एवमन्वर्थनामत्वान्नोच्यते लक्षणं पृथक् ॥ ६५७ ॥

अथ फूत्कारदोषमा(षाना)ह— फूत्कार इत्यादि ॥ ६५७ ॥

कपिलस्तुम्बकी काकी संदष्टश्चाव्यवस्थितः ॥
पञ्चेति फूत्कृतेर्दोषानपरानूचिरे परे ॥ ६५८ ॥

मतान्तरेणान्यानपि दोषानाह—कपिल इत्यादि ॥ ६५८ ॥

यः कफोपहताद्वक्त्राद्विस्वरः स्फुटितो भवेत् ॥
कपिलोऽसौ तुम्बु(म्ब)ध्वानप्रायः प्रोक्तस्तु तुम्बकी ॥ ६५९ ॥

कफोपहताच्छ्लेष्मणा निरुद्धात् । तुम्बु(म्ब)ध्वानप्राय इति । तुम्बु(म्ब) इत्यनुकरणशब्दः । तुम्बध्वानः । तेन प्रचुर इत्यर्थः । तुम्बु इत्यपि पाठो दृश्यते सोऽप्यनुकरणशब्दः ॥ ६५९ ॥

तारन्यूनतया काकस्वरः काकीति कथ्यते ॥
अल्पः संदष्टवद्भाति योऽसौ संदष्ट उच्यते ॥
ऊनोऽधिको वा यो रूक्षः कथ्यते सोऽव्यवस्थितः ॥ ६६० ॥

तारन्यूनतयेति । तारस्थाने श्रुतिहीनत्वेनेत्यर्थः । संदष्टवदल्प इति । यथा लोके संदष्टमुपदेशादिकं कतिपयावयवशून्यमल्पं दृश्यते तथा फूत्कारोऽप्यल्पतया संदष्टवत्संदष्ट उच्यते ॥ ६६० ॥

कण्ठस्य गुणदोषा ये पुरोक्तास्तेषु केचन ॥
फूत्कारेऽपि यथायोगं योजनीया मनीषिभिः ॥ ६६१ ॥

कण्ठस्येति । शरीरस्य ध्वनेर्गुणा मृष्टादयः । दोषा रूक्षादयः ॥ ६६१ ॥

इति दश फूत्कारदोषाः ।

---

अथ वांशिकगुणानाह—

अङ्गुलीसारणाभ्यासः सुस्थानत्वं सुरागता ॥
सुरागव्यक्तिमा(र्मा?)धुर्यान्विता वेगाद्गतागते ॥
गीतवादनदक्षत्वं गातॄणां *स्थानदायिता ॥ ६६२ ॥

अङ्गुलीसारणाभ्यास इत्यादि । वेगाद्गतागते सुरागव्यक्तिमा(र्मा?)धुर्यान्वितेति । गतमारोहः । आगतमवरोहः । आरोहावरोहयोर्वेगकृतयोरपि सुरागव्यक्ति-

---

*तानदायितेति टीकानुरोधी पाठोऽत्र युक्तः स च नोपलभ्यते ।

---

१ ग. वायुरू° । घ. वा यो भूयः क° । २ ग. °गायता गतेः । गी° ।

माधुर्यान्वितत्वं गुण इत्यर्थः । **गातॄणां तानदायितेति** । गातृभिर्गातुमिष्यमाणस्य तानस्य रागानुगुण्येन प्रथमं प्रदर्शनम् । स्थानदायितेति पाठे तु स्थानानि मन्द्रमध्यताराणि तेषां प्रदर्शनम् ॥ ६६२ ॥

**तद्दोषाच्छादनं मार्गदेशीरागेषु कौशलम् ॥ ६६३ ॥**

**तद्दोषाच्छादनमिति** । तेषां गातॄणां दोषाः संदष्टत्वादयः पूर्वोक्ताः पञ्चविंशतिस्तेषामाच्छादनम् । यथा श्रोतॄणां रागभङ्गो न भवति तथा तद्दोषतिरोधानं वांशिकः कुर्यादित्यर्थः ॥ ६६३ ॥

अथ वांशिकदोषानाह—

**स्वस्थानवदपस्थाने रागोद्भूतिप्रगल्भता ॥**
**वांशिकस्य गुणानेतान्वक्ति श्रीकरणाग्रणीः ॥ ६६४ ॥**

इति वांशिकगुणाः ।

---

**स्वस्थानवदपस्थाने रागोत्पत्तिप्रगल्भतेति** । स्वस्थानानि पूर्वोक्तानि मुखचालनादीनि चत्वारि । ततोऽतिरिक्तानि स्वरस्थानान्यपस्थानान्युच्यन्ते । अत्र यद्यपि स्वस्थान एव रागाभिव्यक्तिर्भवति नापस्थाने तथाऽपि वांशिकः स्वप्रगल्भतयाऽपस्थानेऽपि स्वस्थाना(न)[व]द्रागमुत्पादयति चेत्तस्य गुणः ॥ ६६४ ॥

**मिथ्याप्रयोगबाहुल्यमेतद्गुणविपर्ययः ॥**
**इष्टस्थानानवाप्तिश्च शिरसः कम्पनं तथा ॥**
**वांशिकस्येति दोषाः स्युर्वर्जनीयाः प्रयत्नतः ॥ ६६५ ॥**

**मिथ्याप्रयोगेत्यादि** । मिथ्याप्रयोगोऽस्थाने गमकालापः । यथोक्तं प्राक्—

"आलापो गमकालप्तिरक्षरैर्वर्जिता मता ।
सैव प्रयोगशब्देन शार्ङ्गदेवेन शब्दिता" इति ॥

तस्य बाहुल्यं प्रचुरता । **एतद्गुणविपर्यय इति** । एतेषामङ्गुलीसरणाभ्यासादीनां गुणानां विपर्ययोऽन्यथाभावः ॥ ६६५ ॥

इति वांशिकदोषाः ।

---

**एकः स्याद्वांशिको मुख्यश्चत्वारोऽस्यानुयायिनः ॥**
**वांशिकानामिति प्रायस्तज्ज्ञैर्वृन्दं निगद्यते ॥ ६६६ ॥**

वांशिकानां वृन्दमाह—**एकः स्यादित्यादि** ॥ ६६६ ॥

इति वांशिकवृन्दम् ।

---

**अधुना मुग्धबोधार्थमुदाहरणमात्रतः ॥**
**वंशे देशीस्थरागाणां केषांचिद्वादनं ब्रुवे ॥ ६६७ ॥**

किंनर्यामिव वंशेऽपि केषांचिद्देशीरागाणां वादनक्रमं दर्शयितुमाह—**अधुने-त्यादि** ॥ ६६७ ॥

तत्र तावन्मध्यमादेर्वादनक्रमं दर्शयति—

**मध्यमं स्थायिनं कृत्वा तृतीये कम्पिते स्वरे ॥**
**विलम्बिते द्वितीयेऽथ स्थायिनि न्यस्यते यदा ॥**
**स्वस्थानं प्रथमं प्रोक्तं मध्यमादेस्तदा बुधैः ॥ ६६८ ॥**

**मध्यममित्यादि** । स्थायिनं कृत्वा ग्रहं कृत्वा । **तृतीय इति** । अत्र मध्यमोदाहरणक्रमेण तृतीयो धैवतः । तस्यात्र विवादित्वात्तद्वादने क्रियमाणे रागहानिर्भवत्येव । अतस्तं विहाय तदुत्तरो निषादोऽत्र तृतीयत्वेन ग्राह्य इति मन्तव्यम् । यथैवं तथा पूर्वोक्तम्—

"असंभवे पूर्वपूर्वस्वरस्य तु परं परम् ।
क्रमेण स्वरमारोहेत्सर्वरागेष्विति स्थितिः" इति ॥

वर्ज्यत्वेनासंभव इति व्याख्यातं च। तस्मात्तृतीये स्वरे निषादे कम्पिते सति द्वितीये पञ्चमे विलम्बिते सति स्थायिनि मध्यमे यदा न्यस्यते तदा मध्यमादेः प्रथमं स्वस्थानं प्रोक्तम् ॥ ६६८ ॥

**तृतीयकम्पनादूर्ध्वं चतुर्थं पञ्चमं ततः ॥ ६६९ ॥**
**तुर्यस्वरं द्वितीयं च कृत्वा न्यासो ग्रहे यदा ॥**
**तदा द्वितीयं स्वस्थानं शार्ङ्गदेवेन कीर्तितम् ॥ ६७० ॥**

**तृतीयकम्पनादिति** । तृतीयस्य निषादस्य कम्पनं कृत्वा । ऊर्ध्वमनन्तरं चतुर्थं तं निषादमेव । नन्वेकस्यैव निषादस्य तृतीयत्वं चतुर्थत्वं च कथमिति चेत् । उच्यते । तस्य तृतीयत्वं लक्षणयाऽऽश्रितम् । चतुर्थत्वं तु मुख्यमेव । न हि गौणमुख्यव्यवहारयोरेकत्र विरोधो दृष्टः । यथा गङ्गायां घोष इत्यत्र गङ्गाशब्देन तटो लक्ष्यत इति तस्य तटशब्दवाच्यत्वं न हीयते । तद्वदत्रापीति न दोषः। लक्ष[1]णवाक्येऽपि लक्षणावृत्त्याश्रयणे संनिहितस्वर इवासंनिहितस्वरेण संसृज्य प्रयोगः प्रयोजनं द्रष्टव्यम् । एवं लक्ष्यानुसारेण देश्यां सर्वत्र लक्ष्यविरोधिशास्त्रमन्यथा नेयम् । **पञ्चममिति** । षड्जमित्यर्थः । ततः षड्जानन्तरं तुर्यस्वरं निषादम् । द्वितीयं पञ्चमस्वरं च कृत्वा वादयित्वा । यदा ग्रहे मध्यमे न्यासः क्रियते तदा द्वितीयं स्वस्थानं कीर्तितम् ॥ ६६९ ॥ ६७० ॥

**चतुर्थस्वरमा[2]हत्य स्थायिनं तत्परं ततः ॥**
**समुच्चार्य स्वरं तुर्यं पञ्चमं तु विलम्ब्य च ॥ ६७१ ॥**

---

१ ख. 'क्षणावा'। २ ग. 'माहृत्य । च. 'मागत्य ।

षष्ठं च पञ्चमं कृत्वा द्वितीयं च ग्रहे यदा ॥
न्यासस्तदा तृतीयं स्यात्स्वस्थानमिति तद्विदः ॥ ६७२ ॥

**चतुर्थस्वरमाहृ(ह)त्येति** । निषादमाह[त्य?]गमकयुक्तं कृत्वा ततः स्थायिनं मध्यमं तत्परं पञ्चमं च समुच्चार्य तुर्यं निषादम् । पञ्चमं तु षड्जं विलम्ब्य च । **षष्ठमिति** । ऋषभस्यात्र विवादित्वात्परं गान्धारमित्यर्थः । पञ्चमं षड्जम् । द्वितीयं पञ्चमस्वरं च कृत्वा ग्रहे मध्यमे न्यासस्तदा तृतीयं स्वस्थानं भवति ॥ ६७१ ॥ ॥ ६७२ ॥

ग्रहद्वितीयतुर्यांश्च पञ्चमं सप्तमं ततः ॥
कृत्वाऽष्टमं विलम्ब्याथ द्वितीयं तत्परं ततः ॥ ६७३ ॥
द्वितीयं सप्तमं कृत्वा पञ्चमं च चतुर्थकम् ॥
द्वितीयं च ग्रहे न्यासः स्वस्थानं तुर्यमिष्यते ॥ ६७४ ॥

**ग्रहद्वितीयतुर्यांश्चेति** । मध्यमपञ्चमनिषादानित्यर्थः । ततः पञ्चमं षड्जमित्यर्थः । सप्तमं गान्धारमित्यर्थः । एतान्कृत्वा । अथाष्टमं तारस्थितं मध्यममित्यर्थः । **पञ्चमं चतुर्थकं द्वितीयं चेति** । सनिपानित्यर्थः । ग्रहे मध्यमे न्यास इत्यनेनात्रापि वंशप्रकरणे स्थायिग्रहशब्दयोरेकार्थत्वं द्रष्टव्यम् । एवं स्थायिनि मध्यमे न्यासः कृतश्चेच्चतुर्थं स्वस्थानमिष्यते ॥ ६७३ ॥ ६७४ ॥

दृश्यते मध्यमादेस्तु ग्रहो वंशेषु मुद्रितः ॥ ६७५ ॥

इति मध्यमादिः ।

**दृश्यते मध्यमादेस्तु ग्रहो वंशेषु मुद्रित इति** । वंशेष्विति बहुवचनेनाष्टादशाङ्गुलादिषु तत्तन्मतोक्तलक्षणेषु यस्मिन्वंशे यो मुद्रितः स्वरो भवति यथाऽष्टादशाङ्गुले वंशे सप्तसु स्वररन्ध्रेषु मुद्रितेषु षड्जो जायते स तत्र मुद्रित उच्यते । कलानिधौ वंशे मन्द्रर्षभो मुद्रितः स्वरस्तथा मनौ वंशे मन्द्रगान्धारो मुद्रित इति। यस्मिन्वंशे मध्यमादिरागः क्रियते तस्मिन्वंशे यो मुद्रितः स्वरः स एव मध्यमादेर्ग्रहो दृश्यत इत्यनेन लक्ष्यत इति गम्यते । उत्तरत्रापि मुद्रितो ग्रह इति यत्र वक्ष्यते तत्रैवं द्रष्टव्यम् ॥ ६७५ ॥

इति मध्यमादिः ।

---

अथ मालवश्रियः स्वस्थानानि दर्शयति—

षड्जे ग्रहे ममाहत्य षड्जं कृत्वा हतौ रिमौ ॥
पमान्दोल्य प्रकम्प्यापि पमगां द्विः(गान्द्विः) प्रयुज्य च ॥६७६॥

---

१ ग. ग्रहं तृती° । २ ख. °रणस्यापि प्र° ।

आन्दोल्य मं प्रकम्प्यापि लघुषड्जं विधाय च ॥
कम्पयित्वा रिमौ द्वित्रान्वारानावर्त्य षड्जगौ ॥ ६७७ ॥
स्थायिन्यासाद्भवेदाद्यं स्वस्थानं मालवश्रियः ॥
आद्यस्वस्थानविधिना विधाय स्वरपञ्चकम् ॥ ६७८ ॥
निं विलम्ब्यावरोही चेत्पूर्वः स्वस्थानगः कृतः ॥
तदा द्वितीयं स्वस्थानमास्थितं रागवेदिभिः ॥ ६७९ ॥
कृत्वा द्वितीयं स्वस्थानं धान्तमान्दोल्य सप्तमम् ॥
आहत्य च द्वितीयस्य स्वस्थानस्यावरोहणम् ॥ ६८० ॥
कृतं यत्र तृतीयं तत्स्वस्थानमुदितं बुधैः ॥
आहत्य मं द्विगुणसं कृत्वा रिं तत्परं ततः ॥ ६८१ ॥
तं सं प्रोच्य निमाहत्य विलम्ब्य पुनरप्यमुम् ॥
कृत्वा तृतीयं स्वस्थानावरोही क्रियते यदा ॥
तदा चतुर्थं स्वस्थानमाख्यातं मालवश्रियः ॥ ६८२ ॥

**षड्जे ग्रह इत्यादि** । षड्जे ग्रहे सतीति । अनेन स्वरान्तरस्यापि लक्ष्यानुसारेण ग्रहत्वमभ्युपगन्तव्यमिति गम्यते । अतो यदा षड्जो ग्रहो भवति स्थायी भवति । तदा षड्जापेक्षया योगो(मो) मध्यमस्तमाहत्य । एवमन्येऽपि स्वराः षड्जापेक्षयोन्नेयाः । ॥ ६७६ ॥ ६७७ ॥ ६७८ ॥ ६७९ ॥ ६८० ॥ ६८१ ॥ ६८२ ॥

इममेवार्थं ग्रन्थकारः स्वयमेवाऽऽह—

षड्जोऽन्यो वा स्वरो वंशे ग्रहोऽस्या मुद्रितः स्वरः ॥ ६८३ ॥
प्रकल्प्य तस्य षड्जत्वं परेषामृषभादि त(दिता)म् ॥
लक्ष्मेदं योजयेत्सर्वमित्युक्तं सूरिशार्ङ्गिणा ॥ ६८४ ॥

इति मालवश्रीः ।

**षड्जोऽन्यो वेत्यादिना** । अत्रापि मध्यमादिवन्मुद्रितस्वर एव स्थायी भवति ॥ ६८३ ॥ ६८४ ॥

इति मालवश्रीः ।

---

स्थायिनं मध्यमं कृत्वा कम्पयित्वा परं स्वरम् ॥
तुर्यं विलम्ब्य कृत्वा च तृतीयं तं द्रुताहतम् ॥ ६८५ ॥
विधाय तं पुनः प्रोच्य ग्रहन्यासेन जायते ॥
स्वस्थानं प्रथमं तोड्याः प्रोक्तं मुनिवरैरिति ॥ ६८६ ॥

प्राक्स्वस्थानवदारुह्य पञ्चमादवरुह्यते ॥
स्थायिस्वरान्तं यत्रादः स्वस्थानं स्याद्द्वितीयकम् ॥ ६८७ ॥
प्राग्वदा षष्ठमारोहावरोही च ग्रहावधिः ॥
अस्यास्तृतीये स्वस्थाने चतुर्थे त्वष्टमावधौ ॥ ६८८ ॥
आरोहिण्यवरोही स्यात्पूर्ववत्तद्विदां मतः ॥
मुद्रितस्तु ग्रहः प्रोक्तो लक्ष्ये स्याल्लक्ष्मवेदिभिः ॥ ६८९ ॥

इति तोडी ।

---

इतः परं तोड्यादीनां स्वस्थानानि ग्रन्थत एव सुबोधानि ॥ ६८५ ॥ ६८६ ॥ ॥ ६८७ ॥ ६८८ ॥ ६८९ ॥

तत्र बङ्गालरागे—

मध्यमं ग्रहमास्थाय प्राश्वं प्रोच्य ततो ग्रहम् ॥६९० ॥
सद्वितीयं कम्पयित्वा तृतीयं सचतुर्थकम् ॥
लघूकृत्य तृतीयं चोच्चार्याऽऽहत्य च तं ततः ॥ ६९१ ॥
प्राचीनं स्वरमुच्चार्य स्थायिनि न्यस्यते यदा ॥
भवेद्बङ्गालरागस्य स्वस्थानं प्रथमं तदा ॥ ६९२ ॥
आरोही पञ्चमान्तः स्यात्स्वस्थानेऽस्या(स्य)द्वितीयके ॥
सप्तमान्तस्तृतीये स्यात्तुर्ये स्यादष्टमावधि ॥ ६९३ ॥
प्राक्प्राग्वदवरोही स्यात्स्वस्थाने तूत्तरोत्तरम् ॥
लक्ष्ये तु सर्ववंशस्थो द्वितीयोऽस्य ग्रहो मतः ॥ ६९४ ॥

**लक्ष्ये तु सर्ववंशस्थो द्वितीयोऽस्य ग्रह इति** । षड्जादिषु मध्ययोर्मुद्रितस्वरो भवति । तदपेक्षया द्वितीय ऋषभादिरत्र स्थायी भवति । सोऽपि द्वितीयोऽन्तिमरन्ध्रद्वये मुक्ते सति जायत इति पूर्वमेवोक्तम् । उत्तरत्रापि भैरवादौ द्वितीयोऽस्य स्वरः स्थायीत्येवमादिषु मुक्तान्त्यरन्ध्रद्वयस्वरः स्थायी कर्तव्य इति वेदितव्यम् ॥ ६९० ॥ ॥ ६९१ ॥ ६९२ ॥ ६९३ ॥ ६९४ ॥

इति बङ्गालः ।

---

धैवतं स्थायिनं कृत्वा प्राश्वं तं च तृतीयकम् ॥
पुनः प्राश्वं विधायाथ कम्पयित्वा तृतीयकम् ॥ ६९५ ॥
विलम्ब्य चाऽऽहतं कृत्वा द्वित्रिवारं द्वितीयकम् ॥
ग्रहे न्यासाद्भैरवस्य स्वस्थानं प्रथमं भवेत् ॥ ६९६ ॥

द्वितीये पञ्चमान्तः स्यादारोहोऽथ तृतीयके ॥
षष्ठो(ष्ठा)न्तः सप्तमान्तो वा चतुर्थे त्वष्टमावधिः ॥ ६९७ ॥
परे परेऽवरोही स्यात्स्वस्थाने पूर्वपूर्ववत् ॥
द्वितीयोऽत्र स्वरः स्थायी सर्ववंशेषु दृश्यते ॥ ६९८ ॥

इति भैरवः।

॥ ६९५ ॥ ६९६ ॥ ६९७ ॥ ६९८ ॥

वराट्याम्—

स्थायिनं द्विगुणं षड्जं कृत्वाऽर्धे वादयेत्ततः ॥
पूर्वं ग्रहं द्वितीयं च तृतीयमथ वादयेत् ॥ ६९९ ॥
अथ द्वितीयमागत्य न्यस्यते स्थायिनि स्वरे ॥
यदा वराट्याः स्वस्थानं प्रथमं जायते तदा ॥ ७०० ॥
इह भैरववत्कार्यं स्वस्थानत्रितयं परम् ॥
स्वस्थानप्रक्रियैषैव ज्ञेया रागान्तरेष्वपि ॥
द्वितीयोऽस्याः स्वरो लक्ष्ये ग्रहत्वेनोपलक्ष्यते[1] ॥ ७०१ ॥

इति वराटी।

---

**स्थायिनं द्विगुणं षड्जमिति।** मध्यमं षड्जं तारषड्जं वेत्यर्थः। तयोः पूर्वपूर्वापेक्षया द्विगुणत्वसंभवात्। अर्धे द्व्यर्धं स्थायिनश्चतुर्थस्वरमित्यर्थः ॥ ६९९ ॥ ७०० ॥ ॥ ७०१ ॥

गुर्जर्याम्—

ऋषभे स्थायिनि प्राञ्चं कम्पयित्वाऽर्धमस्य च ॥ ७०२ ॥
कृत्वा ग्रहं द्वितीयं च तृतीयं तदधः स्वरम् ॥
ग्रहमेत्य ततः प्राञ्चं प्रकम्प्योक्त्वा(क्त्वाऽ?)र्धमस्य च ॥ ७०३ ॥
ग्रहे न्यासेन गुर्जर्याः स्वस्थानं प्रथमं भवेत् ॥
तृतीयो दृश्यते प्रायो ग्रहोऽस्यां लक्ष्यगोचरे ॥ ७०४ ॥

**तृतीयो दृश्यते प्रायो ग्रहोऽस्यां लक्ष्यगोचर इति।** अत्रापि मुद्रितस्वरात्तृतीयो ग्राह्यः। सोऽप्यन्तिमरन्ध्रत्रयमोचनाज्जायत इति पूर्वमुक्तम्। उत्तरत्र वसन्तादिष्वप्येवं द्रष्टव्यम् ॥ ७०२ ॥ ७०३ ॥ ७०४ ॥

इति गुर्जरी।

---

१ ग. °लभ्यते।

षड्जे ग्रहे द्वितीयं च तृतीयं सकृदाहृ(ह)तम् ॥
वेगात्कृत्वाऽथ तुर्यं च तृतीयं तदधस्तनम् ॥ ७०५ ॥
उक्त्वा तृतीयतुर्यौ च तृतीयं तदधस्तनम् ॥
ग्रहे न्यासो वसन्तस्य स्वस्थाने प्रथमे भवेत् ॥
तृतीयस्त्वस्य वंशेषु स्थायित्वेनोपलभ्यते ॥ ७०६ ॥

इति वसन्तः ।

---

स्थायिनि द्विगुणे षड्जे तदर्धं लघु वादयेत् ॥
ततस्तत्सकृदाहत्य ग्रहं तस्मात्तृतीयकम् ॥ ७०७ ॥
तुर्यं चोक्त्वा तृतीयं च सकृदाहत्य तत्परम् ॥
द्रुतं कृत्वा पञ्चमं तु विलम्ब्यास्मादधस्तनौ ॥ ७०८ ॥
लघूकृत्य ग्रहे न्यासः स्वस्थाने प्रथमे भवेत् ॥
धन्नास्या दृश्यते वंशे स्याद्द्वितीयस्वरो ग्रहः ॥ ७०९ ॥

इति धन्नासी ।

---

तमेव स्थायिनं कृत्वा द्वितीयं वादयेद्द्रुतम् ॥
लघू ग्रहद्वितीयौ च कृत्वा ताभ्यां परं स्वरम् ॥ ७१० ॥
विलम्ब्य स्फुरितं तु द्विर्विदध्यात्पञ्चमं ततः ॥
अधरांस्त्रीन्क्रमादुक्त्वा स्थायिनि न्यस्यते यदा ॥
देश्यास्तदाऽऽद्यं स्वस्थानं द्वितीयोऽस्या ग्रहो जने ॥ ७११ ॥

इति देशी ।

---

गान्धारे स्थायिनि प्रोच्य द्वितीयं च तृतीयकम् ॥
तुर्यं विलम्ब्य तत्प्राञ्चं कृत्वा स्पृष्ट्वा द्वितीयकम् ॥ ७१२ ॥
दीर्घीकृत्य तृतीयं चोक्त्वा द्वितीयं ग्रहस्वरे ॥
न्यासो यदा स्यात्स्वस्थानं देशाख्यायास्तदाऽऽदिमम् ॥७१३॥
मुद्रितोऽस्या ग्रहो वंशे लक्ष्यते लक्ष्यवेदिभिः ॥ ७१४ ॥

इति देशाख्या ।

इति रागाङ्गानि(णि) ।

---

॥ ७०५ ॥ ७०६ ॥ ७०७ ॥ ७०८ ॥ ७०९ ॥ ७१० ॥ ७११ ॥ ७१२ ॥
॥ ७१३ ॥ ७१४ ॥

ग्रहं द्विगुणसं कृत्वा पूर्वं स्पृष्ट्वा तृतीयकम् ॥
कृत्वा स्पृष्ट्वा ग्रहं प्रोच्य तत्परं स्फुरितौ वदेत् ॥ ७१५ ॥
द्विस्त्रिर्वा ग्रहतत्पूर्वौ न्यस्यते कम्पिते ग्रहे ॥
यदा डोम्बक्रियः प्रोक्तं स्वस्थानं प्रथमं तदा ॥
सा भूपाली श्रुता लोके द्वितीयं ग्रहमाश्रिता ॥ ७१६ ॥

इति डोम्बक्रीः ।

(लोके प्रसिद्धा भूपाली)

---

धैवते स्थायितां नीते द्विरुच्चार्य परं लघुम् ॥
तं चाथ प्राञ्चमस्यार्धं पूर्वं पूर्वं विधाय तम् ॥ ७१७ ॥
विलम्ब्य कम्पयित्वाऽर्धं तस्याऽऽहत्य च तन्मुहुः ॥
पूर्वं प्रकम्प्य तस्यार्धं दीर्घीकृत्य ग्रहं व्रजेत् ॥ ७१८ ॥
अथोर्ध्वप्रेरितौ(?) पूर्वग्रहौ कृत्वा द्वितीयकम् ॥
प्रोच्य स्पृष्ट्वा ग्रहं तस्मात्परं प्रोच्य प्रकम्प्य तु ॥ ७१९ ॥
तृतीयं ग्रहपाश्चात्यग्रहौ तूच्चारयेन्मुहुः ॥
ततस्तृतीयमाकम्प्य विलम्ब्य तदधस्तनम् ॥ ७२० ॥
ईषद्विरम्य स्पृष्ट्वा च द्वितीयं न्यस्यते ग्रहे ॥
यदा तदाऽऽद्यं स्वस्थानं वेलावल्याः प्रकीर्तितम् ॥
तृतीयग्रहता त्वस्या दृश्यते वंशगोचरे ॥ ७२१ ॥

इति वेलावली ।

---

पञ्चमं ग्रहमास्थायाऽऽरोहिणा पञ्चमं ततः ॥
गत्वा विलम्ब्य तं तस्मादधरं द्रुततां नयेत् ॥ ७२२ ॥
ततोऽधःस्थं द्राघयित्वा स्पृष्ट्वा च द्राघितात्परम् ॥
तत्परं दीर्घतां नीत्वा पुनः प्रोच्यावरोहिणा ॥ ७२३ ॥
तस्मादेत्य ग्रहन्यासे स्वस्थानं प्रथमं भवेत् ॥
रागे प्रथममञ्जर्यां द्वितीयोऽस्या ग्रहो जने ॥ ७२४ ॥

इति प्रथममञ्जरी ।

---

॥ ७१५ ॥ ७१६ ॥ ७१७ ॥ ७१८ ॥ ७१९ ॥ ६२० ॥ ७२१ ॥ ७२२ ॥
॥ ७२३ ॥ ७२४ ॥

स्थायिनोऽर्धात्समारुह्य तृतीयादिचतुःस्वरीम् ॥
कम्पयित्वा विलम्ब्यापि षष्ठतुर्यं विधाय च ॥ ७२५ ॥
एत्य पञ्चममेतस्माद्ग्रहान्तमवरुह्य च ॥
ग्रहार्धं ग्रहपूर्वं च गत्वा स्पृष्ट्वा ग्रहं ततः ॥ ७२६ ॥
द्वितीयं कम्पितं कृत्वा तृतीयं स्फुरितं ततः ॥
स्थायिनि न्यस्यते यत्र स्वस्थानं स्यात्तदाऽऽदिमम् ॥
आडीकामोदिकायाः स्याद्द्वितीयग्रहता जने ॥ ७२७ ॥

इत्याडीकामोदी ।

---

स्थायिनि द्विगुणे षड्जे द्विराहत्य तृतीयकम् ॥
त्रिश्चतुर्वा ततः स्पृष्ट्वा ग्रहं पूर्वमुदीर्य च ॥ ७२८ ॥
कम्पिते स्थायिनि न्यासात्स्वस्थानं प्रथमं भवेत् ॥
रागे शुद्धवराट्यां सा द्वितीयस्थायिका(?) जने ॥ ७२९ ॥

इति शुद्धवराटी ।

---

तमेव स्थायिनं कृत्वा तं तदर्धे द्विराहतम्[3] ॥
द्विस्त्रिर्वोक्त्वाऽथ द्वितीयं कम्पयित्वा विलम्ब्य च ॥ ७३० ॥
आहत्य द्विश्चतुर्वाऽस्मात्परं कृत्वा लघुं ग्रहम् ॥
उक्त्वा ग्रहार्धपूर्वे तु दीर्घीकृत्य ग्रहे यदा ॥ ७३१ ॥
न्यस्यते शुद्धनट्टायाः स्वस्थानं प्रथमं तदा ॥
वंशेष्वस्यामपि प्रायो द्वितीयो दृश्यते ग्रहः ॥ ७३२ ॥

इति शुद्धनट्टा ।

इति भाषाङ्गाणि ।

---

ग्रहं द्विगुणसं प्रोच्य तदर्धं च द्वितीयकम् ॥
विलम्बिते तृतीयेऽथ द्वितीयं द्रुततां नयेत् ॥ ७३३ ॥
ग्रहार्धे च स्थिरीभूय कम्पयित्वा ग्रहं ततः ॥
परौ स्वरौ द्रुतीकृत्य लघूकृत्य परं ग्रहे ॥ ७३४ ॥

॥ ७२५ ॥ ७२६ ॥ ७२७ ॥ ७२८ ॥ ७२९ ॥ ७३० ॥ ७३१ ॥ ७३२॥
॥ ७३३ ॥ ७३४ ॥

---

१ घ. 'नोऽधः समा' । २ ख. 'याः सा द्विती' । ३ ख. ग. घ. ङ. स्थिराहतम् ।

न्यासे कृते रामकृतेः स्वस्थानं प्रथमं भवेत् ॥
द्वितीयस्वरमेवास्या वंशे वीक्षामहे ग्रहम् ॥ ७३५ ॥

इति रामक्रीः ।

---

तस्मिन्नेव ग्रहे कृत्वा तृतीयं च द्वितीयकम् ॥
ग्रहार्धं द्रुतमुच्चार्य स्पृष्ट्वा पूर्वं ग्रहस्य च ॥ ७३६ ॥
अर्धं प्रोच्य विरम्याथ पूर्वं स्पृष्ट्वा तृतीयकम् ॥
लघूकृत्य लघोः पूर्वौ स्पृष्ट्वाऽथ स्थायिनः परौ ॥ ७३७ ॥
लघूकृत्य द्रुतं कृत्वा द्वितीयं न्यस्यते ग्रहे ॥
यदा तदा गौडकृतेर्भवेत्स्वस्थानमादिमम् ॥ ७३८ ॥
द्वितीयोऽस्यामपि प्रायो ग्रहो लक्ष्येषु दृश्यते ॥ ७३९ ॥

इति गौडक्रीः ।

---

धैवते स्थायिनि प्राञ्चं ग्रहं ग्रहतृतीयकम् ॥
तुर्यं कृत्वा तमाहत्य द्वितीयं कम्पयेत्ततः ॥ ७४० ॥
अवरुह्य तृतीयादिक्रमेण चतुरः स्वरान् ॥
ग्रहन्यासाद्देवकृतेराद्यं स्वस्थानमादिशेत् ॥
तृतीयग्रहतां त्वस्याः पश्यामो वंशगोचरे ॥ ७४१ ॥

इति देवक्रीः ।

इति क्रियाङ्गाणि ।

---

धैवतं ग्रहमास्थाय तृतीयादवरुह्य च ॥
स्वरत्रयं विरम्याथ ग्रहं परमथ ग्रहम् ॥ ७४२ ॥
पूर्वं कृत्वा तमाहत्य ग्रहन्यासेन जायते ॥
स्वस्थानमाद्यं भैरव्यास्तृतीयोऽस्या ग्रहो जने ॥ ७४३ ॥

इति भैरवी ।

---

॥ ७३६ ॥ ७३७ ॥ ७३८ ॥ ७३९ ॥ ७४० ॥ ७४१ ॥ ७४२ ॥ ७४३॥
॥ ७४४ ॥

छायानट्टायाम्—

स्थायिनि द्विगुणे षड्जेऽधस्तृतीयं विधाय च ॥
अधस्तनं प्रकम्प्याथ विलम्ब्य स्थायिनं ततः ॥ ७४४ ॥

प्राचीनं लघुतां नीत्वा द्विस्त्रिर्वाऽऽहत्य तं ग्रहम् ॥
लघूकृत्याधरस्यार्धमास्पृश्य ग्रहपञ्चमम् ॥ ७४५ ॥
विलम्ब्य तं द्रुतीकृत्य तृतीयस्पर्शमोचरेत् ॥
अथोक्त्वा पञ्चमं तं च दीर्घीकृत्याधरं मनाक् ॥ ७४६ ॥
कम्पयित्वा ग्रहन्यासाद्भवेत्स्वस्थानमादिमम् ॥
छायानट्टाख्यरागस्य ग्रहो वंशे तृतीयकः ॥ ७४७ ॥

**अधरस्यार्धमिति** । अधरोऽधस्तनः । अत्र ग्रहीभूतषड्जापेक्षयाऽधरो निषादः । तस्यार्धमीषत्स्पर्शनं भवति तमीषत्स्पृष्ट्वेत्यर्थः ॥ ७४४ ॥ ७४५ ॥ ७४६ ॥ ७४७ ॥

एतां सालगनट्टां तु भाषन्ते लक्ष्यवेदिनः ॥ ७४८ ॥

**एतां सालगनट्टां तु भाषन्ते लक्ष्यवेदिन इति** । अत्र तुशब्दोऽवधारणे भिन्नक्रमश्च । एतां त्विति च्छायानट्टामेवेत्यर्थः ॥ ७४८ ॥ ७४९ ॥

अन्ये तु पञ्चमं कृत्वा स्थायिनं रिं विधाय च ॥
मं प्रकम्प्य स्थिरीभूय पञ्चमे द्विः पमध्यमौ ॥ ७४९ ॥
कृत्वा गमृषभार्धं च संस्पृश्यार्धं पुनर्व्रजेत् ॥
ततो दीर्घौ रिमौ कृत्वा ग्रहे चेन्न्यस्यते तदा ॥
आद्यं सालगनट्टायाः स्वस्थानं तद्विदो विदुः ॥ ७५० ॥

**गमृषभार्धं चेति** । गं गान्धारं स्पृष्ट्वा । ऋषभार्धमिति ऋषभमीषत्स्पृष्ट्वेत्यर्थः । **अर्धं पुनर्व्रजेदिति** । पुनःशब्देन तदेवर्षभार्धमिति गम्यते । ऋषभार्धं द्विः कुर्यादित्यर्थः ॥ ७५० ॥

इति च्छायानट्टा ।

---

मं विधाय ग्रहं तं च द्रुतीकृत्य परं ततः ॥
उक्त्वा तुर्यं विलम्ब्याथ परमास्पृश्य पञ्चमम् ॥ ७५१ ॥
विलम्ब्यातोऽवरोहेण ग्रहमेति यदा तदा ॥
स्वस्थानमादिमं रामकृतेर्वंशे द्वितीयकः ॥
ग्रहश्चिन्धमरामक्रीः सा सिद्धा लोकवर्त्मनि ॥ ७५२ ॥

इति चिन्धमरामक्रीः ।

---

रिमेव ग्रहमाश्रित्य द्विस्त्रिर्वाऽऽहत्य मं ततः ॥ ७५३ ॥

॥ ७५१ ॥ ७५२ ॥ ७५३ ॥

---

१ च. °तीयं स्प° । २ च. °मास्पृशेत् । ३ घ. ङ. च. °स्पृष्ट्वाऽर्धं ।

तं विलम्बिततां नीत्वा दीर्घीकृत्य तु मध्यमम् ॥
रिगौ रिदलमेतानि द्रुतीकृत्य विलम्ब्य निम् ॥ ७५४ ॥
पुनरुच्चार्य तं कृत्वा धैवतं सकृदाहतम् ॥
वादयित्वा निषादं च ग्रहन्यासेन जायते ॥ ७५५ ॥
नाट्यरामकृतेराद्यं स्वस्थानमिति तद्विदः ॥
अथवा मध्यमं कृत्वा ग्रहमाहत्य पञ्चमम् ॥ ६५६ ॥
द्विस्त्रिर्वाऽप्यवरोहेण धात्क्रमादृषभं द्रुतम् ॥
एत्यार्धं तस्य षड्जं च रेरर्धं वादयेत्पुनः ॥ ७५७ ॥
अथोच्चार्य रिमौ पं तु विलम्ब्य न्यस्यते ग्रहे ॥
यत्र स्वस्थानमाद्यं तन्नाट्यरामकृतेर्मतम् ॥ ७५८ ॥

इति नाट्यरामक्रीः ।

---

ग्रहं कृत्वा धमाहत्य सकृद्ग्रहपरं स्वरम् ॥
कृत्वा ग्रहात्परौ द्विस्तु ग्रहमाहत्य पूर्वकम् ॥ ७५९ ॥
द्वितीयं च क्रमादुक्त्वा ग्रहे चेन्न्यस्यते तदा ॥
स्वस्थानमाद्यं मह्लारे ग्रहो वंशे द्वितीयकः ॥ ७६० ॥

इति मह्लारः ।

---

ग्रहं द्विगुणसं कृत्वा द्रुतीकृत्य ततोऽधरम् ॥ ७६१ ॥
तमान्दोल्य द्वितीयं तु विधायाथ तृतीयकम् ॥
स्फुरितं ग्रहतत्पूर्वौ वादयित्वा ग्रहे यदा ॥ ७६२ ॥
न्यासः कर्णाटगौडस्य स्वस्थानं प्रथमं तदा ॥
वंशे ग्रहस्तृतीयोऽस्य गृह्यते लक्ष्यवेदिभिः ॥ ७६३ ॥

इति कर्णाटगौडः ।

---

॥ ७५४ ॥ ७५५ ॥ ७५६ ॥ ७५७ ॥ ७५८ ॥ ७५९ ॥ ७६० ॥ ७६१ ॥
॥ ७६२ ॥ ७६३ ॥

देशवालगौडे—

ग्रहं तमेव सं कृत्वा प्रोच्य तुर्यतृतीयकौ ॥
स्थायिनं तद्दलं चोक्त्वा पूर्वस्थायिदलं ततः ॥ ७६४ ॥

---

१ ग. 'नि दीर्घीकृ' ।

स्थायिन्यासाद्देशवालगौडस्वस्थानमादिमम् ॥
जायतेऽस्यापि वंशे तु द्वितीयो दृश्यते ग्रहः ॥ ७६५ ॥

**ग्रहं तमेव समिति** । पूर्वरागग्रहपरामर्शेन द्विगुणं षड्जमित्यर्थः । **तद्दलमिति** । स्थायिनः प्रकृतत्वात्तच्छब्देन स्थायीभूतः परामृश्यते । तस्य दलं पूर्वस्थायिदलमिति । द्विगुणशब्देन मध्यषड्जो गृहीतश्चेत्तदा पूर्वस्थायी मन्द्रषड्जः । तारषड्जो गृहीतश्चेत्तदा स्थायी मध्यषड्जः । तस्य दलमर्धम् । देशवालगौड एव केदारगौड इति जनैरुच्यते ॥ ७६४ ॥ ७६५ ॥

इति देशवालगौडः ।

---

मालवगौडे—

निषादे स्थायिनि प्रोच्य पूर्वं ग्रहमथोत्तरम् ॥
तुर्यं द्वितीयतस्तु त्रीनवरुह्य ग्रहे यदा ॥ ७६६ ॥
न्यासस्तुरुष्कगौडस्य तदा स्वस्थानमादिमम् ॥
लोके मालवगौडोऽसौ तृतीयोऽस्य ग्रहो गतः ॥ ७६७ ॥

**निषादे स्थायिनीति** । स्थायिनि सतीत्यर्थः । पूर्वमादौ ग्रहं निषादं प्रोच्य । **अथोत्तरमिति** । द्वितीयमित्यर्थः ॥ ७६६ ॥ ७६७ ॥

इति तुरुष्कगौडः ।
( मालवगौड इति लोके )

---

द्राविडगौडे—

निषादाद्ग्राहतां नीतादारोहेदाचतुर्थकम् ॥
तं विलम्ब्य ततो गच्छेद्ग्रहे चेदवरोहिणा ॥ ७६८ ॥

लोके सालगगौड इत्युक्तम् । इदानीं तु लोके सालग इत्येतावतैव व्यवहारो दृश्यते स कथमुपपद्यत इति चेत् । सोऽपि भीमसेने भीमव्यवहारवदुपपन्न एव ॥ ७६८ ॥

तदा द्राविडगौडस्य स्वस्थानं प्रथमं भवेत् ॥
लोके सालगगौडोऽयं द्वितीयोऽस्य ग्रहो मतः ॥ ७६९ ॥

इति द्राविडगौडः ।
(लोके सालगगौडः)

इत्युपाङ्गानि ।

---

॥ ७६९ ॥

पञ्चमं ग्रहमास्थाय तृतीयं च द्वितीयकम् ॥
मुक्त्वा तृतीयं स्पृष्ट्वा च प्रान्तमुक्त्वा तृतीयकम् ॥ ७७० ॥
स्पृष्ट्वा विलम्ब्य द्वितीये न्यस्यते कम्पिते ग्रहे ॥
यदा भवति कैशिक्याः स्वस्थानं प्रथमं तदा ॥ ७७१ ॥
तृतीयोऽस्याः स्वरो वंशे ग्रहो लक्ष्येषु दृश्यते ॥ ७७२ ॥

इति कैशिकी ।

---

स्थायिनं द्विगुणं षड्जं द्रुतीकृत्य द्वितीयकम् ॥
उक्त्वा द्वितीयतृतीयौ द्रुतीकृत्याधराधरम् ॥ ७७३ ॥
उदीर्य तं द्रुतीकृत्य द्वितीयं वादयेत्ततः ॥
तृतीयं द्विस्त्रिराहत्य स्थायिनि न्यस्यते यदा ॥ ७७४ ॥
ललितायास्तदा प्रोक्तं स्वस्थानं प्रथमं बुधैः ॥
अस्यामपि स्वरो लक्ष्ये तृतीयो दृश्यते ग्रहः ॥ ७७५ ॥

इति ललिता ।

इति भाषाद्वयम् ।

---

ग्रहं द्विगुणसं कृत्वाऽधस्तनं स्थायिनं तथा ॥
कृत्वा द्वितीयतुर्यौ च द्वितीयस्थायिनौ स्पृशेत् ॥ ७७६ ॥
विलम्बिते द्वितीयेऽथ स्थायिनि न्यस्यते यदा ॥
श्रीरागस्य बुधैः प्रोक्तं तदा स्वस्थानमादिमम् ॥
स्वरो वंशे द्वितीयोऽस्य ग्रहत्वेनोपलक्षितः ॥ ७७७ ॥

॥ ७७० ॥ ७७१ ॥ ७७२ ॥ ७७३ ॥ ७७४ ॥ ७७५ ॥ ७७६ ॥ ७७७ ॥

इति श्रीरागः ।

---

अथ सकलरागसाधारणन्यायं दर्शयति—

यो ग्रहः क्रियते वंशे तमपेक्ष्यात्र योजयेत् ॥
लक्षणस्थं द्वितीयादि यदा किंतु ग्रहादयः ॥ ७७८ ॥
यावन्तो यत्र रागे स्युः स्वरा लक्ष्माणि तावताम् ॥
संभवः स्थायिना येन स्थायिनं तत्र सं(तं)श्रयेत् ॥ ७७९ ॥

**यो ग्रह इति** । तत्र विशेषमाह—**किंत्विति** । यत्र यस्मिन्रागे ग्रहादयः स्वरा

---

१ घ. ङ. प्राञ्चमु° । २ च. द्वितीयं ।

यावन्तः स्युः । लक्ष्मणि तद्रागलक्षणे येन स्थायिना तावतां स्वराणां संभवस्तत्र रागे तं स्थायिनं श्रयेदिति । अयमर्थः । यस्य देशीरागस्य मन्द्रतारावधित्वेन यौ स्वरौ भवतस्तन्मध्यस्थाः स्वरास्ताभ्यां सह यावत्संख्या ये भवन्ति तेषां न्यूनता यथा न भवति तथा स्थायिस्वरो ग्रहः कर्तव्य इति ॥ ७७८ ॥ ७७९ ॥

अनुग्रहाय मुग्धानामित्येते कतिचिन्मया ॥
रागाः प्रोक्ताः पथाऽनेन संपश्यध्वं बुधाः परान् ॥ ७८० ॥
इति वंशप्रकरणम् ।

प्रयोजनवत्त्वेनोक्तमन्यत्राप्यतिदिशन्प्रकरणमुपसंहरति—अनुग्रहायेति ॥ ७८० ॥
इति वंशप्रकरणम् ।

---

पावो वेणुसमुत्पन्नः स्यान्नवाङ्गुलवंशवत् ॥
कृतावेष्टो वङ्गपत्रैर्लोकरीत्यैष वाद्यते ॥ ७८१ ॥

पावादीनां लक्षणानि ग्रन्थत एव सुबोधानि ॥ ७८१ ॥
इति पावलक्षणम् ।

---

पाविका वैणवी कार्या द्वादशाङ्गुलदैर्घ्यभाक् ॥
स्थौल्येऽङ्गुष्ठमिता गर्भे स्वदैर्घ्ये सुषिरं श्रिता ॥ ७८२ ॥
कनिष्ठाग्रमितस्थौल्यमस्या लोकानुसारतः ॥
फूत्काररन्ध्रमेकं स्यात्पञ्च स्युः स्वरसिद्धये ॥
वादनं विविधं नागयक्षावेशविधायकम् ॥ ७८३ ॥
इति पाविकालक्षणम् ।

---

हस्तद्वयाधिका माने मुखरन्ध्रसमन्विता ॥
चतुःस्वरच्छिद्रयुता मुरली चारुनादिनी ॥ ७८४ ॥
इति मुरली ।

---

शृङ्गजा दारवी वा स्यात्काहलाकृतिधारिणी ॥
अष्टाविंशत्यङ्गुला च दैर्घ्ये मधुकरी शुभा ॥ ७८५ ॥
मुखरन्ध्रं च तस्याः स्यात्तुवरीवीजसंनिभम् ॥
मुखरन्ध्रादङ्गुलानि त्यक्त्वा चत्वारि वंशवत् ॥ ७८६ ॥
विधाय सप्त रन्ध्राणि कुर्वीत विवरान्तरम् ॥
तेषां च मुखरन्ध्रस्य मध्येऽधोभागसंस्थितम् ॥ ७८७ ॥

॥ ७८२ ॥ ७८३ ॥ ७८४ ॥ ७८५ ॥ ७८६ ॥ ७८७ ॥

मधुरध्वानसिद्ध्यै तन्मुखरन्ध्रे तु ताम्रजा ॥
निधातव्या यवस्थूला नलिका चतुरङ्गुला ॥ ७८८ ॥
तदूर्ध्वे चक्रिका स्थाप्या दन्तजा शुक्तिजाऽथवा ॥
रन्ध्रमध्ये काशमयीं यद्वा देवनलोद्भवाम् ॥ ७८९ ॥
शुक्तिकां किंचिदुन्निद्रमालतीकलिकाकृतिम् ॥
मृदुलां क्षीरपाकेण[1] क्षिप्त्वा मधुकरीं ततः ॥ ७९० ॥
वंशवद्वादयेद्रन्ध्रं पिदधीताप्यधस्तनम् ॥
वामाङ्गुष्ठाग्रभागेणेत्युक्तं निःशङ्कसूरिणा ॥ ७९१ ॥

इति मधुकरीलक्षणम् ।

---

ताम्रजा राजती यद्वा काञ्चनी सुषिरान्तरा ॥
धत्तूरकुसुमाकारवदनेन विराजिता ॥ ७९२ ॥
हस्तत्रयमिता दैर्घ्ये काहला वाद्यते जनैः ॥
हाहूवर्णवती वीरविरुदोच्चारकारिणी ॥ ७९३ ॥

इति काहलालक्षणम् ।

---

हस्तद्वयकृता या सा सैव तुण्डकिनी[2] मता ॥
तुरुतुर्यपि सा लोके तित्तिरी च निगद्यते ॥
यमलं तुण्डकिन्योश्च वाद्यं वाद्यविदो विदुः ॥ ७९४ ॥

इति तुण्डकिनीलक्षणम् ।

तुण्डकिन्येव चुक्का स्याद्दैर्घ्ये हस्तचतुष्टया ॥ ७९५ ॥

इति चुक्कालक्षणम् ।

---

करेणुवदनाकारवदनं दोषवर्जितम् ॥
भृङ्गं यन्माहिषं श्लक्ष्णं स्निग्धं सुघटितं कृतम् ॥ ७९६ ॥
शृङ्गस्यानडुहश्चाथ धत्तूरकुसुमाकृति ॥
खण्डमष्टाङ्गुलं न्यस्य मूलेऽस्य ध्वनिवृद्धये ॥ ७९७ ॥

॥ ७८८ ॥ ७८९ ॥ ७९० ॥ ७९१ ॥ ७९२ ॥ ७९३ ॥ ७९४ ॥ ७९५ ॥
॥ ७९६ ॥ ७९७ ॥

---

१ च. °रयोगेण । २ ग. तुण्डिकि° । घ. तुण्डुकि° ।

अग्रं द्वित्र्याङ्गुलं तस्य च्छित्वा फूत्काररन्ध्रकम् ॥
विधाय तुंथुकारेण[1] वादयेद्द्विविधध्वनिम् ॥
एतद्वै ध्वानगम्भीरं वाद्यं गोपालकेलिषु ॥ ७९८ ॥

इति शृङ्गलक्षणम्।

---

निर्दोषस्योत्खातनाभेः शङ्खस्यैकादशाङ्गुलम् ॥
शिखरं निर्मितं धातुसिच्छ(क्थ)काभ्यां[2] मनोहरम् ॥ ७९९ ॥
मूलतश्चाग्रपर्यन्तं ह्रस्वमानाकृपि(ति) क्रमात् ॥
रन्ध्रमर्धाङ्गुलमितं शिखरस्य मुखे भवेत् ॥ ८०० ॥
अन्तस्तु माषमात्रं स्याच्छङ्खमेवंविधं सुधीः ॥
धृत्वा कर्कटहस्तेन भूरिश्वासभृतोदरम् ॥
हुंभुंथो दिगिदित्येतद्वर्णोद्बोधेन वादयेत् ॥ ८०१ ॥

इति शङ्खलक्षणम्।

इति सुषिरवाद्यलक्षणम्।

---

॥ ७९८ ॥ ७९९ ॥ ८०० ॥ ८०१ ॥

मार्गदेशीगतत्वेन[3] पटहो द्विविधो भवेत् ॥
मार्गस्थपटहस्यात्र लक्षणं तावदुच्यते ॥ ८०२ ॥

अथावनद्धवाद्येषु प्रथमोद्दिष्टं पटहं लक्षयति—मार्गदेशीगतत्वेनेत्यादिना॥८०२॥

सार्धहस्तद्वयं तस्य दैर्घ्यं स्यात्परिधिः पुनः ॥
पञ्चाङ्गुलो मध्यदेशः पृथुलो दक्षिणं मुखम् ॥ ८०३ ॥
कर्तव्यं संमितं सार्धैरेकादशभिरङ्गुलैः ॥
वामं तु दशभिः सार्धैः संमितं दक्षिणे मुखे ॥ ८०४ ॥
आयसं वलयं कार्यं वामे वल्लीसमुद्भवम् ॥ ८०५ ॥
षाण्मासिको मृतो वत्सो यस्तस्याऽऽदाय पारिकाम् ॥
तयाऽवगुण्ठ्य वलयं वल्लीजं वामवक्त्रगम् ॥ ८०६ ॥
सप्तरन्ध्रान्वितं कृत्वा सुदृढैः सूक्ष्मदोरकैः ॥
निक्षिप्तैस्तेषु रन्ध्रेषु बन्धव्याः कलशाः श्लथम् ॥ ८०७ ॥
ते हेमादिमयाः सप्त दैर्घ्येण चतुरङ्गुलाः ॥
त्यक्त्वाऽङ्गुलानि चत्वारि वामे स्याल्लोहपत्रिकाम् ॥ ८०८ ॥

॥ ८०३ ॥ ८०४ ॥ ८०५ ॥ ८०६ ॥ ८०७ ॥ ८०८ ॥

---

१ ग. ङ. तुंबुका°। २ ग. °सिक्तका°। ३ च. देशीमार्गगतत्वेन।

अङ्गुलत्रयविस्तारां पटहे वेष्टयेद्दृढम् ॥
वाह्यकायस्य यच्चर्म पशोस्तेन घनेन च ॥ ८०९ ॥
कम्बलाख्येन वध्नीयात्पिहितं वदनद्वयम् ॥
दक्षिणास्यस्य कवलं परितः कृतरन्ध्रकम् ॥ ८१० ॥
रन्ध्रक्षिप्तैर्गुणैर्गाढमाकृष्येतरवक्त्रगैः ॥
वलये तान्गुणान्सम्यग्वध्नीयाद्दार्ढ्यसिद्धये ॥ ८११ ॥
वामास्यकवलान्तस्थसप्तरन्ध्रनिवेशितैः ॥
गुणैरावेष्ट्य कलशानायसैर्वलयैर्दृढैः ॥ ८१२ ॥
अन्तः क्षिप्त्वा समाकृष्टैर्वलये गाढतां नयेत् ॥
कलशेभ्यो वहिर्वामवलयान्ते च बध्यते ॥ ८१३ ॥
वेष्टनाय कटेः कच्छेत्युक्तोऽयं स्कन्ददैवतः ॥
श्रीयज्ञपुरवर्येण पटहो मार्गसंभवः ॥ ८१४ ॥
देशीस्थोऽप्येवमेव स्याद्दैर्घ्येऽसौ सार्धहस्तकः ॥
सप्ताङ्गुलं दक्षिणास्यमन्यत्सार्धषडङ्गुलम् ॥ ८१५ ॥
आन्तरं जाठरं चर्म पशोर्गदितमुद्दली ॥
तया तु स्वेच्छया वक्त्रं वाममस्य निवध्यते ॥ ८१६ ॥
विशेषोऽयं भवेदस्मिन्नुभौ खादिरदारुजौ ॥
त्रिधोक्तोऽयं द्वयोरन्यैरुत्तमो मध्यमोऽधमः ॥ ८१७ ॥
उत्तमः प्रोक्तमानः स्याद्द्वादशांशोनितः पुनः ॥
मध्यमः षष्ठभागेन विहीनस्त्वधमो भवेत् ॥ ८१८ ॥

---

॥ ८०९ ॥ ८१० ॥ ८११ ॥ ८१२ ॥ ८१३ ॥ ८१४ ॥ ८१५ ॥ ८१६ ॥
॥ ८१७ ॥ ८१८ ॥

अथाऽऽद्यवर्णाः ।

ङवर्जितः कवर्गश्च टतवर्गौ रहावपि ॥
इति षोडश वर्णाः स्युरुभयोः पाटसंज्ञकाः ॥ ८१९ ॥

ङवर्जित इत्यादि । कखगघटठडढणतथदधनरह इति षोडश वर्णाः । उभयोर्मार्गदेशीपटहयोः । पाटसंज्ञका इति । पटहपाटा इत्युच्यन्त इत्यर्थः ॥ ८१९ ॥

संयोगविप्रयोगाभ्यां क्रमव्युत्क्रमयोगतः ॥
सस्वरत्वास्वरत्वाभ्यां पाटास्ते स्युरनेकधा ॥ ८२० ॥

संयोग[वि]प्रयोगाभ्यामिति । संयोगः ‘ हलोऽनन्तराः संयोगः ’ इत्युक्तल-

क्षणः । विप्रयोगस्तद्विपर्ययः । क्रमव्युत्क्रमयोगत इति । वर्णानुपूर्व्या समुच्चारणं क्रमः । तद्विपर्ययोच्चारणं व्युत्क्रमः । सस्वरत्वास्वरत्वाभ्यामिति । अत्र स्वराः षड्जादय एव विवक्षिता न त्वकारादयः । तेषां विप्रयोगशब्देनैव गृहीतत्वात् । षड्जादिग्रहणेऽपि सस्वरमिति रागसाहित्यमेव विवक्षितम् । अन्यथा सस्वरत्वस्यापि व्यवच्छेदाभावादनर्थकत्वमापद्येत । सर्वस्थायिशब्दस्य षड्जादन्यतमस्वरैराहित्याभावात् । अतोऽत्र स्वरशब्दो रागोपलक्षणत्वेन द्रष्टव्यः । एवमुक्तैर्विशेषैस्ते पाटाः । **अनेकधा स्युरिति** । बहुभेदभिन्ना भवन्तीत्यर्थः ॥ ८२० ॥

**उद्दल्यामेव झेंकारो देंकारः कवलेऽधिकः ॥**
**देशीपटहमेवाऽऽहुरिममड्डावजं जनाः ॥ ८२१ ॥**
**अष्टादशाङ्गुलः किंचिन्नताग्रो मध्यतःपृथुः ॥**
**कोणः कार्यो मूलदेशे मदनाम्बरवेष्टितः ॥ ८२२ ॥**

**उद्दल्यामेव झेंकार इति** । उद्दली नाम देशीपटहस्य वामवक्त्रपिधायकचर्मविशेष उच्यते । तत्र वादनेन झेंकार एवाधिक इति । पूर्वोक्तेभ्यः षोडशवर्णेभ्योऽधिक उत्पद्यत इत्यर्थः । **दें कारः कवलेऽधिक इति** । कवलं नाम मार्गपटहस्य दक्षिणवक्त्रपिधायकचर्मविशेषः । तत्र वादनेन देंकारः पूर्ववदधिक उत्पद्यते ॥ ८२१ ॥ ८२२ ॥

**पद्मासनोपविष्टेन गोष्ठ्यामूरुद्वयोपरि ॥**
**संस्थाप्य मार्गपटहो वाद्यो वर्णोद्भवे पटुः ॥ ८२३ ॥**
**नाटके त्वर्धवक्त्रोऽयं वाद्यते घटवाद्यवत् ॥**
**कोणेन पाणिना वाऽस्य वादनं सूरयो विदुः ॥ ८२४ ॥**

**इति पटहलक्षणम् ।**

**पद्मासनोपविष्टेनेति** । पद्मासनबन्धं कृत्वोपविष्टेन पटहवादकेन ॥८२३॥८२४॥
अथ पटहोद्भवान्हस्तपाटाँल्लक्षयति—

**ये पाटाः पटहे प्रोक्तास्तेषां विविधगुम्फनात् ॥**
**हस्तोद्भवाः पाटभेदा हस्तपाटाः प्रकीर्तिताः ॥ ८२५ ॥**
**ते चानन्ता न शक्यन्ते प्रत्येकं वेदितुं जनैः ॥**
**प्रदर्शनार्थमेतेषु कतिचित्प्रतिपादये ॥ ८२६ ॥**

**ये पाटा इति । तेषामिति** । यथायोगं झेंकारदेंकारसहितानां कादीनां षोडशवर्णानाम् । विविधगुम्फनात्संयोगादिभिर्बहुधा विविधकारणात् । हस्तोद्भवा इति हेतुगर्भितं विशेषणम् । हस्तोद्भवत्वादिति हेतुर्द्रष्टव्यः । कोणस्यापि हस्तव्यापाराधीनव्या-

---

१ ज. °रसाहि° । २ घ. च. °ल्यामत्र झें° । ३ ख. °नसंब° ।

पारत्वात्तदुद्भवेऽपि हस्तोद्भवत्वं द्रष्टव्यम्[1]। ततवाद्ये हस्तव्यापारसद्भावेऽपि तत्राङ्गुलिव्यापारस्य प्राधान्याद्धस्तोद्भवत्वव्यपदेशः ॥ ८२५ ॥ ८२६ ॥

**सद्योजातान्नागबन्धः स्वस्तिको वामदेवतः ॥**
**अलग्नोऽभूदघोरात्तु शुद्धिस्तत्पुरुषाभिधात् ॥ ८२७ ॥**
**आसीदीशानवक्त्रस्तु(क्त्रात्तु) समस्खलितसंज्ञकः ॥**
**जाताः पञ्चेति पञ्चभ्यो मुखेभ्यः पार्वतीपतेः ॥ ८२८ ॥**
**अतस्ते सर्वपाटानां पाटा मुख्यतमा मताः ॥**
**क्रमात्तद्देवता ब्रह्मविष्णुशर्वरवीन्दवः ॥ ८२९ ॥**

तेषु मुखपाटानां नागबन्धादीनामुत्पत्तिं दर्शयति—**सद्योजातादिति** ॥ ८२७ ॥ ॥ ८२८ ॥ ८२९ ॥

**नागबन्धश्च पवनस्तथैकैकसराभिधौ ॥**
**ततो दुःसरसंचारविक्षेपा नागबन्धजाः ॥ ८३० ॥**
**सप्तेत्यथ स्वस्तिकजाः स्वस्तिको वलिकोहलः ॥**
**फुल्लपूर्वश्च विक्षेपः कुण्डलीपूर्वकश्च सः ॥ ८३१ ॥**
**संचारविलिखी खण्डनागबन्धश्च पूरकः ॥**
**भेदाः सप्तेत्यलग्नस्य त्वेते सप्त प्रकीर्तिताः ॥ ८३२ ॥**
**अलग्नोत्सारविश्रामा विषमाद्या खली सरी ॥**
**स्फुरी स्फुरणकश्चेति शुद्धे स्याच्छुद्धिरादिमः ॥ ८३३ ॥**
**स्वरस्फुरणकोच्छल्लवलतावघटास्ततः ॥**
**तकारो माणिक्यवल्ली भेदाः सप्तेति संमताः ॥ ८३४ ॥**

नागबन्धादीनां पञ्चानां नामसाम्येन नागबन्धादयोऽवान्तरभेदाः क्रमेण द्रष्टव्याः । **एकैकसराभिधाविति** । एकश्चैकसराभिधश्च ॥ ८३० ॥ ८३१ ॥ ८३२ ॥ ॥ ८३३ ॥ ८३४ ॥

**समस्खलितकस्याऽऽद्यः समस्खलितसंज्ञकः ॥**
**विकटः सदृशः पाटखली चाडुखली ततः ॥ ८३५ ॥**
**अनुच्छल्लस्तथा खुत्तो भेदाः सप्तेति सन्त्यमी ॥**
**पञ्चत्रिंशद्धस्तपाटास्तलपाटाश्च कीर्तिताः ॥ ८३६ ॥**

**तलपाटाश्चेति** । हस्तपाटानामेव संज्ञान्तरम् ॥ ८३५ ॥ ८३६ ॥

**कोणाहतश्च संभ्रान्तो विषमार्धसमाविति ॥**
**चत्वारो हस्तपाटाः स्युर्नन्दिकेश्वरभाषिताः ॥ ८३७ ॥**

---

१ ख. 'म् । यद्यपि त' ।

मतान्तरेण पटहे चतुरः पाटानुद्दिशति—कोणाहतश्चेत्यादि ॥ ८३७ ॥

उत्फुल्लः खलकस्तद्वत्पाण्यन्तरनिकुण्ट(ट्ट?)कः ॥
दण्डहस्तः पिण्डहस्तो युगहस्तोऽर्ध(स्तोर्ध्व)हस्तकौ ॥ ८३८ ॥
स्थूलहस्तोऽर्धार्धपाणिः पार्श्वपाण्यर्धपाण्यपि ॥
कर्तरीसमकर्तर्यौ ततो विषमकर्तरी ॥ ८३९ ॥
समपाणिश्च विषमपाणिः स्यात्पाणिहस्तकः ॥
नागबन्धोऽप्यवघटः स्वस्तिकश्च समग्रहः ॥
इत्येकविंशतिर्हस्तपाटाः स्युः पटहादिषु ॥ ८४० ॥

पटहादिसाधारणानेकविंशतिहस्तपाटानुद्दिशति—उत्फुल्ल इत्यादि ॥ ८३८ ॥ ॥ ८३९ ॥ ८४० ॥

उल्लोल[1]ः पाण्यन्तरश्च निर्घोषः खण्डकर्तरी ॥
दण्डहस्तः समनखो बिन्दुर्यमलहस्तकः ॥ ८४१ ॥
रेचितो भ्रमरो विद्युद्विलासोऽप्यर्धकर्तरी ॥
अलग्नाख्यस्ततो रेफः समपाणिरतः परम् ॥ ८४२ ॥
परिवृत्तः षोडशेति वाद्येषु पटहादिषु ॥
एतान्प्रायो हुडुक्कायां कुर्वते वाद्यवेदिनः ॥ ८४३ ॥
अष्टौ विषमपाटाः स्युरपाटाख्यान्ब्रुवेऽधुना ॥ ८४४ ॥

पटहादिसाधारणत्वेऽपि प्रायेण हुडुक्कगतान्षोडश पाटानुद्दिशति—उल्लोल इत्यादि ॥ ८४१ ॥ ८४२ ॥ ८४३ ॥ ८४४ ॥

तलप्रहारः प्रहरो वलितो गुरुगुञ्जितः ॥
अर्धसञ्चस्त्रिसञ्चश्च विषमोऽभ्यरत इत्यमी ॥ ८४५ ॥

अपाटापरसंज्ञकानष्टौ विषमपाटानुद्दिशति—तलप्रहार इति ॥ ८४५ ॥

स्यातामलग्नपाटौ द्वौ सञ्चविच्छुरिताभिधौ ॥
भ्रमरः कुञ्चितश्चेति चित्रपाटावुभौ मतौ ॥ ८४६ ॥

अथापरांश्चतुरः पाटानुद्दिशति—सञ्चेत्यादि ॥ ८४६ ॥

अष्टाशीतिरिमे हस्तपाटा निःशङ्ककीर्तिताः ॥ ८४७ ॥

मिलितां हस्तपाटसंख्यामाह—अष्टाशीतिरिति ॥ ८४७ ॥

अथ नागबन्धादीनां पञ्चत्रिंशद्धस्तपाटानां स्वरूपाणि लोकप्रसिद्ध्या दर्शयति—

शिववक्त्रोत्थपाटानां स्वरूपं प्रतिपादये ॥
तेषामुत्पादकान्पाणीँल्लोकतो लक्षयेत्सुधीः ॥ ८४८ ॥

---

[1] च. उल्लोप्यः ।

शिववक्त्रोत्थेत्यादि । तत्रैकसराख्ये हस्तपाटे किटततेतिवर्णाल्लिँखित्वाऽनन्तरं द्व्यङ्को लिखितः । तेन तेषां द्विरुच्चारणमवगन्तव्यम् । किटतटकिटतटेति । एवं सर्वत्र पाटसंख्याङ्कान्विहाय मध्ये विन्यस्तैर्द्व्यादिसंख्याङ्कैस्तत्पूर्वस्य वर्णसमुदायस्य द्विरुच्चारणादिकं द्रष्टव्यम् ॥ ८४८ ॥

तद्यथा—टनगिन गिननगि–इति नागबन्धः [१], ननागिड गिडदगि–इति पवनः [२], गिड गिडदत्था–इत्येकः [३], किटतत २–इत्येकसरः [४], नखु नखु–इति दुःसरः [ ५ ], खिरतकिट–इति संचारः [ ६ ], थोंगि थोंथि–इति विक्षेपः [ ७ ]

इति सद्योजातोद्भवाः सप्त हस्तपाटाः ।

---

ततकिटकि–इति स्वस्तिकः [ १ ], थो हुंता–इति वलिकोहलः [ २ ], थोंगिन थोंगिन थोंगिन–इति फुल्लविक्षेपः [ ३ ], थोंथों गोंगों–इति कुण्डलीविक्षेपः [ ४ ], थोंगिणतत्ता–इति संचारविलिखी [ ५ ], किटथोंथों गिनखेंखें–इति खण्डनागबन्धः [ ६ ], टकु झेंझें–इति पूरकः [ ७ ]

इति वामदेवोद्भवाः सप्त हस्तपाटाः ।

---

नग गिडगिड दगिदा–इत्यलग्नः [ १ ], दत्थरिकि दत्थरिकि–इत्युत्सारः [ २ ], तकि धिकि तकि धिकि–इति विश्रामः [३], टगुनगु टगुनगु–इति विषमखली । विषमखलितो वा [ ४ ], खिरितु खिरितु–इति सरी [ ५ ], खिरि खिरि–इति स्फुरी[ ६ ], नरकित्थरिकि–इति स्फुरणः [ ७ ]

इत्यघोरोद्भवाः सप्त हस्तपाटाः ।

---

दरिगिड गिडदगिदा–इति शुद्धिः [ १ ], टटकुटट–इति स्वरस्फुरणः [ २ ], ननगिन खरिखरि–इत्युच्छल्लः [३], दखें दखें दखें खे–इति वल(तः) [४], थों गिनगि थों गिनगि–इत्यवघटः [५], तत्ता–इति तकारः [६], धिधि–इति माणिक्यवल्ली [ ७ ]

इति तत्पुरुषोद्भवाः सप्त पाटाः ।

---

तझें तझें झें–इति समस्खलितः । समस्खली वा [ १ ], गिरिग्ड गिरिग्ड–इति विकट [२], कणकणकि–इति सदृशः [३], धिधि

किटकि-इति खली स्खलितो वा [ ४ ], दिगिनगि दिगिनगि-इत्यड्डखली । अड्डस्खलितो वा [ ५ ], धरकट धरकट-इत्यनुच्छङ्गः [ ६ ], दोंनकट दोंनकट-इति खुत्तः [ ७ ]

इतीशानोद्भवाः सप्त पाटाः ।

इति सदाशिवपञ्चवक्त्रोद्भवाः पञ्चत्रिंशत्पाटाः ।

---

कनिष्ठाङ्गुष्ठसंयोगाच्छेषाङ्गुलिविवर्धनात् ॥
कोणाहतो हस्तपाटः शार्ङ्गदेवोदितो यथा ॥ ८४९ ॥
खुंखुंधरि, खुंखुंधरि, करगिड, करगिड ।
इति कोणाहतः ( १ )

---

नन्दिकेश्वरोक्तानां पाटानां स्वरूपं वादनप्रकारपूर्वकं दर्शयति—**कनिष्ठाङ्गुष्ठे-त्यादि** ॥ ८४९ ॥

सर्वाङ्गुल्यग्रघातश्च सर्वाङ्गुलिविवर्तनम् ॥
यस्य निष्पादकं सोऽत्र संभ्रान्तः कथितो यथा ॥ ८५० ॥
दरगिड दरगिड गिरिगिडद दाणकिट मटटकु
इति संभ्रान्तः ( २ )

---

चलनं मणिबन्धस्य पताकस्याथ कम्पनम् ॥
पादकम्पोऽथ जनको यस्यासौ विषमो यथा ॥ ८५१ ॥
दहें दहें खुंखुं दहें खुंखुं दहें ततकि ततकि ।
इति विषमः ( ३ )

---

पूर्वलक्ष्मविपर्यासाद्भवेदर्धसमो यथा ॥ ८५२ ॥

॥ ८५० ॥ ८५१ ॥ ८५२ ॥

ददगिद गिगिरिकिटदगि थों थों गिदथोंगिद ।
इत्यर्धसमः ( ४ )

इति नन्दिकेश्वरोक्ताश्चत्वारो हस्तपाटाः ।

---

उत्फुल्लो नखराघातादलपद्मस्य जायते ॥ ८५३ ॥
कन्हें कन्हें, इत्युत्फुल्लः ( १ )

अथैकविंशतिं हस्तपाटान्दर्शयति—उत्फुल्ल इत्यादि । **अलपद्मस्य नखराघातादिति ।**

'व्यावर्तिताख्यकरणं कृत्वैव समवस्थिताः ।
यस्याङ्गुल्यः करतले पार्श्वगाः सोऽलपल्लवः ॥
अलपद्मः स एव स्यादङ्गुलीनां तु केचन ।
अस्य व्यावर्तितस्थाने परिवर्तितमूचिरे' ॥

इत्यलपद्महस्तस्य लक्षणं वक्ष्यति । तस्य नखराघाताद्व्यावृत्तिकरणेन कृतादित्यर्थः । उत्तरत्रापि वादनोपयोगित्वेनोक्तानां हस्तानां लक्षणानि नृत्ताध्यायत एवावगन्तव्यानि ॥ ८९३ ॥

**यदा प्रसारिताङ्गुष्ठः शुकतुण्डस्य हन्यते ॥**
**विरलाङ्गुलिभिर्वाद्यं क्रमेण खलकस्तदा ॥ ८९४ ॥**
**दांगिड गिडदगिदा, इति खलकः ( २ )**

**यस्तु दक्षिणहस्तस्य तर्जन्यङ्गुष्ठघाततः ॥**
**क्रमव्युत्क्रमघातात्तु वामहस्तेन रेफवत् ॥**
**जायते शार्ङ्गिणोक्तोऽसौ पाण्यन्तरनिकुट्टकः ॥ ८९५ ॥**
**( *दांगिडदां खरिकदां खरिक खरिकदांदां खरिखरिदां गिडदां )**
**इति पाण्यन्तरनिकुट्टकः ( ३ )**

**ऊर्ध्वघातं पताकेन कृत्वैकमथ रेफतः ॥**
**कृतौ यत्रोर्ध्वघातौ द्वौ दण्डहस्तो भवेदसौ ॥ ८९६ ॥**
**दातरिकिट दां खरिखरिदां, इति दण्डहस्तः ( ४ )**

**क्रमाद्रेफोऽर्ध(फोर्ध्व)हस्ताभ्यां पिण्डहस्तः प्रजायते ॥**
**थरिकटझें थरिकटझें, इति पिण्डहस्तः ( ५ )**

**रेफात्मभ्यां कराभ्यां चेदूर्ध्वघातद्वयं पृथक् ॥ ८९७ ॥**
**क्रियते पाटनिष्पत्त्यै युगहस्तस्तदा भवेत् ॥**
**द्रेंद्रें दांदां, इति युगहस्तः ( ६ )**

**ऊर्ध्वहस्तो दक्षिणेन तलेनोद्गाढघातकः ॥ ८९८ ॥**
**दरगिड दांदां, इत्यूर्ध्वहस्तः ( ७ )**

॥ ८९४ ॥ ८९५ ॥ ८९६ ॥ ८९७ ॥ ८९८ ॥

---

* च. संज्ञकपुस्तकं विनाऽन्येषु पुस्तकेषु धनुश्चिह्नान्तर्गतस्त्रुटितोऽयमंशः ।

---

१ ख. ग. च. 'र्जन्याऽङ्गु॰' । २ ङ. '॰ष्ठपात॰' ।

ऊर्ध्वघातद्वयं कृत्वा तलहस्तेन हन्यते ॥

यदा वाद्यपुटद्वंद्वं स्थूलहस्तस्तदोदितः ॥ ८५९ ॥

वाद्यपुटद्वंद्वमिति। वाद्यस्य पटहादे(देः)[पुटद्वंद्वं]र्वा(वा)मदक्षिणमुखद्वयम् ॥८५९॥

खुंखुंद खुंखुंद, इति स्थूलहस्तः ( ८ )

अर्धार्धपाणिरर्धाभ्यां करयोस्ताडनाद्भवेत् ॥

खुदां खुदां, इत्यर्धार्धपाणिः ( ९ )

वादनं नखराग्रेण पार्श्वपाणिरुदाहृतः ॥ ८६० ॥

थरगिड दागिड दगिड दगिड, इति पार्श्वपाणिः ( १० )

अर्धपाणिर्भवेदेककराग्रकृतताडनात् ॥

दगिड दगिड दरगिड दरगिड, इत्यर्धपाणिः ( ११ )

प्रचालनाद्वामहस्ताङ्गुलीनां कर्तरी मता ॥ ८६१ ॥

टिरि टिरि टिरि किटथों दिगिदां तिरि टिरि किटझेंझे तकि-
किट, इति कर्तरी ( १२ )

कर्तरीभ्यां समं घातः कराभ्यां समकर्तरी ॥

झिनकिट कनकिट किटझेंथों दिगिद तिरिटि तिरिटिकि, इति
समकर्तरी ( १३ )

क्रमेण ताडनाद्वाभ्यां भवेद्विषमकर्तरी ॥ ८६२ ॥

टिरि टिरि थों दिगिद टिरि टिरि किद, इति विषमकर्तरी (१४)

अङ्गुष्ठाङ्गुलिसंघातौ हस्तयोर्युगपद्यदा ॥

पीडयेतां पुटद्वंद्वं समपाणिस्तदा भवेत् ॥ ८६३ ॥

दां गिड गिड दांदां, इति समपाणिः ( १५ )

व्यत्ययाद्व्यापृतौ हस्तौ साङ्गुष्ठाङ्गुलिभिः क्रमात् ॥

यस्मिन्विषमपाणिं तं ब्रूते शंकरवल्लभः ॥ ८६४ ॥

दांदां गिड गिड दांदां, इति विषमपाणिः ( १६ )

समपाणेस्तु विरलाङ्गुलित्वे पाणिहस्तकः ॥ ८६५ ॥

तरगिड दरगिड, इति पाणिहस्तकः ( १७ )

नागवन्धो विपर्यासात्पुटयोः करघाततः ॥

प्रत्येकं वा पुटद्वंद्वे कराभ्यां ताडनोदयम् ॥ ८६६ ॥

इति नागवन्धः ( १८ )

॥ ८६० ॥ ८६१ ॥ ६६२ ॥ ८६३ ॥ ८६४ ॥ ८६५ ॥ ८६६ ॥

---

१ च. 'र्ध्वहस्तद्व'। २ घ. ङ. च. 'नाद्वय'।

तलेन हत्वा प्रहरेत्साङ्गुष्ठाङ्गुलिभिः क्रमात् ॥
पुटमेकैकपाणिश्चेद्भवेदवघटस्तदा ॥ ८६७ ॥
ततगिड गिड दगिटन गिनगिननगि, इत्यवघटः ( १९ )
पुटमेकं निहन्यातां स्वस्तिके स्वस्तिकौ करौ ॥ ८६८ ॥
तकिट तकिटतकि, इति स्वस्तिकः ( २० )
समं करतलाभ्यां तु पुटघातात्समग्रहः ॥
तले केचिदिह प्राहुरङ्गुष्ठाङ्गुलिवर्जिते ॥ ८६९ ॥
तकिट किटतक, इति समग्रहः ( २१ )

इत्येकविंशतिर्हस्तपाटाः ।

---

॥ ८६७ ॥ ८६८ ॥ ८६९ ॥

लोलो व्यवहिताङ्गुष्ठो दक्षिणो यस्य साधकः ॥
वामश्चेच्छ्वसितो हस्तमुल्लोलं[१] तं प्रचक्षते ॥ ८७० ॥

अथ प्रायेण हौडुकान्षोडश हस्तपाटान्दर्शयति—**लोलो व्यवहिताङ्गुष्ठ** इत्यादि ॥ ८७० ॥

अङ्गुष्ठमध्यमन्येऽत्र ब्रुवते दक्षिणं करम् ॥
पुटमध्ये दक्षिणेन साङ्गुष्ठेन हतिं परे ॥ ८७१ ॥
झेंथां झेंथां थांथां झें, इत्युल्लोलः ( १ )
व्यङ्गुष्ठो दक्षिणो हस्तः पुटे चेन्मुहुरुल्लसेत् ॥
स्वपुटं पीडयेद्वामस्तदा पाण्यन्तरो भवेत् ॥ ८७२ ॥
विश्लिष्टाङ्गुलिसंचारमङ्गुष्ठाधोर्धताडनम् ॥
पाण्यन्तरस्य जनकं केचिदाचक्षते बुधाः ॥ ८७३ ॥
अन्ये पाण्यन्तरं प्राहुर्व्यङ्गुष्ठाद्युक्तलक्षणम् ॥
हस्तान्तरं ततो भिन्नं विश्लिष्टादिकलक्षणम् ॥ ८७४ ॥
नखें नखें नखें खेंखेंखें नखें नखें नखें खेंखेंखेंखें दखुं खुंद खुंद,
इति पाण्यन्तरः ( १ )
कोणघातेन निर्घोषं निःशङ्कः समभाषत ॥ ८७५ ॥
नखखि थोंथों दिगिदा, इति निर्घोषः ( ३ )

॥ ८७१ ॥ ८७२ ॥ ८७३ ॥ ८७४ ॥ ८७५ ॥

---

१ ख. ग. च. °ल्लोप्यं तं ।

घातादक्षिणहस्तेन विरलाङ्गुलिना ततः ॥
अङ्गुष्ठघातैर्वामेन पीडनात्खण्डकर्तरी ॥ ८७६ ॥

दां खुखुदां२ खुखुग थोंटझेंदें झेंदों गिथोंटे, इति खण्डकर्तरी(४)

अङ्गुल्यग्रैः पीडयित्वाऽङ्गुष्ठेन परिघट्टनात् ॥
वामेन पीडनाद्वाद्ये दण्डहस्तोऽभिजायते ॥ ८७७ ॥

खुखुणं खुखुणं झेंद्रझेंद्र टिरिटिरि, इति दण्डहस्तः ( ५ )

समत्वं पाटवर्णानामङ्गुलीनखराहते ॥
दृश्यते यत्र तं प्राहुः पाटं समनखाभिधम् ॥ ८७८ ॥

रह रह तरकिट धिकिट तकिधकि टेंहेंटहेंत्रः, इति समनखः ( ६ )

अवष्टभ्य पुटं वामपाणिना तर्जनीहते ॥
बिन्दुरुत्पद्यते प्रोक्तमिति सोढलसूनुना ॥ ८७९ ॥

देंदिगि देंदिगि गिरिगिड २, इति बिन्दुः ( ७ )

समवष्टभ्य वामेन पुटं दक्षिणपाणिना ॥
संपीडनं वादयेच्चेत्तदा यमलहस्तकः ॥ ८८० ॥

कुंद कुंद झेंद्र झेंद्र झेंहें झेंहें, इति यमलहस्तः ( ८ )

उत्तुङ्गीकरणं वाद्ये स्कन्धस्य स्फुरणं तथा ॥
अङ्गुष्ठतर्जनीघातः पाटं कुर्वन्ति रेचितम् ॥ ८८१ ॥

देंदें थांथों देंदें नखझें३ नहनझें, इति रेचितः ( ९ )

भ्रमरो हस्तपाटः स्यात्समस्ताङ्गुलिताडनात् ॥ ८८२ ॥

खेखेणं खुखुणं खु३ णं झेंद्र२ णह करें झें, इति भ्रमरः ( १० )

अङ्गुष्ठतर्जनीघाताद्दलितार्धार्धहस्तकः ॥
विद्युद्विलासो भणितो विद्युद्विलसितोऽथवा ॥ ८८३ ॥

तणे३ तिर झोंझों द्रि३ त्रां, इति विद्युद्विलासः ( ११ )

तर्जनीमध्यमानामा विरलाः प्रहरन्ति चेत् ॥
श्रीश्रीकरणनाथेन तदा प्रोक्ताऽर्धकर्तरी ॥ ८८४ ॥

दोखुंखुं३ ग्रेह घेट३ झेहें धिगिगि थोंटें, इत्यर्धकर्तरी ( १२ )

हस्तौ न कुण्डलीलग्नौ यत्रालग्नं तमूचिरे ॥

खुंखुं२ नखें झेहेगि२ थोंटें, इत्यलग्नः ( १३ )

॥ ८७६ ॥ ८७७ ॥ ८७८ ॥८७९॥ ८८० ॥ ८८१॥८८२॥८८३॥८८४॥

---

१ च. घातो दक्षि°।

स्याद्रेफः स्कन्धसञ्चेन समस्ताङ्गुलिधाततः ॥ ८८५ ॥

हनथों झेंझें द्रं२ झेंद्र झेंहेंद्र, इति रेफः ( १४ )

समपाणिरविश्रान्तविरलाङ्गुलिघाततः ॥

ननगि२ देगि थों गिनह२ झें, इति समपाणिः ( १५ )

परिवृत्तो हस्तपाटः स्यात्पुटद्वंद्वताडनात् ॥ ८८६ ॥

॥ ८८५ ॥ ८८६ ॥

झें थों४ गिणना३, इति परिवृत्तः ( १६ )

इति षोडश प्रायिकहौडुक्कहस्तपाटाः ।

---

तलप्रहारहेतुः स्याद्वामस्कन्धप्रचालनम् ॥

मध्येवामपुटं वामपाणिना च निपीडनम् ॥ ८८७ ॥

अथ(था) पाटाख्यानष्टौ पाटान्दर्शयति—तलप्रहारहेतुरित्यादि ॥ ८८७ ॥

दें थों द्रें धिकिट किट झेंधितिरि२ त्रा, इति तलप्रहारः ( १ )

तलाङ्गुष्ठप्रहारेण प्रहरोऽभिहितो बुधैः ।

झेदां थों गिदिगिद२ किट धों धों, इति प्रहरः ( २ )

ऊर्ध्वाग्रे पटहादौ तु तर्जन्यङ्गुष्ठधारिते ॥

वादनेन समुद्भूतमपाटं वलितं विदुः ॥ ८८८ ॥

खुंखुदरि२ दां थोंगि थोंगि, इति वलितः ( ३ )

अङ्गुष्ठानामिकाभ्यस्तवलनाद्दक्षिणे पुटे ॥

उच्छ्वासाद्वामपाणेश्च जायते गुरुगुञ्जितः ॥ ८८९ ॥

थुकर४ थोंरगिडिदा२ धिकि थोंटें, इति गुरुगुञ्जितः ( ४ )

कम्पनं वामपादस्य नितम्बचलनं तथा ॥

उच्छ्वासनं करतलस्यार्धसञ्चप्रपञ्चकम् ॥ ८९० ॥

खें खें दरि२ खें खेंटः२, इत्यर्धसञ्चः ( ५ )

त्रिकस्य चलनाद्वामाङ्गुष्ठस्य परिघट्टनात् ॥

स्कन्धसञ्चाच्च संजातं त्रिसञ्चं परिचक्षते ॥ ८९१ ॥

खेंद खें खें दखेंद, इति त्रिसञ्चः ( ६ )

हस्तवैषम्यसंजातो विषमः संमतः सताम् ॥

खेंदंधरि२ थों दिगिधरिखें४ खरकट२, इति विषमः ( ७ )

अपाटोऽभ्यस्तसंज्ञस्तु भवेत्करविवर्तनात् ॥ ८९२ ॥

॥ ८८८ ॥ ८८९ ॥ ८९० ॥ ८९१ ॥ ८९२ ॥

खणगिणखङ्गि२ तकिधिकित्त, इत्यभ्यस्तः ( ८ )

इत्यष्टावपाटाख्या हस्तपाटाः ।

---

अर्धाङ्गुल्यग्रघातोत्थं सञ्चमाचक्षते यथा ॥

थुकर२ गिणणं२, इति सञ्चः ( १ )

करसञ्चेन शुद्धेनाङ्गुष्ठघातेन च क्रमात् ॥

उत्पन्नोऽलगपाटः स्यान्नाम्ना विच्छुरितो यथा ॥ ८९३ ॥

झेंद्र२ झेंगिरि गिडिदा नगिरि गिडनम्, इति विच्छुरितः ( २ )

अथालगपाटस्य भेदद्वयं दर्शयति—अर्धाङ्गुल्यग्रेत्यादि ॥ ८९३ ॥

इत्यलगपाटद्वयम् ।

---

तलप्रहारो वलितभेदितो भ्रमरो यथा ॥

दं थं द्रें झेंद्र ४ खुंखुंधरि दथोंगिं, इति भ्रमरः ( १ )

संकरात्करपाटानां कुञ्चितः कथितो यथा ॥ ८९४ ॥

खुंखुंधरि२ धरिगिगिड२ द्न्हें२ खुंखुं द्न्हें२ गिरिगिडिद२ दत्थोंगि थोंगि२, इति कुञ्चितः ( २ )

अथ चित्रपाटस्य भेदद्वयं दर्शयति—तलप्रहार इत्यादि ॥ ८९४ ॥

इति चित्रपाटद्वयम् ।

इत्यष्टाशीतिहस्तपाटलक्षणम् ।

---

पटहस्य हुडुक्कायाः पञ्च सञ्चान्ब्रुवेऽधुना ॥

स्कन्द(न्ध)कूर्परयोस्तद्वदङ्गुष्ठमणिवन्धयोः ॥ ८९५ ॥

वामस्य चरणस्यापि कम्पः सञ्चोऽभिधीयते ॥

श्रेष्ठः पाटहिकः सञ्चादङ्गुष्ठमणिवन्धयोः ॥ ८९६ ॥

स्कन्धकूर्परसञ्चात्तु नीचः पटहवादकः ॥

वरो हौडुक्किकोऽङ्गुष्ठकूर्परस्कन्धसञ्चतः ॥ ८९७ ॥

सञ्चाभ्यां मणिवन्धोत्थकौर्पराभ्यां तु मध्यमः ॥

असौ वामाङ्घ्रिसञ्चेन वादनादधमो भवेत् ॥ ८९८ ॥

अथ पञ्च सञ्चाल्लँक्षयति—पटहस्येत्यादि ॥ ८९५ ॥८९६॥८९७॥ ८९८ ॥

इति पञ्चसञ्चलक्षणम् ।

---

अथ पञ्चविंशतिपटहादिजातिसाधारणानि वाद्यान्युद्दिश्य लक्षयितुं तेषां सामान्यलक्षणं तावदाह—

**पाटविन्यासभेदाः स्युर्वाद्यानि पटहादिषु ॥ ८९९ ॥**

**पाटविन्यासभेदाः स्युरिति ।** पाटाः पूर्वोक्ता अष्टाशीतिसंख्याः । तेषां विन्यासभेदाः । पाटानां यथायोगं योजनावशाद्वाद्यानि भवन्तीत्यर्थः ॥ ८९९ ॥

**वोल्लावणी च चल्लावण्युडुवश्च कुचुम्बिणी ॥**
**चारुश्रवणिकाऽलग्न(ग्नः)परिश्रवणिका ततः ॥ ९०० ॥**
**सममहारः कुडुपवारणा[1] करवारणा[2] ॥**
**दण्डहस्तो घनरवस्तानीति द्वादशावदन् ॥ ९०१ ॥**

तत्र पटहादिसाधारणानि द्वादश वाद्यान्युद्दिशति—**वोल्लावणीत्यादि** ॥९००॥ ॥ ९०१ ॥

अथ त्रयोदश प्रायिकहुडुक्[3]वाद्यान्युद्दिशति—

**वल्लिश्च वल्लिपाटः स्याद्धत्ताभेदौ झडप्पणी ॥**
**अनुश्रवणिका हस्तो जोडणी त्रिगुणा ततः ॥ ९०२ ॥**
**पञ्चहस्तः पञ्चपाणिर्वाद्यं स्यात्पञ्चकर्तरी ॥**
**ततश्चन्द्रकला प्राहुर्वाद्यानीति त्रयोदश ॥ ९०२ ॥**
**प्रायेणैतानि दृश्यन्ते हुडुक्कावाद्यगोचरे ॥**
**वाद्यानामुभयेषां स्यात्पञ्चविंशतिरित्यसौ ॥ ९०४ ॥**

**वल्लिश्चेत्यादि । घत्ताभेदाविति ।** घत्ता च भेदश्चेति द्वंद्वः । झडप्पणीत्येकोऽन्ये च वोल्लावण्यादयो रूढितः संज्ञाशब्दा द्रष्टव्याः ॥ ९०२ ॥ ९०३ ॥ ९०४ ॥

तत्र वोल्लावणीं लक्षयति—

**आदिमध्यावसानेषु देंकारबहुलं भवेत् ॥**
**आद्यखण्डं द्वितीयं च तादृशं वाद्यते पृथक् ॥**
**यत्र वोल्लावणी सोक्ता पटहे वाद्यवेदिभिः ॥ ९०५ ॥**

**यथा—दें३ थों३ दें३ ।**

**आदिमध्यावसानेष्विति । देंकारबहुलमिति ।** यदा पटहे वाद्यत्वेन वोल्लावणी वाद्यते तदा देंकारेण बहुलं प्रचुरं भवेत् । **द्वितीयं च तादृशमिति ।** द्वितीयमपि खण्डं देंकारबहुलं कर्तव्यमित्यर्थः ॥ ९०५ ॥

**अस्याः खण्डद्वयं वाद्यान्तरे स्याद्योजनान्वितम् ॥ ९०६ ॥**

**अस्याः खण्डद्वयं वाद्यान्तरे स्याद्योजनान्वितमिति।** अस्या वोल्लावण्याः खण्डद्व-

---

१ च. 'पचार' । २ च. 'रचार' । ३ ख. 'ति । भल्लि' ।

यमुक्तरूपं योजनान्वितं तत्तद्वाद्योक्तप्रधानाक्षरैर्योजितेतरसाधारणाक्षरान्वितं चेदित्यर्थः । वाद्यान्तरे हुडुक्कादौ वोल्लावणी स्यादित्यर्थः ॥ ९०६ ॥

तदेव केषुचिद्वाद्येषु दर्शयति—

**झेंकृतिर्देंकृतिस्थाने हुडुक्कायां भवेदिह ॥**
**ढक्कायां मर्दले चैव थों त्रिवल्यां तु दों भवेत् ॥ ९०७ ॥**
**करटायां तु टेमेव प्रधानाक्षरयोजना ॥**
**वाद्यान्तरेष्वपि प्राज्ञैः प्रोह्यतामनया दिशा ॥ ९०८ ॥**

**इति वोल्लावणी ।**

**झेंकृतिरित्यादि ।** इह खण्डद्वये देंकृतिस्थाने पटहापेक्षयाऽऽदिमध्यावसानेषु प्रयुक्तस्य देंकारस्य प्रसङ्गे झेंकृतिर्झेंकारः प्रयुक्तश्चेत्तदा हुडुक्कायां वोल्लावणी भवेत् । हुडुक्कायां झेंकारो भवति । थोमित्यादिमध्यावसानेषु प्रयुज्यते चेड्ढक्कायां भवति । थोमिति तु प्रयुज्यते चेन्मर्दले भवति । दोमिति त्रिवल्यां भवेत् । टेमित्येव तु करटायां भवेत् । एवं प्रधानाक्षरयोजनाद्वाद्यान्तरेष्वपि ढक्कादिष्वपि । **अनया दिशा प्रोह्यतामिति ।** तत्तद्वाद्योक्तप्रधानाक्षराणां यथायोगं कादिभिः षोडशवर्णैः सह योजनात्तत्तद्वोल्लावणी कार्येत्यर्थः । ननु प्रधानाक्षरस्यैकत्वादितरेषां बहुत्वात्कथं वाद्यान्तरप्रतीतिरिति चेदुच्यते । यथा षड्जादिष्वेकतमस्यांशत्वेनेतरेषां बहुत्वेऽप्यंशस्यैव तत्र प्रधानत्वेन प्रयोगबाहुल्यादितरेषां तद्रागभूषितत्वे सति रागान्तरप्रतीतिस्तद्वदत्रापि देंकारादिभिः प्रधानाक्षरैरितरेषां तत्र तत्र योगात्तेषां तत्तद्ध्वनिभूषितत्वे सति तत्तद्वाद्यप्रतीतिरिति न किंचिदेतत् ॥ ९०७ ॥ ९०८ ॥

**इति वोल्लावणी ।**

---

**मण्डले चाल्यते यत्र प्रोचुश्चल्लावणीममूम् ॥**

**इति चल्लावणी ।**

**वामेन तलहस्तेन दक्षिणेन तु पाणिना ॥**
**लुलितेन सकोणेन वादनादुडुवो भवेत् ॥ ९०९ ॥**

**इत्युडुवः ।**

**उद्दलीपिहिते वक्त्रे हस्तस्वस्तिकताडनात् ॥**
**खुकारबहुलं वाद्यं कीर्तयन्ति कुचुम्बिणीम्[१] ॥ ९१० ॥**

**इति कुचुम्बिणी ।**

चल्लावण्यादीनां लक्षणानि ग्रन्थत एवावगन्तव्यानि ॥ ९०९ ॥ ९१० ॥

---

१ घ. °चुम्बणी° ।

वोल्लावण्येव पाणिभ्यां क्रमाद्वा युगपत्कृतैः ॥
भूरिभिः संभृता पाटैश्चारुश्रवणिका भवेत् ॥
शुद्धैश्चित्रैः क्रमात्पाटैः शुद्धा चित्रेति सा द्विधा ॥ ९११ ॥

इति चारुश्रवणिका ।

अलग्नः कुण्डलीस्पर्शं विना कोणप्रहारतः ॥ ९१२ ॥

इत्यलग्नः ।

कर्तरी समपाणिश्चावघटो यत्र तु क्रमात् ॥
सोक्ता परिश्रवणिका श्रीयज्ञपुरसूरिणा ॥ ९१३ ॥

इति परिश्रवणिका ।

समप्रहारो युगपत्करद्वंद्वेन घाततः ॥

इति समप्रहारः ।

कुडुपोद्भवपाटाख्यं वाद्यं कुडुपवारणा[1] ॥
उच्यते वादनो दण्डः कोणः कुडुप इत्यपि ॥ ९१४ ॥

इति कुडुपवारणा ।

जाता हस्तजपाटैस्तु केवलैः करवारणा[2] ॥ ९१५ ॥

इति करवारणा ।

एकैको यः करद्वंद्वान्मृदुदक्षिणपाणिकात् ॥
जायते तादृशैः पाटैर्दण्डहस्तोऽभिधीयते ॥ ९१६ ॥

इति दण्डहस्तः ।

यः करेण कराभ्यां वा कृतैः पाटैर्निरन्तरैः ॥
निरन्तरघनध्वानः स स्याद्घनरवाभिधः ॥ ९१७ ॥

इति घनरवः ।

इति द्वादश पटहादिजातिवाद्यानि ।

---

स्कन्धेन मणिवन्धेन कुडुपेन च चालनात् ॥
सोल्लासाज्जायते वल्लिस्त्रिविधा पटहादिषु ॥ ९१८ ॥

इति वल्लिः ।

अर्धं वाऽर्धद्वयं वल्ल्यां स्वैः स्वैः पाटैरयोजनम् ॥
कृतसंयोजनं वा चेद्वल्लिपाटस्तदा भवेत् ॥ ९१९ ॥

इति वल्लिपाटः ।

॥ ९११ ॥ ९१२ ॥ ९१३ ॥ ९१४ ॥ ९१५ ॥ ९१६ ॥ ९१७ ॥ ९१८ ॥ ९१९ ॥

---

१ च. °पचारिणा । २ च. °रचारणा ।

निबद्धं वादयेदर्धं झेंकाराद्यं पुरातनम् ॥
अनिबद्धं स्वबुद्ध्याऽर्धं कराभ्यां वादयेदथ ॥ ९२० ॥
वाद्येनाऽऽद्यं निबद्धं चेत्पुनर्धत्ता तदोच्यते ॥

इति धत्ता ।

योगेनैकेन निष्पन्नस्तदुपाङ्गभवोऽपरः ॥ ९२१ ॥
पाटोऽन्योन्याङ्गयोगस्तैः संमिश्रैः पादपूरणैः ॥
नानावाद्योद्भवैः पाटैर्भेदस्त्रेधा लयत्रयात् ॥ ९२२ ॥

इति भेदः ।

यस्यामुपक्रमे मध्येऽन्तेऽथ वाद्यैरनेकधा ॥
सर्ववाद्यानि वाद्यन्ते जगदुस्तां झडप्पणीम् ॥ ९२३ ॥

इति झडप्पणी ।

पाटः पाटाक्षरं यद्वा श्रूयते चेत्पुनः पुनः ॥
अनुश्रवणिकां प्राह शंकरानुचरस्तदा ॥ ९२४ ॥

इत्यनुश्रवणिका ।

द्वे चत्वारि भवन्त्यष्टौ यद्वा खण्डानि षोडश ॥
देंकारादीनि यत्रासौ हस्तः स तु चतुर्विधः ॥ ९२५ ॥
चतुरस्त्रत्र्यस्त्रमिश्रखण्डतालप्रयोगतः ॥

इति हस्तः ।

तदर्धार्धादिभेदेन क्रमेण व्युत्क्रमेण वा ॥
अखण्डतालाः पाटाश्चेद्युज्यन्ते जोडणी तदा ॥ ९२६ ॥

इति जोडणी ।

खण्डानि त्रीणि यत्र स्युरेकैकं त्रिगुणं तथा ॥
वाद्यते यत्र सा प्रोक्ता त्रिगुणा त्रिविधा च सा ॥ ९२७ ॥
आदिमध्यान्तखण्डानां त्रैगुण्यात्सा पुनर्द्विधा ॥
क्रमव्युत्क्रमतोऽथास्यास्तत्रैगुण्यमुदाहरेत् ॥ ९२८ ॥
प्रयुज्य त्रीणि खण्डानि प्रयुञ्जीताऽऽदिमद्वयम् ॥
ततश्चाऽऽद्यमिति प्रोक्तं खण्डे त्रैगुण्यमादिमे ॥ ९२९ ॥

॥ ९२० ॥ ९२१ ॥ ९२२ ॥ ९२३ ॥ ९२४ ॥ ९२५ ॥ ९२६ ॥ ९२७॥
॥ ९२८ ॥ ९२९ ॥

इत्यादित्रिगुणा मध्ये त्रिगुणा तु द्विधा भवेत् ॥
त्रैगुण्यान्मध्यखण्डस्य द्विःप्रकारात्तदुच्यते ॥ ९३० ॥
खण्डत्रयं ततः खण्डद्वयमाद्यं प्रयुज्यते ॥
ततो मध्यममित्येवं यद्वा खण्डद्वयात्परम् ॥ ९३१ ॥
अन्त्यद्वयं वादयित्वा प्रयोज्यं मध्यमं दलम् ॥
अथान्तत्रिगुणायां प्राक्खण्डत्रितयवादनम् ॥ ९३२ ॥
ततोऽन्तिमद्वयं खण्डमन्तिमं वादयेत्तथा ॥
एवमष्टविधामाह त्रिगुणां भववल्लभः ॥ ९३३ ॥
अथवा चतुरस्रादौ क्वापि ताले दलत्रयम् ॥
प्रयुज्यैकस्य खण्डस्य मानेनाथ दलद्वयम् ॥ ९३४ ॥
कुर्याद्दलत्रयं तावद्यत्र सा त्रिगुणा भवेत् ॥
चतुरस्त्र्यस्रमिश्रयुक्तैर्वैषा क्रमाद्दलैः ॥ ९३५ ॥
अन्ये त्वेककले ताले द्विकलेऽथ चतुष्कले ॥
क्रमाद्विरचितैः खण्डैस्त्रिगुणामभणन्बुधाः ॥ ९३६ ॥
एवं चच्चत्पुटे खण्डद्वयं चाचपुटे ततः ॥
मिश्रे खण्डत्रयं यत्र त्रिगुणां तां जगुः परे ॥ ९३७ ॥
पदैश्चतुर्भिरस्यां स्यात्खण्डमेकं पदं पुनः ॥
मितं कलाभिरष्टाभिरित्युक्तं सूरिशार्ङ्गिणा ॥ ९३८ ॥

इति त्रिगुणा ।

पञ्चहस्तो हस्तपाटैर्हस्तशब्दान्विताभिधैः ॥

इति पञ्चहस्तः ।

पञ्चपाणिस्तु पाटैः स्यात्पाणिशब्दयुताभिधैः ॥ ९३९ ॥

इति पञ्चपाणिः ।

कर्तरीपदवत्संज्ञैः पाटैः स्यात्पञ्चकर्तरी ॥ ९४० ॥

इति पञ्चकर्तरी ।

वर्धन्ते च ह्रसन्ते चेन्मात्राश्चन्द्रकला इव ॥
तालश्चन्द्रकलाख्यश्च तदा चन्द्रकला भवेत् ॥ ९४१ ॥

॥ ९३० ॥ ९३१ ॥ ९३२ ॥ ९३३ ॥ ९३४ ॥ ९३५ ॥ ९३६ ॥ ९३७ ॥
॥ ९३७ ॥ ९३९ ॥ ९४० ॥ ९४१ ॥

---

१ ग. घ. वाद्यते ततः । ए° ।

द्वात्रिंशन्मात्रिकामन्ये प्राहुश्चन्द्रकलामिमाम् ॥
द्विमात्राः षोडशकला वृद्धिह्रासयुजो विदुः ॥
तादृक्चतुःषष्टिकलां तामाहुर्दक्षिणे पथि ॥ ९४२ ॥

॥ ९४२ ॥

इति चन्द्रकला ।

इति त्रयोदश प्रायिकहौडुक्कवाद्यानि ।

इति पञ्चविंशतिरुभयवाद्यानि ।

---

एवं वाद्यानि निरूप्य तत्प्रबन्धान्दर्शयितुमाह—

उद्ग्राहादिनिबद्धाः स्युरत्र गीतप्रबन्धवत् ॥
वाद्यप्रबन्धास्तद्भेदलक्ष्माण्यभिदधेऽधुना ॥ ९४३ ॥

**उद्ग्राहादीत्यादि** । अत्र वाद्यप्रकरणे गीतप्रबन्धवत् । (*गीतप्रबन्धा एलादयस्ते यथा) **उद्ग्राहादिनिबद्धा** इति । उद्ग्राहादय उद्ग्राहो मेलापको ध्रुवो विकल्पेनान्तर आभोगश्चेति प्रबन्धाध्याय उक्ता धातवः । तैर्निबद्धा एलादयो यथा गीतप्रबन्ध उक्तास्तथाऽत्रापि तैर्निबद्धा यत्यादयो वाद्यप्रबन्धाः स्युः । गीतप्रबन्धवदित्यतिदेशेनैव मेलापकाभोगयोर्यथायोगमभावेन द्विधातुकत्वादिकं भेदत्रयं द्रष्टव्यम् । वाद्यप्रबन्धगतानामुद्ग्राहादीनां भाण्डिकलोककृताः संज्ञास्तु लहरीत्युद्ग्राहस्य येंडुप इति मेलापकस्य (+संभवतीति) अन्तरिति ध्रुवस्योपान्तरी(रि?)ति वैकल्पिकस्यान्तरस्य मुक्तायीत्याभोगस्य च संज्ञा द्रष्टव्याः । **तद्भेदलक्ष्माणीति** । तेषां वाद्यप्रबन्धानां भेदा यत्यादयः । तेषां [लक्ष्माणि] लक्षणानि ॥ ९४३ ॥

यतिरोता च गजरो रिगोणी कवितं पदम् ॥
मेलापकश्चोपशमोद्ग्राहप्रकरणान्यथ ॥ ९४४ ॥
अवत्सकश्छण्डणश्च तुडुका मलपं ततः ॥
मलपाङ्गं च मलपपाटश्छेदोऽथ रूपकम् ॥ ९४५ ॥
अन्तरोऽन्तरपाटश्च खोजः खण्डयतिस्ततः ॥
खण्डच्छेदोऽप्यवयतिः खण्डपाटश्च खण्डकः ॥ ९४६ ॥
खण्डहुल्लः समः पाटो ध्रुवकोऽङ्गाङ्गरूपके ॥
तालो वितालः खलकः समुदायश्च जोडणी ॥ ९४७ ॥

---

* एतच्चिह्नान्तर्गतमधिकमिव भाति । + इदमधिकम् ।

---

१ ख. युडुपु । २ ख. 'क्तापीत्या' ।

उडवस्तलपाटश्चोट्टवणी तुण्डकस्ततः ॥
अङ्गपाटश्च पैसारस्त्रिचत्वारिंशदित्यमी ॥ ९४८ ॥
उक्ताः श्रीकरणाग्रण्या प्रबन्धा वाद्यसंश्रयाः ॥
शीतोदकास्तथा स्नानगर्वोऽन्यो गर्वनिर्णयः ॥ ९४९ ॥
उत्प्रेक्षामात्रजा लक्ष्महीनास्तेऽस्मदुपेक्षिताः ॥
प्रायो वाद्यप्रबन्धानां देंकारोऽन्ते निधीयते ॥ ९५० ॥

तान्युद्दिशति—**यतिरित्यादि** ॥ ९४४ ॥ ९४५ ॥ ९४६ ॥ ९४७ ॥ ॥ ९४८ ॥ ९४९ ॥ ९५० ॥

तत्र[1] यतिं लक्षयति—

काभ्यांचित्कूटवर्णाभ्यां रचितोऽत्यन्तकोमलः ॥
एकरूपाक्षरस्तालच्छन्दोभिव्यञ्जनोज्ज्वलः ॥ ९५१ ॥
यो वाद्यते वाद्यखण्डो विरामैर्बहुभिर्मुहुः ॥
यतिर्जक्का च सा तज्ज्ञैर्वाद्या मण्ठादिसालगे ॥ ९५२ ॥

**काभ्यांचिदिति** । कूटवर्णाभ्यां पटहादिवाद्यसाधारणवर्णाः कूटवर्णा उच्यन्ते तेषु याभ्यां काभ्यांचित् । **रचित इति** । मिथोयोगार्हाभ्यां 'तथोंग[2] कथोटिंग' इत्याद्यक्षराभ्यां निर्मितः । अत्यन्तकोमलः प्रबन्धकाठिन्यवर्जितः । एकरूपाक्षर उपक्रान्तवर्णानुसारेणैव समापितः । **तालच्छन्दोभिव्यञ्जनोज्ज्वल इति** । तालच्छन्दसोरभिव्यञ्जनेन प्रकाशमानः । बहुभिर्विरामैर्विच्छेदैरुपलक्षितो यो वाद्यखण्डो **मुहुर्वाद्यते सा यतिर्जक्का च** । जक्केति यतेः संज्ञान्तरमित्यर्थः । **सा तज्ज्ञैर्मण्ठादिसालग इति** । सालगसूडस्थे मण्ठादौ गीते वाद्या वादनीया रचनायां योजनीयेत्यर्थः॥९५१॥९५२॥

आदौ वाद्यप्रबन्धस्य कस्याप्यङ्गतया यदा ॥
तद्विदो वादयन्त्येतां वदन्त्युटवणं तदा ॥ ९५३ ॥
गड्दगथों गक्कथोंटें गड्दगथों गक्कथोंटें गड्दगथों गक्कथोंटें ।
पाटानां रचनां केचिदत्र नेच्छन्ति सूरयः ॥ ९५४ ॥

इति यतिः ।

एतां यतिं यदा कस्यापि वाद्यप्रबन्धस्यो[3](स्यौ)तागजरादेरादावङ्गतया तद्विदो वादयन्ति तदो[4]टवणं वदन्ति । अत्र यतौ केचित्सूरयः पाटानां नागबन्धादीनां रचनां नेच्छन्तीत्यनेन केचिदिच्छन्तीति गम्यते ॥ ९५३ ॥ ९५४ ॥

इति यतिः ।

---

१ ख. °प्रस्थय° । २ ख. °थोंगः क° । ३ छ. °न्धस्य तागजरागदे आदा° । ज. °न्धस्य चतौ गराद आदा° । ४ ख. °दोडुव° ।

अनन्तरमोतां लक्षयति—

द्विरुद्ग्राहस्ततः खण्डं यस्यां द्विर्भूरिदेंकृति ॥
तत्किंचिदधिकं वारे द्वितीयेऽथ तृतीयकम् ॥ ९५५ ॥
कियद्दीर्घं शुद्धकूटखण्डैः पाटैर्विमिश्रितैः ॥
व्यस्तैः समस्तै रचितं ततो देंकृतिमत्पुनः ॥ ९५६ ॥
सकृत्तच्च प्रयोक्तव्यमथ वर्णसरात्मकम् ॥
दीर्घं खण्डं ततोऽल्पं च प्राच्यं शुद्धादिनिर्मितम् ॥
ओता सोक्ता छण्डणान्ता कैश्चिद्देंकृतिमुक्तिका ॥ ९५७ ॥

**द्विरुद्ग्राह इत्यादि** । यस्यामोतायामुद्ग्राहो द्विर्द्विवारं प्रयोज्यो भवति । तत उद्ग्राहानन्तरं भूरिदेंकृति बहुलदेंकारं चण्डीमेलापकाख्यं खण्डं द्विर्भवेत् । तत्खण्डं द्वितीये वारे किंचिदधिकं प्रथमवारापेक्षया । किंचिदधिकमित्यनेन द्वितीयं खण्डमपि द्विवारं कर्तव्यमित्यर्थः । द्वितीयवारे किंचिदाधिक्यं च कतिपयैः पाटाक्षरैः कर्तव्यं भवति । अथ तृतीयकं ध्रुवाख्यं खण्डम् । शुद्धकूटखण्डैरिति पाटैरित्यस्य विशेषणम् । शुद्धाश्च कूटाश्च खण्डाश्चेति द्वंद्वः । अत एव मिश्रितैर्व्यस्तैः समस्तपाटै रचितम् । कियद्दीर्घं पूर्वखण्डापेक्षया किंचिद्दीर्घं भवेत् । ततोऽनन्तरम् । **देंकृतिमत्तच्च पुनः सकृत्प्रयोक्तव्यमिति** । तृतीयखण्डानन्तरं द्वितीयं देंकारखण्डं पुनः सकृदेकवारं प्रयुञ्जीतेत्यर्थः । देंकृतिमदिति द्वितीयखण्डमित्यत्र परामृश्यते । **अथ वर्णसरात्मकमिति*** । **छण्डणान्तेति** । छण्डणो नाम वक्ष्यमाणो वाद्यप्रबन्धभेदः । सोऽन्ते यस्याः सा तथोक्ता । **देंकृतिमुक्तिकेति** । प्रायो वाद्यप्रबन्धानां देंकारोऽन्ते विधीयत इति सामान्येन पूर्वमुक्तम् । तस्य मतान्तरेण क्वचिदपवादो दर्शितो भवति ॥ ९५५ ॥ ९५६ ॥ ९५७ ॥

एषैककलयुग्मे स्यान्निःसारौ छण्डणो भवेत् ॥
उद्धतो ध्वनिरत्र स्यात्प्रायो मानं विलम्बितम् ॥ ९५८ ॥
दीप्तं नृत्तं च तामाहुः केचित्केदार इत्यपि ॥
इमामावहनीं प्राहुरेकेऽन्ये त्वन्यथा जगुः ॥ ९५९ ॥

एषौतैककलयुग्मे यथाक्षरचच्चत्पुटे स्यात् । छण्डण ओताङ्गत्वेन तदन्ते प्रयोज्यः । छण्डणो निःसारौ भवेत् । अत्रौतायां प्रायेण(प्रायः) प्राचुर्येणोद्धतो ध्वनिर्घोषाक्षरजनितो ध्वनिर्विलम्बितं मानं च दीप्तं नृत्तं च स्यात् । अस्या एवौताया मतान्तरेण संज्ञान्तराणि दर्शयति—**तामाहुरित्यादिना** ॥ ९५८ ॥ ९५९ ॥

---

* एतदग्रे किंचित्त्रुटितमिव भाति ।

पाटैर्बहुलदेंकारैस्तालैश्च निखिलैः कृता ॥
वहुधा स्थापना यस्यामाहुराहवनीं बुधाः ॥ ९६० ॥

ये त्वेनामाहवनीमाहुस्तेषु केचन तस्या लक्षणमन्यथा जगुरित्युक्त्वा तद्दर्शयति— पाटैर्बहुलदेंकारैरिति ॥ ९६० ॥

आदौ देंकारखण्डं चेद्देंकारादिस्तदोच्यते ॥ ९६१ ॥

आदाविति । ओतायामादावुद्ग्राहखण्डात्पूर्वं देंकारखण्डं प्रयुज्यते चेत्तदौता देंकारादिरित्युच्यते ॥ ९६१ ॥

लक्षणानुसारेण प्रस्तार्यं दर्शयितुमाह—

यथा—तद्धिटें कत्थोंकट नगनथोंगकुथोंगदा२ धिकट्ट२ तकटथोंगक धिधिक थोरघटे२ इत्युद्ग्राहो द्विवारं कर्तव्यः। गड्दगदे गिनदेंगक् तु थं हं देंगक् देंगनथ गनतदिगि नत्तत्तेक्टदेंदेंगिनतक्ट खुखुघंघं देंगक् । इति देंकारखण्डं द्विः ।

द्वितीयवारे त्वधिकं कथ्यते यथा-गड्पक् देंगक् गडड्दक् देंगक्, इति । तदेंगडदक्टें थोंकदथोंगक् तटे कटदकट् दरे होंकथोरेहेटैतकें धिकथोंटें थों टें थों टें, इति तृतीयखण्डे(ण्डं) शुद्धादिपाटरचितम् ।

ततः पुनः प्राचीनदेंकारखण्डं सकृत् । ततः—गड्दक् दग्गिनधिकाधिक तकदेंगि कथन हकदक दडक् दरगड धिरिगिड धरगड्दक् । दरगरदग धिरगडदग२ तकधिंगथोंगटे धिकथोंगटै थिक थोडिं खुं खुततक् थोरगड२ तक् थोरगडतक् थोतक् थोतक् थोरगड थोरगड तक् धिकथोंगटें । इति वर्णसरात्मकं खण्डम् ।

ततः प्राचीनं शुद्धादिनिर्मितं स्वल्पम् । एतावत्पर्यन्तं चच्चत्पुटे । गड्दग् टेंद्रग् थोहटें हेते दहं थो२ तद धिधि थों थों रघटे टें थों तथों तकथों धिकथोंटें। इति निःसारौ छण्डणः। टेंकारस्थाने देंकार इत्यन्ये ।

यथेति । प्रस्तारस्तु तद्धिटेमित्यादिग्रन्थत एवावगन्तव्यः । अत्र प्रथमं द्विरावृत्तं खण्डमुद्ग्राहः । ततो देंकारबहुलं द्वितीयवारेऽधिकं द्विरावृत्तं द्वितीयखण्डं मेलापकः । ततः शुद्धादिनिर्मितं तृतीयखण्डं ध्रुवः । ततो ध्रुवशेषत्वेन सकृद्देंकारखण्डस्यानन्तरं वर्णसरात्मकं दीर्घं चतुर्थखण्डमन्तरः । ततोऽल्पं शुद्धादिनिर्मितं पञ्चमं खण्डमाभोगः ।

---

१ ग. घ. °वनीममूम् । आ°।

एवमन्यत्राप्युद्ग्राहादयोऽवयवा यथासंभवं द्रष्टव्याः । तदेतावदोतास्वरूपं चचत्पुटे प्रोक्तम् । छण्डन(ण)स्तु पृथक्प्रबन्धोऽप्योताङ्गत्वेन विहितत्वादोतान्तर्भूत एव निःसारो प्रयोक्तव्यः ।

इत्योता ।

---

अथ गजरं लक्षयति—

**कृत्वैकवारमुद्ग्राहं नातिदीर्घो न चाल्पकः ॥**
**वादकोद्धोषगम्भीर(रो)ध्वनिमुच्चतरं दधत् ॥ ९६२ ॥**
**त्रिः खण्डोऽभ्यस्यते कूटैर्बद्धो वर्णसरेण वा ॥**
**मुहुर्विधायोपशमं छण्डणो यत्र रज्यते ॥ ९६३ ॥**
**गजरोऽसावुद्वणं स्यादस्याऽऽदौ पुनः पुनः ॥**
**एकताल्यामुद्वणं तस्यां निःसारुकेऽथवा ॥ ९६४ ॥**
**भवेदुपशमोऽन्यत्र नास्य तालो नियम्यते ॥**
**गजरावयवाः सर्वे वाद्यन्ते ते निरन्तराः ॥ ९६५ ॥**

**कृत्वैकवारमित्यादि** । यत्र गजरे प्रथममेकवारमुद्ग्राहं कृत्वा । नातिदीर्घ इत्यादीनि खण्डविशेषणानि द्रष्टव्यानि । कूटैः पटहादिसाधारणैरक्षरैर्वर्णसरेण वा बद्ध उच्चतरं ध्वनिं दधत् । नातिदीर्घोऽत्यायतत्वरहितः । न चाल्पकोऽतिह्रस्वत्वरहितः । वादकोद्धोषगम्भीरः । वादक इति तु स्वमुखेनैव पाटाक्षरोच्चारणपटुस्तालधरो वा पटहादिवाद्यवादको वाऽभिधीयते । तस्योद्धोष उच्चारणे वादने वा घनध्वनिः । तेन गम्भीरः । एवंविधः खण्डस्त्रिवारमभ्यस्यते । उपशममुपशमाख्यं वक्ष्यमाणं वाद्यप्रबन्धं मुहुर्विधाय छण्डणो रज्यते रागयुक्तः क्रियते चेदसौ गजरप्रबन्धः । अस्य गजरस्याऽऽदावुद्वणं वक्ष्यमाणं पुनः [पुनः?] स्यात् । तदुद्वणमेकताल्यां स्यात् । उपशमस्तस्यामेकताल्यामथवा निःसारुके भवेत् । अन्यत्रेति । गजराङ्गत्वादन्यत्र प्रबन्धान्तराङ्गत्वे स्वतन्त्रत्वेने(त्वे वे)त्यर्थः । अस्योपशमस्य तालो न नियम्यते । अत्रैव तालनियम इत्यर्थः ॥ ९६२ ॥ ९६३ ॥ ९६४ ॥ ९६५ ॥

प्रस्तार्य दर्शयति—

**यथा—तथोह तथोह धिथों२ हटे । थोंहदग थोहटें । इत्युद्वणमेकताल्यां पुनः पुनः । थोंटें दंदगेन थोंगटें गें धिकतक । इत्युद्ग्राहः । प्रतिग्राहेण(हणा) वोच्यते । अयं किलैकताल्यां कृतः । गद्दगत देंगगनग्दिहिक् । कथोंगतकधिक थोंगटेंहें थोदगक् । गिद्दक्थोंगक्थों३ देंथोंहटगथों३ दें, इति त्रिरेकताल्यां**

खण्डः। केवलोऽप्ययं खण्डो गजर इत्युच्यते। गड्दक्थोंगक्थों-
गक्कथोहरघट थरे। इत्येकताल्यां पुनः पुनरुपशमः। थोहर्टे।
इति च्छण्डणः। एतत्सर्वं नैरन्तर्येण वाद्यते। इति गजरः।

तथोहं तथोहेत्यादि। उद्ग्राहं प्रस्तार्य प्रतिग्रहणा चोच्यत इत्युद्ग्राहस्य संज्ञान्तर-मुक्तम्। लोके हि तथा ताण्डिका वदन्ति। प्राकृतत्वेन 'पडिघा' इति गजरावयवाः सर्वे वाद्यन्ते। निरन्तरा इत्युक्तत्वादत्रावयवत्वेनोक्तान्युपशमच्छण्डणोट्टवणानि नैरन्त-र्येण प्रयोज्यानि। अयं गजर उद्ग्राहे ध्रुवाभ्यां द्विधातुको वेदितव्यः। उपशमादयः पृथक्प्रबन्धा अप्यङ्गत्वेन विहिताः प्रयुक्ताः। एवमन्यत्रापि द्रष्टव्यम्॥

इति गजरः।

---

अथ रिगोणीं लक्षयति—

प्रत्येकं द्विः प्रयुक्तेनोपशमेनान्तयोगिना॥
युक्तं खण्डत्रयं शुद्धैः कूटैः खण्डैश्च निर्मितम्॥
पाटैर्व्यस्तैः समस्तैश्च बद्धं वर्णसरेण वा॥ ९६६॥
यस्यां स्याद्वादकस्थूलमिलत्कोलाहलाकुलम्॥
छण्डणान्ता रिगोणी सा दधती ध्वनिमुत्तमम्॥ ९६७॥
अस्यामुट्टवणं कार्यं वैकल्पिकमुपक्रमे॥
दीप्तनृत्ते भवेदेषोपशमा ललिता मता॥ ९६८॥
ललितं यद्युट्टवणं तदा तल्ललिते भवेत्॥
अन्त्यखण्डात्सोपशमच्छण्डणादीप्तनर्तनम्॥ ९६९॥

प्रत्येकमित्यादि। द्विर्द्विवारं प्रयुक्तेनान्तयोगिना खण्डान्तसंबन्धेनोपशमेन युक्तम्। पुनः किंविधम्। [शुद्धैः] कूटैः खण्डैश्च निर्मितम्। शुद्धास्तत्तद्वाद्यप्रतिनियता वर्णाः। कूटाः सर्ववाद्यसाधारणाः। अत्र खण्डशब्देन वर्णसमुदायावयवभूता उच्यन्ते। तैश्च निर्मितम्। व्यस्तैः समस्तैश्च पाटैर्नागबन्धादिभिर्बद्धं वर्णसरेण वा बद्धं प्रत्येकमेवं-विधं खण्डत्रयं यस्यां स्यात्सा रिगोणीति संबन्धः। पुनः किंविधा। वादकस्थूलमिल-त्कोलाहलाकुलमुत्तमं ध्वनिं दधती। मध्ये मध्ये वादको वाद्यध्वनिमेलनेन खलु कोलाहलं स्थूलध्वनिं(?) करोति तेन संकीर्णमुत्तमं सुखश्राव्यमित्यर्थः। तादृशं ध्वनिं दधती। छण्डणोऽन्ते यस्याः सा। अस्यां रिगोण्यामुपक्रम उट्टवणं वैकल्पिकं कार्यम्। एषा रिगोणी दीप्तनृत्त उद्धते भवेत्। उपशमाः खण्डान्तेष्वङ्गत्वेन प्रयुक्ताः। ललिते नृत्ये लास्यनृत्ये मताः। उट्टवणं यदि स्वयं ललितं तदोट्टवणं ललितनृत्ते भवेत्। इत्ये-

---

१ ख. 'हधि छोद्दे'।

नेनोट्टवणस्य कदाचिद्द्रुतत्वमप्युक्तं भवति । अन्त्यखण्डादारभ्य सोपशमच्छण्डणे दीप्तनर्तनमुद्धतनृत्तं प्रयोज्यमित्यर्थः ॥ ९६६ ॥ ९६७ ॥ ९६८ ॥ ९६९ ॥

**यथा—तर्के धिर्के तकधिक तककि थोंकटगेन२ थोंगकथों३ इति प्रथमखण्डम् ।**

**टैथोटेंगें त्थोंधिथोंहधिहटें । इत्युपशमो द्विः । तर्कगे दडरद कुथिकुगंदडधिक दकगं दडग्दक्थोंगत्तकधिक कधिकत धिककधि टेंगेंनथोंग२ थोंगकथों इति द्वितीयखण्डम् ।**

**टैं थों हटगें थोंटें । इत्युपशमो द्विः । थोंगटं दरगड धिरगड धित्थाः थोंकट तकथों कटधिकक् । थोंधिक तद्धितक् । इति तृतीयखण्डम् ।**

**कत्थोंटक थोंहकटगे धिकटै थौ हटगें थों हटें इत्युपशमो द्विः । तथों गिद्दक् दिगनदिगन दिगनक थोंगतद्धितक् । थोंहटें । इति च्छण्डणः ।**

**इत्येकताल्यामुदाहरणम् । इति रिगोणी ।**

तर्के धिकेमित्यादिः प्रस्तारो द्रष्टव्यः । इत्येकताल्यामुदाहरणमिति । लिखिते प्रस्तार इत्यर्थः । एवं तालान्तरेऽपि द्रष्टव्यमिति भावः । खण्डत्रययुक्तत्वादयं त्रिधातुर्वेदितव्यः ।

**इति रिगोणी ।**

---

अथ कवितं लक्षयति—

**नातिदीर्घं द्विराद्यं स्यात्खण्डं शुद्धादिनिर्मितम् ॥**
**यद्वा वर्णसरेणाथ तादृक्खण्डं सकृद्भवेत् ॥ ९७० ॥**

**नातिदीर्घमित्यादि** । यत्र कविते शुद्धादिनिर्मितम् । आदिशब्देन कूटाः खण्डाश्च गृह्यन्ते । यद्वा वर्णसरेण निर्मितं नातिदीर्घमाद्यं खण्डं द्विः प्रयोज्यं स्यात् । अथानन्तरं तादृगाद्यखण्डसदृशं द्वितीयखण्डं सकृद्भवेत् ॥ ९७० ॥

**इत्युद्ग्राहध्रुवौ कृत्वा स्वोद्ग्राहान्त्यदलेऽथवा ॥**
**स्वोद्ग्राहे यत्र मुक्तिस्तत्कवितं कवयो विदुः ॥ ९७१ ॥**

**इत्युद्ग्राहध्रुवाविति** । आद्यं द्विरभ्यस्तमुद्ग्राहः । अथ सकृत्कृतं ध्रुवः । तौ कृत्वा स्वोद्ग्राहान्त्यदले स्वकीयोद्ग्राहान्त्यार्धे । अथवा स्वोद्ग्राहे समस्त एवोद्ग्राहे वेत्यर्थः । मुक्तिन्या(र्न्या)सो भवति तत्कवितं विदुरिति संबन्धः ॥ ९७१ ॥

---

१ ख. °त्र रचिते ।

अस्य नामान्तरं प्राहुरन्येऽवच्छेद इत्यपि ॥
भवेदिह द्रुतं मानं वर्णाः प्रायः स्युरुद्धताः ॥
बाहुल्यान्नर्तनं दीप्तं निःशङ्केनेति कीर्तितम् ॥ ९७२ ॥

अस्य कवितस्यावच्छेद इति नामान्तरमन्ये प्राहुः । इह कविते द्रुतमानं भवेत् । **प्राय उद्धता इति** । उद्धतप्रचुरा इत्यर्थः । **बाहुल्यादीप्तं नर्तनमिति** । वर्णानुगुण्येनेति भावः ॥ ९७२ ॥

**यथा—गड्दक्दगिनदंदं गिनथोंग धिकट नकाधितक देंहकदर गडदरिक्थ रिक्थ रिदरगड थरिक थों गंडके । धिक्थोंटें२ । इत्युद्ग्राहो द्विः । झेंकक नखखिन२ तहें हके नखखिनथों । इति ध्रुवाख्यं खण्डम् ।**

**ततो देंहकडरगडेत्यादिनोद्ग्राहान्त्यखण्डेनोद्ग्राहेण वा सकलेन गड्दगित्यादिना त्यागः । निःसारुताले चेदमुदाहरणम् ।**

**इति कवितम् ।**

गड्दग्दगिनेत्यादिप्रस्तारो लक्षणानुसारेण द्रष्टव्यः । मेलापकाभोगहीनत्वादिदं द्विधातु वेदितव्यम् ।

इति कवितम् ।

---

अथ पदं लक्षयति—

उद्ग्राहोऽल्पो ध्रुवो नातिदीर्घः शुद्धादिनिर्मितः ॥
स्याद्वर्णसरबद्धो वा छण्डणोऽन्ते यदा तदा ॥
पदं वदन्ति वाद्यज्ञाः प्रायस्तद्दीप्तनर्तने ॥ ९७३ ॥

**उद्ग्राहोऽल्प इत्यादि** । ध्रुवो नातिदीर्घ इत्यनेन ध्रुवस्योद्ग्राहापेक्षया द्विगुणदीर्घत्वं विवक्षितम् । ततोऽपि दीर्घत्वं निषिध्यते । शिष्टं स्पष्टम् ॥ ९७३ ॥

**यथा—तदेहें तदें ततक्तदै । इत्युद्ग्राहः । तकट धिकट धिधिकिट धिकिटगांड्दगधिकतक धिकथोंगटें । इति ध्रुवः ।**

**गत कटधिधि कटधिकिग्डदगधिधिकट धिकिरडाडगधिगकिग्डाहगथोंटैं हंधिकथोंगटें । इति च्छण्डणः । इदमुदाहरणं वर्णताले ।**

तद्देहें तद्देमिति प्रस्तारः ।

मतान्तरेण पदस्य लक्षणमाह—

**वादयित्वा यतिं मध्ये प्रबन्धस्य विमुच्यते ॥**
**पाटेन यत्र तत्प्रोक्तमपरैः सूरिभिः पदम् ॥ ९७४ ॥**

**इति पदम् ।**

**वादयित्वेति** । प्रबन्धस्योक्तलक्षणस्य पदप्रबन्धस्य मध्ये । उद्ग्राहध्रुवयोरन्तराल उद्ग्राहात्परं ध्रुवात्पूर्वमित्यर्थः । यतिं प्रथमोक्तं यतिप्रबन्धं वादयित्वा पाटेन तत्पूर्वोक्तेषु हस्तपाटेषु येन केनचित्पाटेन विमुच्यते त्यज्यते यत्र तत्पदं प्रोक्तम् । उद्ग्राहध्रुवकाभ्यामिदं द्विधातु ॥ ९७४ ॥

**इति पदम् ।**

---

अथ मेलापकं लक्षयति—

**एकताल्यां द्रुते माने नर्तनारम्भगोचरे ॥**
**समं च करटाटीपिकाहलावादने सति ॥ ९७५ ॥**
**अभ्यस्तो वाद्यखण्डोऽल्पः कूटेनैकेन निर्मितः ॥**
**तद्धीमितिच्छण्डणान्तः स्मृतो मेलापको बुधैः ॥ ९७६ ॥**

**एकताल्यामित्यादि** । द्रुते माने नर्तनारम्भगोचरे नृत्तारम्भविषये । सममेककालम् । **करटाटीपिकाहली(ला)वादने सतीति** । करटायाष्टीपिः करटी(टा)टीपिः काहलाया वादनं काहलावादनं तयोर्द्वंद्वैकवचनम् । **कूटेनैकेनेति** । शुद्धखण्डाभ्यां विनेत्यर्थः । तद्धीमित्यनुकरणम् । तदात्मकश्छण्डणोऽन्ते यस्येति स तथोक्तः ॥ ९७५ ॥ ९७६ ॥

**विद्यावन्तः स्वसमये प्राहुर्मेलापनीमिमाम् ॥**
**वर्णानां टिरिकीत्येषामावृत्तिष्टीपिरुच्यते ॥ ९७७ ॥**

विद्यावन्तः केवलं लक्ष्यप्रयोक्तारः । तानेव लोके 'विद्यावंतेरु' इति कर्णाटा वदन्ति । **टिरिकीत्येषामावृत्तिरिति** । टिरिकि टिरिकि टिरिकि टिरिकि, इति टीपेः स्वरूपमुक्तम् ॥ ९७७ ॥

**यथा—थोंगटें गद्दग्नं थोंगटें । इति यावत्प्रबन्धपूर्ति(र्ति) पुनः पुनर्वादनीयम् । तद्धीमिति* । इति च्छण्डणः । इति मेलापकः ।**

थोंगटें गद्दग्नमित्यादिः प्रस्तारः । अयं केवलं मेलापकखण्डात्मकत्वादेकधातुकोऽवगन्तव्यः ॥

**इति मेलापकः ।**

---

* अत्रेतिपदमधिकमिति भाति नास्ति च क्वचित् ।

---

१ ग. घ. ताले । २ ख. °तनु इ° ।

अथोपशमं लक्षयति—

**खण्डं शुद्धादिभिः पाटैर्बद्धं वर्णसरेण वा ॥**
**अल्पं कोमलनादं च सुकुमाराक्षरान्वितम् ॥**
**अभ्यस्तं कोमले नृत्ते भवेदुपशमाभिधम् ॥ ९७८ ॥**

**खण्डं शुद्धादिभिरिति** । आदिशब्देन कूटा गृह्यन्ते । स्पष्टमन्यत् ॥ ९७८ ॥

**यथा—टेंथोंक्गे थोटेटे थोंहटगे थार्थे थोंटे । इत्युपशमः ।**

टेंथोंकट इत्यादिः प्रस्तारः । अयमप्येकधातुकः ।

**इत्युपशमः ।**

---

अथोद्ग्राहं लक्षयति—

**आदौ वाद्यप्रबन्धानां शुद्धकूटादिनिर्मितः ॥**
**यः खण्डो वाद्यते प्राहुरुद्ग्राहं तं महत्तमाः ॥ ९७९ ॥**

**आदावित्यादि** । शुद्धकूटादिनिर्मित इत्यादिशब्देन खण्डा गृह्यन्ते । महत्तमाः । अतिशयेन महान्त आचार्या इत्यर्थः ॥ ९७९ ॥

ननूद्ग्राहादीनां प्रबन्धावयवत्वेनोक्तानां कथं पृथक्प्रबन्धतेत्यत आह—

**उद्ग्राहोपशमादीनां यद्यप्यन्याङ्गतोदिता ॥**
**यावत्पूरणमावृत्तेस्तथाऽपि स्यात्प्रबन्धता ॥ ९८० ॥**

**उद्ग्राहोपशमादीनामित्यादि** । अत्राऽऽदिशब्देन मेलापकच्छण्डणादयो गृह्यन्ते । अन्याङ्गता प्रबन्धान्तराङ्गभावो यद्यप्युदिता—**तथाऽपि यावत्पूरणमिति** । यावतीभिरावृत्तिभिः प्रबन्धाकाङ्क्षाबुद्धिः पूर्यते तावदावृत्तेर्हेतोः प्रबन्धता स्यात् । अयमर्थः । उद्ग्राहाद्यवयवेषु यत्रैक एव प्रबन्धत्वेनोच्यते तत्रेतरावयवस्थाने तमेव प्रयुज्यावयवित्वेन प्रबन्धः पूरणीय इति । अत एवोद्ग्राहोपशमादीनां प्रबन्धानामेकधातुकत्वदोषोऽपि निवर्तनीयः । एकधातुकत्वे ह्यप्रबन्धत्वदोषः प्रसज्यते । प्रबन्धानामे(म)[ने]कावयवत्वनियमात् । एकधातुकस्य तु तदभावात् । तत्राऽऽवृत्तिकृतानेकत्वाङ्गीकारे तु न स दोष इति सर्वं समञ्जसम् ॥ ९८० ॥

यद्येवं प्रबन्ध[त्व]स्यान्याङ्गत्वस्य च को भेद इत्यत आह—

**द्विरावृत्तिरनावृत्तिर्वा स्यादङ्गतया स्थितौ ॥ ९८१ ॥**

**द्विरावृत्तिरित्यादि** । अङ्गतया स्थितौ द्विरावृत्तिर्द्विवारमावृत्तिः । अनावृत्तिः । सकृत्प्रयोगः । बहुधावृत्तौ प्रबन्धतैवेत्यर्थः ॥ ९८१ ॥

**तें टें है तट्टें तकतटे, इति यावत्प्रबन्धपूरणमभ्यासादुद्ग्राह(हः)-**

प्रबन्धः । अङ्गत्वं तु द्विः सकृद्वा । प्राक्प्रयोगस्त्वङ्गप्रबन्धयोस्तुल्यः । इत्युद्ग्राहः ।

---

तेंटेंहें तट्टेमिति प्रस्तारः । प्राक्प्रयोगस्त्वङ्गप्रबन्धयोस्तुल्य इति । उद्ग्राहस्यान्याङ्गत्वे पृथक्प्रबन्धे(न्ध) [ त्वे च ] प्राक्प्रयोगः समान एव । आवृत्तय एव भेदिका इत्यर्थः । अयमप्येकधातुः ।

इत्युद्ग्राहः ।

अथ प्रहरणं लक्षयति—

उद्धतं ध्वनितं कूटबद्धं खण्डं मुहुर्मुहुः ॥
प्रयुक्तं स्यात्प्रहरणं ध्रुवाद्याभोगगोचरे ॥
नृत्ते प्रायः प्रयोक्तव्यमन्यत्रापीच्छया भवेत् ॥ ९८२ ॥

उद्धतमित्यादि । ध्वनित(तं) घोषयुक्तम् । कूटबद्धं कूटैरेव बद्धं मुहुर्मुहुः प्रयुक्तं खण्डं प्रहरणं स्यात् । ध्रुवाद्याभोगगोचरे प्रायः प्रयोक्तव्यमिति । अयमर्थः । ध्रुवादिभिः समस्तावयवैः परिमितं यावन्नृत्तं तावति नृत्ते खण्डस्य मुहुरावृत्त्या प्रायेण प्रयोज्यमिति । अन्यत्रापीति । खण्डनृत्ते चेत्यर्थः ॥ ९८२ ॥

यथा—कथोंगक्क थोंगत्थोंगटथोंगक्क थोग थोगथोक् कथोगक् थोंकट थोगक्थोकटं थोगक् । गड्दक्काधिक थोंगक् । टगें दंथोंह । दिङ्निकुकुधित्थो हधिकं धिटें इति पुनः पुनः प्रयोज्यम् । एकताल्यामिदमुदाहरणम् । इति प्रहरणम् ।

---

कथों गक्कथोमित्यादिः प्रस्तारः । इदमप्येकधातुकम् ।

इति प्रहरणम् ।

---

अथावत्सकं लक्षयति—

उद्ग्राहः स्यात्ततः खण्डं शुद्धकूटादिनिर्मितम् ॥ ९८३ ॥
तद्वर्णसरबद्धं वा प्रयुज्य द्विरिदं द्वयम् ॥
ततः प्राक्खण्डसहितं तादृक्कूटमयं दलम् ॥ ९८४ ॥
वाद्यते छण्डणोऽन्ते च यत्र सोऽवत्सको भवेत् ॥
प्रयोज्य नर्तने दीप्ते शार्ङ्गदेवेन कीर्तितः ॥ ९८५ ॥

उद्ग्राहः स्यादित्यादि । इदं द्वयमिति । उद्ग्राहं द्वितीयखण्डवद्द्विः(ण्डं च द्विः) प्रयुज्य ततोऽनन्तरं प्राक्खण्डसहितं द्वितीयखण्डसहितं कूटमयं कूटाक्षरप्रचुरं तादृग्द्वि-

---

१ च. 'दक्पाटम' ।

तीयखण्डसदृशं दलं तृतीयखण्डं यंच(त्र) वाद्यतेऽन्ते [च] च्छण्डणो वाद्यते सोऽवत्सको भवेत् ॥ ९८३ ॥ ९८४ ॥ ९८५ ॥

**यथा—गड्दग्दंदं गड्दक्थिक्कट तकधिक्कट तक्धिक्तक् । इत्युद्ग्राहः । खडि खडि खखनख खिदक् झेंखखनख खिदक्तदक धिकक-कगिणनग थोंगदिहिकि थोगदिहिकितक धिकथोंगटे गडक् । तकधिक थोंगटें । इति द्वितीयं खण्डम् । एतच्च सहोद्ग्राहेण पुनः पुनर्वादयेत् । झक झखिखिन्नखनखखित हूँ खखनखझें खन खरिख तुडि हिदिहि । कथोंगक् । इति तृतीयखण्डं पूर्वखण्डेन सह वादयेत् । तकधिक तक्करे घटथथोंगक्क थोंगकटें । इति च्छण्डणः । इदमुदाहरणं रङ्गविद्याधरताले ।**

**इत्यवत्सकः ।**

गड्दग्दंदमित्यादिः प्रस्तारः । अयं त्रिधातुकः ।

**इत्यवत्सकः ।**

---

अथ च्छण्डणं लक्षयति—

**कूटादिबद्धः खण्डः स्याच्छण्डणो वाद्यमोक्षकः ॥ ९८६ ॥**

**कूटादिबद्धः खण्ड इत्यादि ।** वाद्यमोक्षक इति । वाद्यस्य वाद्यप्रबन्धस्य मोक्ष-कोऽवसानकारकः । इदमन्याङ्गत्वे । पृथक्प्रबन्धत्वे तूद्ग्राहोक्तो न्यायो द्रष्टव्यः । अत्र द्वयोरप्यन्तप्रयोक्तव्यः समानः ॥ ९८६ ॥

**यथा—गड्दग् टेंदवर तकथों थोंहटें हतटहें धों२ तकथों तकथों धिकथों तत धिधि थों थों रघ टै टै थोः तथोटे । इति च्छण्डणः ।**

गड्दग्टेमित्यादिः प्रस्तारः । अयमप्येकधातुः ।

**इति च्छण्डणः ।**

---

अथ तुडुकां लक्षयति—

**शुद्धकूटादिभिर्बद्धः खण्डो वर्णसरेण वा ॥**
**अभ्यस्तः स्याद्द्रुते माने तुडुका दीप्तनर्तने ॥**
**द्रुताद्रुततरं मानमत्र लक्ष्येषु दृश्यते ॥ ९८७ ॥**

**शुद्धकूटादिभिरित्यादि ।** द्रुते माने दीप्तनर्तनेऽभ्यस्तखण्डस्तुडुका स्यात् । अथ (त्र) तुडुकायां—**लक्ष्येषु द्रुताद्रुततरं मानं दृश्यत इति** । देशीत्वेनानियमादिति भावः ॥ ९८७ ॥

---

१ छ. ज. °यथवा° । २ ख. तत्र ।

**यथा**—**टें दंदगि तथोंगटेंधिकतः रघटे हे कथोः टेंगेधिक तटथोंगः गण नगिः थोंगतक धिकथोंगटें। एकताल्यामिदमुदाहरणम्।**

टेंदंदंगितेत्यादिः प्रस्तारः। अस्मिन्पक्ष इयमेकधातुका।

अस्या एव मतान्तरेण लक्षणान्तरमाह—

**उद्ग्राहध्रुवकाभोगे यत्रान्यतमखण्डकम्॥ ९८८॥**
**वादनीयं परे प्राहुरन्ये तु तुडुकां जगुः॥**
**उद्ग्राहध्रुवकाभोगोद्ग्राहाणां वादनं क्रमात्॥ ९८९॥**

**इति तुडुका।**

**उद्ग्राहेत्यादि।** पर आचार्याः। अत्र तुडुकायामुद्ग्राहध्रुवकाभोगेष्वन्यतमं खण्डकं वादनीयं प्राहुः। तदेयं द्विधातुका। पुनरपि मतान्तरेण लक्षणान्तरमाह—**अन्ये त्विति।** अन्य आचार्यास्तूद्ग्राहध्रुवकाभोगाणां क्रमाद्वादनं तुडुकां जगुः। तदानीमियं त्रिधातुका भवति॥ ९८८॥ ९८९॥

**इति तुडुका।**

---

अथ मल्पं[1] लक्षयति—

**यत्र शुद्धादिभिर्बद्धः खण्डो वर्णसरेण वा॥**
**विशालः स्याद्द्रुतलयः पर्यन्ते तु विलम्बितः॥ ९९०॥**
**दीप्तैर्वर्णैः क्वचित्क्वापि कोमलैश्चारुगुम्फितः॥**
**यत्रासौ मल्पः प्रोक्तः प्रायिको दीप्तनर्तने॥ ९९१॥**

**यत्र शुद्धादिभिरित्यादि।** यत्र मल्पे शुद्धादिभिर्वर्णसरेण वा बद्धः खण्डः। **द्रुतलयः सन्विशालः स्यादिति।** खण्ड आदित आरभ्य भागत्रये द्रुतलयः प्रयोक्तव्य इत्यर्थः। **पर्यन्ते तु विलम्बित इति।** चतुर्थभागे विलम्बितलयः प्रयोक्तव्य इत्यर्थः॥ ९९०॥ ९९१॥

**यथा**—**गड्दक् तद्धित्थों हथोंहरे घटें गणनगतक धिकक थौं हटें हैं थोदगक्। तक तहधिक थोकथोहक थो३ हट्टै डिं खिखरखिखिखेरथटें हैं थोहगक्। दिहं कटदहं कटगड्द गथरिकटं२ थरिकटतक३ ततक धिधिक थोऽथोंदटें। इदमुदाहरणं मुद्रितमण्ठताले।**

गड्दग् तद्धिथों, इत्यादि प्रस्तारः। अस्मिन्पक्षेऽयमेकधातुकः।

---

[1] ख. °पं च ल°।

मतान्तरेण लक्षणान्तरमाह—

**यत्रोद्ग्राहः सकृद्द्विर्वा ध्रुवकोऽथ सकृद्भवेत् ॥**
**व्यापकाक्षरमिश्रैस्ताद्धिथोंटेंदेंभिरक्षरैः ॥**
**वद्धं निरन्तरयतिं प्राहुस्तं मलपं परे ॥ ९९२ ॥**

**इति मलपम् ।**

**यत्रोद्ग्राह इत्यादि । व्यापकाक्षरमिश्रैरिति ।** व्यापकाक्षराणि कादीनि[1] कूटाक्षराणि । तद्धिथों टें दें, इत्यक्षराणि मदलप्रतिनियतत्वेन शुद्धानि तैर्बद्धम् । निरन्तरयतिमविलम्बितविच्छेदं मलपं तं परे प्राहुः । अस्मिन्पक्षे द्विधातुकोऽयम् ॥ ९९२ ॥

इति मलपः ।

---

**सोदाहरणलक्ष्माणि बालबोधार्थमभ्यधाम् ॥**
**लक्ष्ममात्रमथो वक्ष्ये विस्तरत्रस्तमानसः ॥ ९९३ ॥**

अथ मलपाङ्गादीनां संक्षेपेण लक्षणमात्रमेव वक्तुमाह—**सोदाहरणेति** ॥९९३॥

तत्र मलपाङ्गं लक्षयति—

**मलपाङ्गं तु मलपेनाङ्गेन मलपेन च ॥**

**इति मलपाङ्गम् ।**

**मलपाङ्गं त्विति ।** अङ्गेन मलपेन । पुनरपि मलपेन चेत्यनेनाङ्गिना मलपेन चेति गम्यते । मलप एवाङ्गत्वेनाङ्गित्वेन [च] प्रयुज्यते चेन्मलपाङ्गं नाम प्रबन्धो भवतीत्यर्थः ।

इति मलपाङ्गम् ।

---

अथ मलपपाटः ।

**पाटैर्मलपपाटः स्याद्विषमैर्मलपोपमः ॥ ९९४ ॥**

**इति मलपपाटः ।**

विषमैः पाटैः[2] कृतो मलपोपमः मलपसदृशो मलपपाटः स्यात् ॥ ९९४ ॥

अथ च्छेदः—

**द्रुतैः करतलाघातैर्विकृतैर्यत्र वाद्यते ॥**
**वाद्यं विच्छिद्य विच्छिद्य च्छेदमिच्छन्ति तं बुधाः ॥ ९९५ ॥**

**विकृतैरिति ।** द्रुतस्यात्र प्रकृतत्वान्मध्यविलम्बिता विकृता उच्यन्ते ॥ ९९५ ॥

**इति च्छेदः ।**

---

१ ख. °नि षोडश कू° । २ च. °पमैः । इ° ।

ओतां कृत्वा द्विरुद्ग्राहः सकृद्वा व्यापकाक्षरैः ॥
सपाटैर्विहितो यत्र मान्ते रचितदेंकृतिः ॥
मध्ये लये छण्डणः स्याद्रूपकं तन्निरूपितम् ॥ ९९६ ॥

इतः परं रूपकादीनां लक्षणानि ग्रन्थत एव सुबोधानि ॥ ९९६ ॥

इति रूपकम् ।

निबद्धो वादितो गीतवाद्यसंधौ मतोऽन्तरः ॥ ९९७ ॥

इत्यन्तरः ।

अन्तरं वादयित्वा चेदनिबद्धस्य वादनम् ॥
क्रियतेऽन्तरपाटः स्यात्तदा निःशङ्कसंमतः ॥ ९९८ ॥

इत्यन्तरपाटः ।

समाश्लिष्टघनश्लक्ष्णपाटवर्णविनिर्मितः ॥
हस्तलाघवसंपन्नः खोजः संजल्पितो बुधैः ॥ ९९९ ॥

इति खोजः ।

कृत्वा खण्डं पाटबद्धं यतिवद्वादनं भवेत् ॥
एवमावृत्तिकरणादाहुः खण्डयतिं बुधाः ॥ १००० ॥

इति खण्डयतिः ।

खण्डच्छेदसमायोगात्खण्डच्छेदप्रबन्धयोः ॥
छेदैर्व्यक्तैः समायुक्तं खण्डच्छेदं परे जगुः ॥ १००१ ॥

इति खण्डच्छेदः ।

यस्यां विरतिरन्ते च तालस्य व्यापकाक्षरैः ॥
सपाटैर्बद्धखण्डा या साऽऽख्याताऽवयतिर्बुधैः ॥ १००२ ॥

इत्यवयतिः ।

पाटस्य खण्डनाद्वाद्ये खण्डपाटोऽभिधीयते ॥

इति खण्डपाटः ।

खण्डः स्यात्खण्डमध्येऽपि खण्डशो वादने सति ॥ १००३ ॥

इति खण्डकः ।

श्रोतोगताख्यया यत्या खण्डहुल्लोऽभिधीयते ॥

इति खण्डहुल्लः ।

गीतनृत्तसमो माने प्रबन्धः प्रोच्यते समः ॥ १००४ ॥

इति समः ।

॥९९७॥९९८॥९९९॥१०००॥१००१॥१००२॥१००३॥१००४॥

निष्पन्नः केवलैः पाटैः पाट इत्यभिधीयते ॥

इति पाटः ।

ध्रुवको भूरिवाद्येषु स्यादावृत्तोऽन्तरेऽन्तरे ॥ १००५ ॥

इति ध्रुवकः ।

अङ्गमङ्गीकृतं सान्द्रैरपाटैर्व्यापकाक्षरैः ॥

इत्यङ्गम् ।

द्विरुद्ग्राहो ध्रुवाभोग ध्रुवाख्यः(ख्याः) क्रमशस्ततः ॥
यत्राङ्गरूपकं प्राहु तत्तेजोन्वयदीपकम् ॥ १००६ ॥

इत्यङ्गरूपकम् ।

तालश्चतुःषष्टिकलो युग्मे मार्गे च दक्षिणे ॥

इति तालः ।

वितालस्त्वादिमध्यान्तविकृतस्ताल इष्यते ॥ १००७ ॥

इति वितालः ।

हस्तेन वितताङ्गुष्ठविरलाङ्गुलिना क्रमात् ॥
पताकेन हृतैर्जातैः पाटैः स्यात्खलकाभिधः ॥ १००८ ॥

इति खलकः ।

समुदायो निजैः पापैः समस्तातोद्यवादनात् ॥

इति समुदायः ।

पाटानां पृथगुक्तानां मिश्रणाज्जोडणी मता ॥ १००९ ॥

इति जोडणी ।

उडवः सलयात्ताला द्वितालाच्च लयोज्झितात् ॥

इत्युडवः ।

तलपाटस्तु मलपोन्मिश्रपाटप्रबन्धजः ॥ १०१० ॥

इति तलपाटः ।

निजैर्या तद्धिथोंटेभिर्व्यापकैरक्षरैस्तथा ॥ १०११ ॥
पाटैर्वा रचिता किंचिद्विलम्बितलयाश्रया ॥
देकारालंकृताद्यन्ता वदन्त्युट्टवणीममूम् ॥ १०१२ ॥

इत्युट्टवणी ।

॥ १००५ ॥ १००६ ॥ १००७ ॥ १००८ ॥ १००९ ॥ १०१० ॥ १०११ ॥
॥ १०१२ ॥

वाद्यैकदेशं वर्गान्तमयं वाद्यादिमध्ययोः ॥
वादयेल्लघुहस्तत्वाद्यं तमाख्याति तुण्डकम् ॥ १०१३ ॥
इति तुण्डकः ।
पाटैरेव यतिः सान्द्रैः प्राञ्जलैरङ्गपाटकः ॥
इत्यङ्गपाटकः ।
खण्डः स्यात्पृथगातोद्यवाद्यैः पैसारसंज्ञकः ॥ १०१४ ॥
इति पैसारः ।

॥ १०१३ ॥ १०१४ ॥

इति त्रिचत्वारिंशद्वाद्यप्रबन्धाः ।

---

प्रदर्शनार्थमित्युक्ताः प्रबन्धाः कतिचिन्मया ॥
अन्यानपि पथाऽनेन विदांकुर्वन्तु तद्विदः ॥ १०१५ ॥

उक्तरीत्याऽन्येऽपि प्रबन्धाः कल्पयितुं शक्या इत्याह—**प्रदर्शनार्थमित्यादि** ॥ ॥ १०१५ ॥

पटहोक्तान्हस्तपाटादीन्यथायोगं मर्दलादिष्वतिदिशति—

पाटभेदाश्च वाद्यानि प्रबन्धा वाद्यसंश्रयाः ॥
यथायोगं मर्दलादिसर्ववाद्येष्विमे मताः ॥ १०१६ ॥
इति वाद्यप्रबन्धलक्षणम् ।

**पाटभेदाश्चेत्यादि** । पाटभेदा नागबन्धादयोऽष्टाशीतिर्हस्तपाटाः । वाद्यानि वोल्लावणीप्रभृतीनि पञ्चविंशतिः । वाद्यसंश्रयाः प्रबन्धा यत्यादयस्त्रिचत्वारिंशत् ॥ १०१६ ॥

इति वाद्यप्रबन्धलक्षणम् ।

---

अथ मर्दलं लक्षयति—

निर्दोषबीजवृक्षोत्थः पिण्डेऽर्धाङ्गुलसंमितः ॥
एकविंशत्यङ्गुलः स्याद्दैर्घ्ये वामे मुखे पुनः ॥ १०१७ ॥

**निर्दोषेत्यादि** । स्पष्टोऽर्थः ॥ १०१७ ॥

चतुर्दशाङ्गुलानि स्युर्दक्षिणे तु त्रयोदश ॥
मानं यस्य मनाङ्मध्यः(ध्य?) पृथुरेकाङ्गुलाधिके ॥ १०१८ ॥
वक्त्राभ्यां चर्मणी वृत्ते घने ये प्रान्तयोस्तयोः ॥
चत्वारिंशत्पृथग्रन्ध्राण्यङ्गुलान्तरवन्ति च ॥ १०१९ ॥

॥ १०१८ ॥ १०१९ ॥

---

१ ख. °याः पञ्च प्र° ।

वध्रे[1] तद्रन्ध्रविन्यस्ते सीवनप्रक्रियावति ॥
प्रोतोर्ध्वाधःस्थिता दृष्टोदरपृष्ठा च विग्निका ॥ १०२० ॥
क्रियते वेष्ट्यते मध्ये त्रिभिर्वन्धैर्दृढं तथा ॥
कार्यो गोमूत्रिकाबन्धस्तत्र वध्रद्वयेन च ॥ १०२१ ॥
तथा यथा पिनद्धास्ये भवेतां चर्मणी दृढे ॥
कुण्डल्योः प्रान्तयोर्वामकुण्डल्यां संनिवेश्य च ॥ १०२२ ॥
कच्छां क्षिप्त्वा दक्षिणस्यां कृष्ट्वा द्विगुणतां नयेत् ॥
साश्चलद्वितयां पट्टमयीमष्टाङ्गुलायताम् ॥ १०२३ ॥
यद्वाऽन्यवस्त्रजां शोभानुगां न्यस्येत्कटीतटे ॥
निगदन्ति मृदङ्गं तं मर्दलं मुरजं तथा ॥ १०२४ ॥
प्रोक्तं मृदङ्गशब्देन मुनिना पुष्करत्रयम् ॥
अत्यन्ताव्यवहार्यत्वान्निःशङ्को न तनोति तत् ॥ १०२५ ॥
भूरिमिश्रेण भक्तेन चिक्कणेनातिमर्दनात् ॥
पिण्डिकां पूरिकाकारां वामवक्त्रे निवेशयेत् ॥ १०२६ ॥
वोहणाख्येन तेनाऽऽस्यं लिम्पेदल्पेन दक्षिणम् ॥
एवं जलधरध्वानगम्भीरो भवति ध्वनिः ॥ १०२७ ॥
निःशङ्केनात्र च प्रोक्ता देवता नन्दिकेश्वरः ॥
रक्तचन्दनजो यद्वा खादिरोऽन्यैरयं मतः ॥ १०२८ ॥
त्रिंशदङ्गुलदैर्घ्यश्च पिण्डे त्वङ्गुलसंमितः ॥
एतस्य वामं वदनं द्वादशाङ्गुलसंमितम् ॥ १०२९ ॥

॥ १०२० ॥ १०२१ ॥ १०२२ ॥ १०२३ ॥ १०२४ ॥ १०२५ ॥ १०२६ ॥ ॥ १०२७ ॥ १०२८ ॥ १०२९ ॥

दक्षिणं तु मितं सार्धैरेकादशभिरङ्गुलैः ॥
पाटाश्च तद्धिथोटेंहेंनंदेमित्यत्र कीर्तिताः ॥ १०३० ॥

पाटाश्च तद्धिथो टें हें नंदेमित्यत्र कीर्तिता इति । अत्र मर्दलस्य दक्षिणवक्त्रे तद्धिथों टेंहेंनंदें इति सप्त वर्णाश्च पाटाः कीर्तिताः ॥ १०३० ॥

तटह्वा दधलाश्चेति पाटानेन्यत्र मन्वते[2] ॥
इह स्युः पटहोक्ताश्च वर्णाः षोडश कादयः ॥ १०३१ ॥

तटल्हा दधलाश्चेति पाटानन्यत्र मन्वत इति । अन्यत्र मर्दलस्य वामवक्त्रे तट-

१ च. 'ध्रे सद्र' । २ च. 'नन्येऽत्र ।

हादधलाश्चेति षड्वर्णान्पाटानन्वते। इह स्युरिति। इह मर्दले पटहोक्ताः षोडश कादयो वर्णाश्च स्युः ॥ १०३१ ॥

**अधिकान्भञ्जमान्वर्णान्वर्णयन्त्यपरे त्विह ॥**
**तेषु तद्ध्यादयः सप्त केवलाः शुद्धसंज्ञकाः ॥ १०३२ ॥**

अपर आचार्यास्त्विह मर्दले भञ्जमान्वर्णानधिकान्वर्णयन्तीत्येवं मिलित्वा मर्दले द्वात्रिंशत्पाटा भवन्ति। अत्र केषांचिदेकरूपत्वेऽपि पृथक्प्रयत्नसाध्यत्वात्पृथग्वर्णत्वमवगन्तव्यम्। **तेष्वित्यादि**। तेषु द्वात्रिंशद्वर्णेषु तद्ध्यादयः सप्त तद्धितों टें हें नंदेमित्येते वर्णाः केवला वर्णान्तरैरमिश्राश्चेच्छुद्धसंज्ञका भवन्ति॥ १०३२ ॥

कूटानां वर्णानां स्वरूपं दर्शयति—

**सस्वरैरस्वरैर्युक्तैरयुक्तैर्वा कखादिभिः ॥**
**व्यापकाख्यैः षोडशभिर्मिश्रास्ते कूटसंज्ञकाः ॥**
**कूटमिश्रास्तु ते शुद्धा बुधैः खण्डाभिधा मताः ॥ १०३३ ॥**

**सस्वरैरित्यादि**। तैः शुद्धा एव सस्वरादयः शब्दाः पूर्वमेव व्याख्याताः। तादृग्भूतैर्व्यापकाख्यैः सकलवाद्यसाधारण्येन व्यापकसंज्ञैः कखादिभिः षोडशभिर्वर्णैर्मिश्रिताश्चेत्तदा कूटसंज्ञका भवन्ति। खण्डानां स्वरूपं दर्शयति—**कूटमिश्रास्त्विति**। ते शुद्धास्तद्ध्यादयः सप्त वर्णाः। अत्र तुश्चेदर्थे। कूटश्चेदित्यर्थः। तदा खण्डाभिधा मताः॥ १०३३ ॥

अथ श्लोकदृष्टान्तपूर्वकं वाद्यप्रबन्धनिर्माणप्रकारमाह—

**छन्दसा भूरिहृद्येन स्फूर्तिमूर्तिरुदारधीः ॥ १०३४ ॥**
**कविः कवयति श्लोकं श्रवणोत्सवदैः पदैः ॥**
**यथा तथा क्वचित्ताले व(लैर्व)र्णाल्लँ(र्णत्र)यमनोहरान् ॥१०३५॥**
**विधाय वादको वाद्यभवन्धान्वद्धु(न्धु)मर्हति ॥**
**इमं कवितकाराख्यं वादकं ब्रुवते जनाः ॥ १०३६ ॥**

## इति मर्दललक्षणम्।

**छन्दसेत्यादि**। **स्फूर्तिर्मूर्तिरिति**। स्फूर्तिः प्रतिभा सैव मूर्तिर्यस्येति स तथोक्तः। उदारधीरविकलबुद्धिः कविर्यथा श्रवणोत्सवदैः पदैः श्लोकं कवयति तथा तादृशो वादकः। क्वचित्तालैरित्यनेनान्यत्र तालेनापरत्र तालाभ्यां वा निबद्धान्वर्णत्रयमनोहरान्। वर्णानां शुद्धानां कूटानां खण्डानां च त्रयं वर्णत्रयम्। यथाशोभं ग्रथितैः शुद्धादिभिस्त्रिविधैर्वर्णैर्मनोहरान्विधाय वाद्यप्रबन्धान्बहून्ग्र(न्धुं ग्र)थितुमर्हति योग्यो भवति।

---

१ ख. °शद्वर्णान्तरैरमिश्राश्च शुद्धसंज्ञकाः पाटा। २ च. °श्राश्च ते।

जना भाण्डिकजनाः । इमं प्रबन्धनिबन्धारं वादकं कवितकाराख्यं कवितकार इत्याख्या यस्येति स तथोक्तस्तं ब्रुवते ॥ १०३४ ॥ १०३५ ॥ १०३६ ॥

इति मर्दललक्षणम् ।

---

चतुर्विधो मार्दलिको वादिको मुखरी तथा ॥
ततः प्रतिमुखर्याख्यस्तुर्यो गीतानुगो मतः ॥ १०३७ ॥

अथ मार्दलिकभेदानाह—चतुर्विध इत्यादि ॥ १०३७ ॥

वादिको वादकर्ता स्याद्वादः पक्षपरिग्रहः ॥
स्वपक्षसाधनं तद्वत्परपक्षस्य दूषणम् ॥ १०३८ ॥
येऽन्ये जल्पवितण्डाद्या वादभेदाः सलक्षणाः ॥
न तान्ब्रवीम्यहं ग्रन्थप्रपञ्चभयभङ्गुरः ॥
वादे च वादनं कार्यं प्रथमं त्राटनाभिधम् ॥ १०३९ ॥

जल्पवितण्डाद्या इति तर्कशास्त्रोक्तलक्षणा वादभेदा द्रष्टव्याः। त्राटनाभिधमिति। त्राटनमित्यभिधा यस्य तत्तथोक्तम् ॥ १०३८ ॥ १०३९ ॥

त्राटनस्य स्वरूपमाह—

मर्दले तालरहिते वोहणेन विना ध्वनिः ॥
यो देहडडगित्यादि कृतोऽसौ त्राटनं मतम् ॥ १०४० ॥

मर्दल इत्यादि । देहडडगित्यादिरीत्यनु(त्याद्यनु)करणे वर्णोच्चारणम् । आदिशब्देनान्येऽप्यनुकरणयोग्या वर्णा ग्राह्याः । एवं कृतोऽसौ देहडडगित्यादि ध्वनिस्त्राटनं मतमिति संबन्धः ॥ १०४० ॥

वोडवाडं घनरवं हस्तावत्यर्थमाचरेत् ॥
मुक्तशब्दात्मकं रेहदडादप्रमुखं ततः ॥
उधार(रं) स्थापनं पश्चाद्वादयेत्तदथोच्यते ॥ १०४१ ॥

वोडवाडमिति । हस्तावत्यर्थमिति वोडवाडप्रयोजनकथनेन हस्तजाड्यापनयनाय क्रियमाणं निरन्तराङ्गुष्ठकनिष्ठिकाहतिमद्धस्ताभ्यां वादनं वोडवाडमिति तत्स्वरूपमुन्नेयम् । ततोऽनन्तरं मुक्तशब्दात्मकं सानुरणनध्वनिरूपं रेहदडादप्रमुखमुधाराख्यं वाद्यं वादयेत् । पश्चादुधारानन्तरं स्थापनं वादयेत् । तदथोच्यत इति । अथानन्तरं तत्स्थापनमुच्यते स्वरूपकथनेन प्रकाश्यते ॥ १०४१ ॥

मुखयोर्बोहणं दत्त्वा वादयेद्वाममाननम् ॥
गड्दग्नेमिति वक्त्रं तु गड्दग्नामिति दक्षिणम् ॥ १०४२ ॥

---

१ ख. ग. 'डगीरित्यनुकरेण व'। २ ख. ग. 'डगीत्या'। ३ ख. 'मुखं पारा'। ज. 'मुखमुवारा'। ४ च. 'ड्ग्धोमि'। ५ च. 'दग्धामि'।

**मुखयोर्बोहणं दत्त्वेति** । भूतिमिश्रेण मर्दितेनौदनेन[1] पूरिकाकारां पिण्डिकां कृत्वा वामवक्त्रे निवेश्यालेपेन तेनौदनेन दक्षिणं वक्त्रं लिप्त्वेत्यर्थः । वाममाननं गड्दग्नेमित्यनुकरणं यथा [भवति] तथा वादयेत् । दक्षिणं वक्त्रं तु गड्दग्नामित्यनुकरणं यथा भवति तथा वादयेत् ॥ १०४२ ॥

**ततो मध्यलये ताले द्वितीये मुखयोर्द्वयोः ॥**
**कुर्यान्नादसमायोगमथोच्चोच्चं दलत्रयम् ॥ १०४३ ॥**

ततोऽनन्तरं मध्यलये द्वितीयाख्ये ताले द्वयोर्मुखयोर्वामदक्षिणयोर्नादसमायोगं नादयोरेकाकारयोर्भिन्नाकारत्वे वादिसंवादिरूपयोः समायोगं मेलनं कुर्यात् । अथानन्तरम् । **उच्चोच्चमिति** । दीर्घदीर्घं दलत्रयं खण्डत्रयं विलम्बिते मध्ये द्रुते च पृथग्वाद्यत इत्युत्तरेण संबन्धः ॥ १०४३ ॥

**पृथग्विलम्बिते मध्ये द्रुते चैव लये क्रमात् ॥**
**तथैकद्वित्रिथोंकाररचितं ग्रहमोक्षभाक् ॥ १०४४ ॥**

**पृथगिति** । प्रथमखण्डमादौ विलम्बिते लये ततो मध्यलये ततो द्रुतलये[2] । एवं प्रथमखण्डापेक्षया दीर्घं द्वितीयं खण्डं तदपेक्षया दीर्घं तृतीयं खण्डमपि लयत्रये योजयेदिति पृथक्शब्दार्थः । एतल्लयक्रमात्तथैकद्वित्रिथोंकाररचितं तत्तदेव खण्डत्रयं ग्रहमोक्षभाग्वाद्यते । अयमर्थः । प्रथमदलं विलम्बितलये ग्रहमोक्षयोरेकैकथोंकाररचितम् । मध्यलये ग्रहमोक्षयोर्द्विद्विथोंकाररचितम् । द्रुतलये ग्रहणमोक्षयोस्त्रित्रिथोंकाररचितं कृत्वा । तथा द्वितीयतृतीयदलयोरपि कुर्यादिति ॥ १०४४ ॥

**आलप्तिवच्च त्रिस्थानशुद्धं हस्तद्वयेन यत् ॥**
**मधुरं वाद्यते तज्ज्ञैः स्थापनं तदुदाहृतम् ॥ १०४५ ॥**

**आलप्तिवच्च त्रिस्थानशुद्धमिति** । आलप्तिर्यथा मन्द्रमध्यताराख्येषु स्थानेषु शुद्धाऽपस्वररहिता कर्तव्या भवति तथा मर्दलवाद्ये स्थापनमपि त्रिस्थानेषु विलम्बितमध्यद्रुतेषु शुद्धमसंकीर्णं कर्तव्यमित्यभिप्रायः । अथवाऽऽलापवत् । आलापो रागालापः । सोऽस्यास्तीति मत्वर्थे वतिः । अस्मिन्पक्षे त्रिस्थानशुद्धमिति मन्द्रादिष्वपस्वररहितमित्यर्थः । वादकः स्वयं रागालापयुक्तमुद्घट्टनं कुर्वंस्तदुपरञ्जकत्वेन मध्ये मध्ये मर्दलवादनं कुर्यादित्यर्थः । एवं हस्तद्वयेन यन्मधुरं वाद्यते तत्स्थापनमिति तज्ज्ञैर्वाद्यज्ञैरुदाहृतम् ॥ १०४५ ॥

**ततस्थोंकारबहुलग्रहमोक्षोऽन्तरो भवेत् ॥**
**चतुरस्रत्र्यस्रमिश्रखण्डेष्वेकेन केनचित् ॥ १०४६ ॥**

---

१ ख. °न ह्यदिका° । २ ख. °ये यथायो[गं] ।

तालेन टांकणीवादौ कर्तव्यौ तदनन्तरम् ॥
तयोरेकसरो जोडा चेति भेदद्वयं मतम् ॥ १०४७ ॥

ततः स्थापनानन्तरं थोंकारबहुलग्रहमोक्षः। थोंकारैर्बहुलैर्ग्रहमोक्षौ यस्येति स तथोक्तः। अन्तराख्यः खण्डः कर्तव्यो भवति। तदनन्तरमन्तरानन्तरं चतुरस्रत्र्यस्रमिश्रखण्डेषु मध्य एकतमेन केनचित्तालेन। टाकणीवादौ। टाकणी च वादश्चेति द्वंद्वः। तौ कर्तव्यौ भवतः। तयोष्टाकणीवादयोः प्रत्येकम्। **एकसरो जोडा चेति भेदद्वयं मतमिति**। एकसरटाकणी जोडाटाकणीति। एकसरवादो जोडावादश्चेत्यर्थः ॥ १०४६ ॥ ॥ १०४७ ॥

तत्र सामान्येन टाकणीं लक्षयति—

कृत्वा श्रमस्य वहनीं यस्तालेऽष्टकलादिके ॥
वाद्यखण्डस्तालकलाप्रस्तारानुगतः कृतः ॥
अखण्डितष्टाकिणी सैकसरत्वं सकृत्कृतेः ॥ १०४८ ॥

**कृत्वेति**। श्रमस्य वहनीं कृत्वाऽष्टकलादिके ताले। एककलचच्चत्पुटादावित्यर्थः। आदिशब्देन द्विकलचतुष्कलचच्चत्पुटादयो गृह्यन्ते। तत्रैकस्मिंस्ताले तालकलाप्रस्तारानुग[त] इति दक्षिणादिमार्गवशात्तालस्य यावन्मात्रा कला भवति तस्याः प्रस्तारमनुगतः कृतः। अखण्डितः सकलो वाद्यखण्डः सा टाकणीति संबन्धः। सा। **सकृत्कृतेरेकस्वरत्वमिति**। प्राप्नोतीति शेषः। अन्या(ना?)वृत्त्यैकसरटाकणी भवतीत्यर्थः ॥ १०४८ ॥

टाकण्यङ्गत्वेन प्रसक्तायाः श्रमवहन्या लक्षणमाह—

एकद्वित्रिचतुर्वारं शुद्धाभ्यसनतो भवेत् ॥
इह श्रमवहन्याख्यः प्रकारो वादने यथा ॥ १०४९ ॥

**एक द्वित्रीत्यादि। शुद्धाभ्यसनेति**। शुद्धानां तद्यादिसप्तवर्णानां मध्ये केषांचिदेकद्वित्रिचतुर्वारमावृत्तौ। ता प्रसा(स्ता)र्ये दर्शयितुमाह—**यथेति** ॥ १०४९ ॥

*तद्धितोटें ततधिधि थों थों टें टें तततधि धिधि थों थों थों टें टें टें। ततत्तत धि धि धि धि +थो थो थो थो टे टे टे टे।
इति श्रमवहनीं कृत्वैकसरटाकिणी यथा। तकधिकट। तकधिकट। धिकटतक तकधिकट तकतकधिकट धिकटकतधिकट।
इत्यष्टौ वाद्यखण्डस्य खण्डा अष्टासु कलासु। सैव द्विवारं जोडा।

* तधिथों इति पाठो दृश्यते क्वचित्। + एतदाद्यक्षराष्टकेऽनुस्वारो दृश्यते ख. पुस्तके।

१ च. टाकिणी॑। २ घ. ॑ष्टाकणी।

तद्धितोटेमित्यादि यावदष्टकलं श्रमवहन्याः प्रस्तारो द्रष्टव्यः । सैव द्विवारं कृता चेज्जोडाटाकणी ॥

अथ वादं लक्षयति—

**टाकणीवत्समस्तं प्राक्खण्डं कृत्वा ततः परम् ॥ १०५० ॥**
**खण्डं खण्डं द्विर्द्वि(द्वि)वारं वाद्यते वाद्यसंज्ञके[2] ॥**
**तत्रैकसरजोडात्वं टाकिणीवदुदाहृतम् ॥ १०५१ ॥**

**टाकणीवदित्यादि** । वादसंज्ञके प्राक्खण्डं स्वकीयं प्रथमं खण्डं टाकणीवट्टाकण्यामिव सकृदेकवारं कृत्वा । ततः परं खण्डं खण्डं द्विर्द्वि(द्वि)वारं वाद्यत इति संबन्धः । **तत्रैकसरजोडात्वमिति** । एकसरत्वं चैकसरजत्वम् । **टाकणीवदुदाहृतमिति** । उक्तलक्षणस्य वाद्यस्य सकृत्करणेनैकसरवादः । तस्यैव समुदायत्रयस्य द्विःकरणेन जोडावाद इत्यर्थः ॥ १०५० ॥ १०५१ ॥

**यथा—दंदं । टिरि । टिट्टिकड्द । कडदगझे२ । थरिकथरि । टगणगणधरि । गणगणधरि । दथरि गडदग । दथरिगडदग । दथरिगडदग । दथरि दथरितर्गड्द्क्थरिकटतत्तक् । इति षोडशकले ताले षोडशकलासु षोडशखण्डकं वाद्यं कृत्वा तान्षोडश खण्डान्द्विर्द्विः कुर्यात् ।**

दंदं टिरि, इत्याद्येकसरवादस्य प्रस्तारः । जोडावादे तमेव द्विः कुर्यात् ।

**इत्येकसरवादः ।**

---

सर्वानुगतं लक्षणैकदेशमाह—

**तकारेण च सर्वेषामेतेषां त्याग इष्यते ॥**
**कुर्यात्ततो दिगिदिगिं ताटवादादिकं तथा ॥ १०५२ ॥**

**तकारेणेति** । ततोऽनन्तरं दिगिदिगिं कुर्यात् । तथा दिगिदिगि(गे)रनन्तरं[3] ताटवादादिकं कुर्यात् । अत्राऽऽदिशब्देन ताण्डिकप्रसिद्धो वाद्यविशेषो द्रष्टव्यः ॥ १०५२ ॥

**वर्णा दिगिदिगीत्येते प्रोक्ता दिगिदिगे(गौ) बुधैः ॥**
**यः खण्डोऽतिद्रुते माने ताटवादः स कथ्यते ॥ १०५३ ॥**

दिगिदिगिताटवादयोः क्रमेण स्वरूपं दर्शयति—**वर्णा इत्यादि** ॥ १०५३ ॥

**अन्येऽपि वादविधयोऽभ्यूह्यन्तामध्वनाऽमुना ॥**
**इति वादप्रकाराणां सम्यक्त्वे विजयो भवेत् ॥ १०५४ ॥**

---

१ च. टाकिनीव° । २ च. °के । अत्रै° । ३ ख. °रं टाकवा° ।

अन्येऽपीति । पूर्वोक्ता वोल्लावण्यादयो देशीप्रसिद्धाश्च वाद्यविधयः । अमुनाऽध्वना वादोक्तमार्गेणाभ्यूह्यन्ताम् । निगमयति—इतीति । सम्यक्त्व उक्तप्रकारेण वादने विजयो भवेदिति फलं दर्शितम् ॥ १०५४ ॥

इति वाद(दि)कः ।

---

अथ मुखरिणं[1] लक्षयति—

कर्ता वाद्यप्रबन्धानां नृत्तशिक्षाविचक्षणः ॥
गीतवादननिष्णातः सुरेखोऽन्तर्मुखश्च यः ॥ १०५५ ॥
अर्धाङ्गमिव नर्तक्या वादयेद्रङ्गभूमिगः ॥
वादकैः प्रेक्षितमुखो वादनार्थं मुखर्यसौ ॥ १०५६ ॥

इति मुखरी ।

**कर्तेत्यादि** । वाद्यप्रबन्धानां यत्यादीनां कर्ता निर्माता । **नृत्तशिक्षाविचक्षण इति** । पात्राणां प्रथमं नटेनोपदिष्टस्य नृत्तस्य[2] तदसंनिधावप्यभ्यासकरणे दक्ष इत्यर्थः । **गीतवादननिष्णात इति** । मध्ये मध्ये नादानुकरणेन गीतं यथा रज्यते तथा वादने निपुण इत्यर्थः । **सुरेख इति** । वादसमये दृश्याङ्गसंनिवेशवानित्यर्थः । **अन्तर्मुख इति** । अवहितमना इत्यर्थः । **नर्तक्या अर्धाङ्गमिवेति** । करचरणाद्यङ्गं यथा नृत्त उपयुज्यते तथा मुखर्यपि नृत्तानुगुणै[3]र्लयप्रदानाऽङ्गवदुपयुज्यत इत्यर्धाङ्गमिवेत्युक्तम् । **वादनार्थं वादकैः प्रेक्षितमुख इति** । इतरेषां वादकानां वादनं मुखर्यधीनमित्यर्थः ॥ १०५५ ॥ १०५६ ॥

इति मुखरी ।

---

किंचिद्धीनो मुखरिणः प्रोक्तः प्रतिमुखर्यसौ ॥ १०५७ ॥

इति प्रतिमुखरी ।

शुद्धसालगगीतानां वर्णान्कठिनकोमलान् ॥
समांश्च विषमान्नादं मन्द्रं मध्यं च तारकम् ॥ १०५८ ॥
प्रौढं वा मधुरं सम्यगनुगच्छति वादनात् ॥
पूर्वभागे तथाऽऽभोगे जक्काप्रहरणे क्रमात् ॥ १०५९ ॥
कुर्याद्वैकल्पिके यद्वा समग्रं गीतमाश्रिते ॥
समुत्थिते वाऽऽनुलोम्याद्वैलोम्याद्वोभयेन वा ॥ १०६० ॥

---

१ ख. °णं दर्शय° । २ ख. °स्य नटसंनिधावभ्याक° । ३ ज. °णतानप्र° ।

निःसारो(रौ) सालगे गीते यस्तं गीतानुगं विदुः ॥
क्रमात्तकारथोंकारौ स कुर्याद्ग्रहमोक्षयोः ॥ १०६१ ॥

इति गीतानुगः ।

प्रतिमुखरी(रि)गीतानुगयोर्लक्षणं ग्रन्थत एव सुबोधम् । तत्र जक्केति यतिरुच्यते । यतिर्जक्केति सेत्युक्तत्वात् । ग्रहे तकारः । मोक्षे थोंकार इति क्रमो द्रष्टव्यः॥१०५७॥ ॥ १०५८ ॥ १०५९ ॥ १०६० ॥ १०६१ ॥

इति चतुर्विधमार्दलिकलक्षणम् ।

---

अथ मार्दलिकगुणानाह—

वर्णव्यक्तिः सुरेखत्वमनुयायप्रवीणता ॥[1]
मधुरोद्धतवाद्येषु विज्ञता हस्तलाघवम् ॥ १०६२ ॥
अवधानं श्रमजयो मुखवाद्येषु पाटवम् ॥
रक्तिरावर्जिकस्यानुवृत्तिर्बहुलता तथा ॥ १०६३ ॥

वर्णव्यक्तिरित्यादि । अनुयायप्रवीणता[2] । अनुयायो नामानुवृत्तिर्वाद्यानुकरण-मित्यर्थः । तत्र प्रवीणता ॥ १०६२ ॥ १०६३ ॥

तद्दोषानाह—

यतितालल्यज्ञत्वं गीतानुगमनं तथा ॥
गुणा मार्दलिकस्यैते दोषः स्यात्तद्विपर्ययः ॥ १०६४ ॥

इति मार्दलिकगुणदोषाः ।

तद्विपर्यय इति । तेषां गुणानां विपर्ययो वैपरीत्यं दोषः ॥ १०६४ ॥

इति मार्दलिकगुणदोषाः ।

---

अथ मार्दलिकवृन्दं लक्षयति—

तद्वृन्दं द्वित्रिचतुरैस्तज्ज्ञैर्मर्दलधारिभिः ॥
प्राधान्येन विधातव्यं तैर्मुखर्यनुवर्तनम् ॥ १०६५ ॥

तद्वृन्दमिति । तेषां मार्दलिकानां वृन्दं समाजः ॥ १०६५ ॥

या हस्तसंमिता दैर्घ्येऽष्टाविंशत्यङ्गुला पुनः ॥
परिधावङ्गुलमिता पिण्डे सप्ताङ्गुले मुखे ॥ १०६६ ॥

अथ हुडुक्कां लक्षयति—या हस्तसंमितेत्यादि ॥ १०६६ ॥

---

१ ग. °रेपत्व° । २ ग. च. °नुपायप्र° । घ. °नुयायिप्र° । ३ ख. ग. °यायिप्र° ।

मण्डल्यौ वक्त्रयोर्वल्लीमध्यावेकादशाङ्गुले ॥
सपादाङ्गुलकस्थौल्ये उद्दलीकृतबन्धने ॥ १०६७ ॥
वदनाभ्यां सह स्यातां कुर्याद्रन्ध्राणि पट्टयोः ॥
बद्धरज्जुनिवेशार्थं पुरोभागेऽर्गलात्रयम् ॥ १०६८ ॥
कलशाकलितप्रान्तं पश्चाद्भागेऽर्गलाद्वयम् ॥
बन्धसूत्रान्तरे मध्ये भवेदुदरपट्टिका ॥ १०६९ ॥
अङ्गुलत्रयविस्तारा श्लक्ष्णा हृदयहारिणी ॥
द्वात्रिंशत्तन्तुसंजातरज्ज्वा पक्षद्वयं दृढम् ॥ १०७० ॥
बद्ध्वा तत्रोत्कक्षकौ च विधाय स्कन्धपट्टिकाम् ॥
तयोर्द्विगुणतां न्यस्येदङ्गुलार्धार्धसंमितम् ॥ १०७१ ॥
छिद्रं यस्याश्चतुर्थांशे नादोद्बोधविधायकम् ॥
हुडुक्का सा बुधैः प्रोक्ता तस्याश्च स्कन्धपट्टिकाम् ॥ १०७२ ॥
न्यस्य स्कन्धे दक्षिणेन पाणिना वादनं भवेत् ॥
उदरे पट्टिका योक्ता तस्यां वामं निवेशयेत् ॥ १०७३ ॥
देवता मातरः सप्त शार्ङ्गदेवेन कीर्तिताः ॥
कुर्वीत पाटहान्वर्णानिह देंकारवर्जितान् ॥ १०७४ ॥

॥ १०६७ ॥ १०६८ ॥ १०६९ ॥ १०७० ॥ १०७१ ॥१०७२॥१०७३॥ ॥ १०७४ ॥

अत्रान्यैरधिकावुक्तौ[2] मझेंकारौ मनीषिभिः ॥
लक्ष्मज्ञास्त्वावजं प्राहुरिमां स्कन्धावजं तथा ॥ १०७५ ॥

इति हुडुक्कालक्षणम् ।

मझेंकाराविति । अत्र हुडुक्कायां मकारझेंकारौ पाटहेभ्यो वर्णेभ्योऽधिकावुक्तौ । पाटहैर्वर्णैः सह मकारझं(झें)कारौ प्रयोक्तव्यावित्यर्थः । इमां हुडुक्कां लक्ष्यज्ञा आवजं तथा स्कन्धावजं चैवं संज्ञाद्वयमपरमाहुः ॥ १०७५ ॥

इति हुडुक्कालक्षणम् ।

---

अथ करटां लक्षयति—

बीजवृक्षोद्भवा पिण्डेऽङ्गुलतुर्यांशसंमिता ॥
एकविंशत्यङ्गुला स्याद्दैर्घ्ये हस्तमिताऽथवा ॥ १०७६ ॥

---

१ च. 'ग्धारि' । २ घ. 'क्तौ मझका' ।

परिधौ दधते मानं या चत्वारिंशदङ्गुलम् ॥
चतुर्दशाङ्गुले वक्त्रे केषांचिद्द्वादशाङ्गुले ॥ १०७७ ॥
मण्डल्यौ लोहजे सूत्रवेष्टिते चर्मबन्धने ॥
परिधौ संमिते ते च द्वाचत्वारिंशताऽङ्गुलैः ॥ १०७८ ॥
तिस्रास्तिस्रस्तथा तन्त्रीर्मुखयोर्वलयद्वयम् ॥
दधते केवलं व्याप्तं चतुर्दशभिरन्वितम् ॥ १०७९ ॥
रन्ध्रैस्तेष्वेकान्तरेषु विम्रिकास्तावतीः क्षिपेत् ॥
द्वाभ्यां द्वाभ्यां विम्रिकाभ्यां बन्धो मत्स्याकृतिर्भवेत् ॥१०८०॥
यस्यास्तां करटामाहुः प्रान्तयोः प्रान्तबद्धया ॥
कच्छया स्कन्धदेशे तां कक्ष्यां वा वादने वहेत् ॥ १०८१ ॥

बीजवृक्षोद्भवेत्यादि ॥ १०७६ ॥ १०७७ ॥ १०७८ ॥ १०७९ ॥१०८०॥ ॥ १०८१ ॥

चर्चिका देवता चास्यां पाटास्तु करटेत्यमी ॥ १०८२ ॥
वादनं कुडुपाभ्यां तु शार्ङ्गदेवेन कीर्तितम् ॥
तिरिकितिरिकिरीति प्रायः पाटद्वयं मतम् ॥ १०८३ ॥

इति करटालक्षणम् ।

पाटास्तु करटेत्यमी । करटेति वर्णसमुदाय एकः । तिरिकितिरिकिरीति द्वितीयः । प्राय इति प्राचुर्येणेत्यर्थः । सामान्येन तु पटहादिकूटपाटा यथोचितं द्रष्टव्याः॥१०८२॥ ॥ १०८३ ॥

इति करटालक्षणम् ।

---

घनः श्लक्ष्णः सुपक्वश्च स्तोकवक्त्रो महोदरः ॥
पाणिभ्यां वाद्यते तज्ज्ञैश्चर्मनद्धाननो घटः ॥
कथिताः पाटवर्णा ये मर्दले ते घटे मताः ॥ १०८४ ॥

अथ घटघडसढवसढक्काकुडुक्काकुडुवारुञ्जाडमरुकडक्कामण्डिडक्काडक्कुलीसेल्लुकाडल्लरी-भाणत्रिवलीदुन्दुभिभेरीनिःसारणतम्बकीनां लक्षणानि ग्रन्थत एव सुबोधानि ॥१०८४॥

इति घटलक्षणम् ।

---

हुडुक्कयैव घडसो व्याख्यातः किंतु मण्डली ॥ १०८५ ॥
दक्षिणस्योद्दलीबद्धा वामा रज्ज्वा नियन्त्रिता ॥

---

१ च. 'स्ततस्तन्त्री' । २ च. 'योः प्रोतव' । ३ ख. 'णतुम्बुकी' ।

औदर्यां पट्टिकायां च वामोऽत्र न निवेश्यते ॥ १०८६ ॥
गोंकारवहुलं चामुं वादयेदिति तद्विदः ॥
अङ्गुष्ठमध्यमाङ्गुल्यौ मदनाक्ताग्रभागतः ॥ १०८७ ॥
दक्षिणेन करेणाऽऽस्ये घर्षणाद्गोंकृतिर्भवेत् ॥
घातोऽङ्गुलीभिर्वामस्य वामाङ्गुष्ठेन पीडनम् ॥ १०८८ ॥

इति घडसलक्षणम् ।

---

स्याद्धस्तदैर्घ्यः परिधौ सनवत्रिंशदङ्गुलः ॥
द्वादशाङ्गुलके वक्त्रे वल्लीवलयसंयुते ॥ १०८९ ॥
यो धत्ते सप्त सप्तापि रन्ध्राणि वलयद्वये ॥
तथा कवलयोस्ताभ्यां तुण्डे वलयसंयुते ॥ १०९० ॥
पिधाय गाढं वध्येते रन्ध्रविन्यस्तदोरकैः ॥
यस्यासौ ढवसः प्रोक्तः शार्ङ्गदेवेन सूरिणा ॥ १०९१ ॥
स्कन्धे निक्षिप्य कच्छान्तं वामहस्तेन वादयेत् ॥
वामास्ये दक्षिणस्थेन कुडुपेन तु दक्षिणे ॥
ढेंकारपाटवसते रूढोऽयं ढवसो जने ॥ १०९२ ॥

इति ढवसलक्षणम् ।

---

व्याख्याता ढवसेनैव ढक्का किंतु मुखद्वयम् ॥
त्रयोदशाङ्गुलं तस्या धृत्वा तां वामपाणिना ॥ १०९३ ॥
तज्ज्ञो दक्षिणहस्तस्थकोणघातेन वादयेत् ॥
ढेंकारः(?) पाटवर्णाः स्युर्निशङ्केनेति कीर्तितम् ॥ १०९४ ॥

इति ढक्कालक्षणम् ।

---

हुडुक्कैवार्गलाहीना कुडुक्का किंतु वादनम् ॥
अस्याः करेण कोणेन क्षेत्रपालस्तु देवता ॥ १०९५ ॥

इति कुडुक्कालक्षणम् ।

---

॥१०८५ ॥ १०८६ ॥ १०८७ ॥ १०८८ ॥ १०८९ ॥ १०९० ॥१०९१ ॥
॥ १०९२ ॥ १०९३ ॥ १०९४ ॥ १०९५ ॥

---

१ घ. °वर्णः स्यान्निःश° । ङ. °वर्णैश्च निः° ।

वीजदारुमयी सप्ताङ्गुलगर्भमुखद्वया ॥
एकविंशत्यङ्गुला च यस्या दैर्घ्ये समाकृतिः ॥ १०९६ ॥
संहताग्नित्रयाकारत्र्यङ्गुलस्थूलतायुते ॥
वृत्ते नवाङ्गुले गर्भे वलये वल्लिनिर्मिते ॥ १०९७ ॥
सप्तसप्तच्छिद्रयुते यस्याः स्यातां मुखद्वये ॥
कवलाभ्यां पिनह्येते मुखे च वलयान्विते ॥ १०९८ ॥
सरन्ध्रे कवले रन्ध्रन्यस्ततन्त्रीसुयन्त्रिते ॥
कुडुवा सा हुडुकोक्तवर्णार्त्केकारभूयसी ॥ १०९९ ॥
कोणाभ्यां मदनाक्ताभ्यां वाद्यते त्यक्तझंकृतिः ॥ ११०० ॥

इति कुडुवालक्षणम्।

---

अष्टादशाङ्गुला दैर्घ्ये दृढा रुञ्जा समाकृतिः ॥
एकादशाङ्गुले तस्या वदने कुण्डलीयुते ॥ ११०१ ॥
तद्वध्ये चर्मणा वामवक्त्रान्तःकुण्डलीद्वयम् ॥
तत्रैका वक्त्रमात्रा स्यादपरा चतुरङ्गुला ॥ ११०२ ॥
कुण्डल्योरन्तराले स्याज्जालिका स्नायुनिर्मिता ॥
सैकच्छिद्रं वामवक्त्रं सूत्रतत्त्वश्चनीयुतम् ॥ ११०३ ॥
पूर्ववद्विम्भिकाः कार्या वक्त्रयोः सप्त सप्त च ॥
पादोनहस्तमात्रां च नागपाशवतीं दृढाम् ॥ ११०४ ॥
कच्छां स्कन्धे निवेश्यास्या वादनं वेदितं बुधैः ॥
रुंकारजननाद्रुञ्जा सा भवेद्भृङ्गिदैवता ॥ ११०५ ॥
मतङ्गोक्तास्त्विमे वर्णाः कतदा वनमा रवौ ॥
उक्तास्त्वन्यैरिमे वर्णाः करगा धटनाः खहौ ॥
विम्भिका वाद्यशास्त्रेऽस्मिन्कर्कराः परिकीर्तिताः ॥ ११०६ ॥

इति रुञ्जालक्षणम्।

---

वितस्तिमात्रदैर्घ्यः स्यादष्टाङ्गुलमुखद्वयः ॥
योगस्य मण्डलीयुक्ते मुखे बद्धे च चर्मणा ॥ ११०७ ॥

॥१०९६ ॥ १०९७॥ १०९८ ॥ १३९९ ॥ ११०० ॥ ११०१ ॥११०२॥
११०२ ॥ ११०४॥ ११०५ ॥ ११०६ ॥ ११०७ ॥

---

१ घ. योयस्य । ङ. योजस्य ।

त्रिवलीवत्क्षाममध्यो निबद्धः सूत्रदोरकैः ॥
मध्ये च गाढतां नीते[1] रज्ज्वन्यौ(?) वादनाय च ॥ ११०८ ॥
भवेतां प्रान्तसंलेग्न[2]सम्यञ्चदनगोलकैः ॥
असौ डमरुको मध्ये धृत्वा हस्तद्वयेन च ॥ ११०९ ॥
डयवर्णो वादनीयः प्रोक्तो निःशङ्कसूरिणा ॥
अन्यैः कखरटा वर्णाः प्रोक्ता डमरुकेऽधिकाः ॥ १११० ॥

इति डमरुकलक्षणम् ।

---

वितस्तिमात्रं दैर्घ्यं स्यान्मध्यः किंचित्कृशो भवेत् ॥
मुखे त्वष्टाङ्गुलैः पिण्डोऽर्धाङ्गुलस्तात्रिकाद्वयम् ॥ ११११ ॥
मुखे मुखे शङ्कवश्च चत्वारस्ताम्रनिर्मिताः ॥
तेषामधोऽधा(द्वा)वूर्ध्वे द्वौ तन्त्रीबन्धनसिद्धये ॥ १११२ ॥
तन्त्र्योस्तृणशलाकां च निदध्याद्ध्वनिपुष्टये ॥
अन्यल्लक्ष्म हुडुक्कावद्यस्याः पाटाक्षराण्यपि ॥ १११३ ॥
स्याद्दशाङ्गुलदैर्घ्येण कुडुपेन तु वादनम् ॥
निःशङ्कशार्ङ्गदेवेन डक्का सा परिकीर्तिता ॥ १११४ ॥
अन्येऽस्या वादनं प्राहुः करेण कुडुपेन च ॥
हस्तघातेन डंकारो वादने कुडुपेन तु ॥ १११५ ॥
घटस्ततो डगिश्चेति मुखान्पाटान्वदन्त्यमी ॥
नगौ खकरटा वर्णा मुख्याः प्रोक्ताः परैरिह ॥ १११६ ॥
अस्यां च सूरयः प्राहुर्देवतां विन्ध्यवासिनीम् ॥
अङ्गुलोना मध्यमा सा व्यङ्गुलोना कनीयसी ॥ १११७ ॥

इति डक्कालक्षणम् ।

---

डक्कैव मण्डिडक्का स्यात्किं त्वस्याः षोडशाङ्गुलम् ॥
दैर्घ्यमष्टाङ्गुलौ गर्भौ स्यातां वदनयोर्द्वयोः ॥ १११८ ॥
षोडशाङ्गुलको मध्यपरिधिर्नात्र चार्गला ॥
न च कच्छोत्कक्षकस्तु मध्ये स्यादञ्चनीद्वयम् ॥ १११९ ॥

॥ ११०८ ॥ ११०९ ॥ १११० ॥ ११११ ॥ १११२ ॥ १११३ ॥ १११४ ॥
॥ १११५ ॥ १११६ ॥ १११७ ॥ १११८ ॥ १११९ ॥

---

१ ख. नीतौ खान्यौ । घ. नीतौ खां न्यौ । ङ. नीतिरंतन्यौ । २ च. 'ल्मं स' ।

उत्कर्षं चाश्वनीद्वंद्वं वामाङ्गुष्ठाङ्गुलित्रयात् ॥
धृत्वा संपीड्य तर्जन्या मण्डलीमान्तमाननम् ॥ ११२० ॥
अस्या दक्षिणजानुस्थं हन्याद्दक्षिणपाणिना ॥
उत्कर्षं मणिवन्धोर्ध्वं यद्वाऽन्यस्याश्वनीद्वयम् ॥ ११२१ ॥
कनिष्ठानामिकाङ्गुष्ठैः संयुज्याऽऽपीड्य मण्डलीम् ॥
तर्जन्या मध्यया वाऽथ हस्तेनान्येन वादयेत् ॥ ११२२ ॥
वदन्ति वादनं तस्याः करेण कुड्डपेन वा ॥
चर्यागाने च पूजायां शक्तेः सा विनियुज्यते ॥ ११२३ ॥

इति मण्डिडक्कालक्षणम् ।

---

कांस्याद्वोशृङ्गतो दन्तिदन्ताद्वा डक्कुली भवेत् ॥
दैर्घ्ये पञ्चाङ्गुला वक्त्रे तस्याश्च चतुरङ्गुले ॥ ११२४ ॥
मेषपायु[1]द्दलीवद्धे स्वस्वचक्रसमन्विते ॥
चक्रे च कांस्यजे ताम्रमये वा लोहजे पृथक् ॥ ११२५ ॥
पञ्चरन्ध्रे तथोद्दल्यौ रन्ध्रविन्यस्तदोरकैः ॥
सौत्रैर्गाढं निवध्येते मध्ये सूत्रेण वेष्टितम् ॥ ११२६ ॥
नातिश्लथं नातिगाढं मध्यं सूत्रे त्वनामिकाम् ॥
निधाय मध्यतर्जन्यौ विवृते चक्रसंयुते ॥ ११२७ ॥
कृत्वाऽङ्गुष्ठं त्वन्य[2]चक्रे न्यस्याथ मदनाञ्चिताम् ॥
विधायाश्वनिकामेकां तां दुंदुमिति वादयेत् ॥ ११२८ ॥
तुंतुमित्यपरे प्राहुः पाटा मर्दलसंभवाः ॥
यथासंभवमेतस्यां शार्ङ्गदेवेन कीर्तिताः ॥ ११२९ ॥

इति डक्कुलीलक्षणम् ।

---

षड्विंशत्यङ्गुला दैर्घ्ये परिधौ त्रिंशदङ्गुला ॥
समकाया सेल्लुका स्याद्वीजकाष्ठेन निर्मिता ॥ ११३० ॥
दशाङ्गुले मुखे तस्याः परैस्त्वेकादशाङ्गुले ॥
उक्ते न वन्धनोद्दल्यौ ताभ्यामेकाङ्गुलाधिके ॥ ११३१ ॥

॥ ११२० ॥ ११२१ ॥ ११२२ ॥ ११२३ ॥ ११२४ ॥ ११२५ ॥ ११२६ ॥
॥ ११२७ ॥ ११२८ ॥ ११२९ ॥ ११३० ॥ ११३१ ॥

---

१ च, 'पायूद्द' । २ च. 'न्यवक्त्रे न्य' ।

वल्लीजं तर्जनीस्थौल्यं मुखयोर्वलयद्वयम् ॥
सरन्ध्रषट्कं रन्ध्रस्थरज्जुभिर्गाढयन्त्रितम् ॥ ११३२ ॥
एकाङ्गुलाधिकं तच्च वक्त्राभ्यां वदनं पुनः ॥
तन्त्रिकागर्भितं वामं वामहस्तेन वादयेत् ॥ ११३३ ॥
मुखं दक्षिणपाणिस्थकुडुपेन तु दक्षिणम् ॥
मुखे वामे तु झेंकारो धिंकारो दक्षिणे मुखे ॥ ११३४ ॥

इति सेल्लुकालक्षणम् ।

---

पलैः स्यात्पञ्चविंशत्या दैर्घ्ये तु द्वादशाङ्गुला ॥ ११३५ ॥
अष्टादशाङ्गुलमिता परिधौ समविग्रहा ॥
ससूत्रकटकं रन्ध्रद्वयं कण्ठे च बिभ्रती ॥ ११३६ ॥
चर्मणाऽऽनद्धवदना झल्लरी परिकीर्तिता ॥
वामहस्तधृता सा च वाद्या दक्षिणपाणिना ॥ ११३७ ॥

इति झल्लरीलक्षणम् ।

---

स्यात्तदर्धपलो भाणः परिधौ द्वादशाङ्गुलः ॥
अन्यत्तु झल्लरीलक्ष्म तस्य श्रीशार्ङ्गिणोदितम् ॥ ११३८ ॥

इति भाणलक्षणम् ।

---

सप्ताङ्गुलमुखद्वंद्वा त्रिवली हस्तदैर्घ्यभाक् ॥
मुष्टिग्राह्यश्च मध्योऽस्या वदने कवलावृते ॥ ११३९ ॥
कवले लोहमण्डल्यौ सप्तरन्ध्रे पृथक्पृथक् ॥
रन्ध्रन्यस्तैर्गुणैर्बद्धो[1] मध्ये गाढं च वेष्टनम्[2] ॥ ११४० ॥
सूत्ररज्ज्वा हस्तमात्रा कच्छा स्कन्धावलम्बिनी ॥
वादनं करयुग्मेण शार्ङ्गदेवेन कीर्तितम् ॥ ११४१ ॥
तदांदोंदेति वर्णाः स्युस्त्रिपुरा चात्र देवता ॥
एकादशाङ्गुलमुखी विंशत्यङ्गुलदैर्घ्यभाक् ॥ ११४२ ॥

॥ ११३२ ॥ ११३३ ॥ ११३४ ॥ ११३५ ॥ ११३६ ॥ ११३७॥११३८॥
॥ ११३९ ॥ ११४० ॥ ११४१ ॥ ११४२ ॥

---

१ ख. ङ. °र्बद्धैर्मध्ये । २ ङ. वेष्टितम् । च. वेष्टना ।

मुखार्धमानमध्याऽसौ मध्ये चाश्वनिकायुता ॥
तदर्धवर्णसंयुक्ता त्रिकुल्या चोच्यते बुधैः ॥ ११४३ ॥
इति त्रिवलीलक्षणम् ।

---

आम्रद्रुमसमुद्भूतो महागात्रो महाध्वनिः ॥
कांस्यभाजनसंभारगर्भो वलयवर्जितः ॥ ११४४ ॥
चर्मनद्धाननो वद्धो वध्रैर्गाढं समन्ततः ॥
दृढवर्णेन कोणेन वाद्यः प्राणेन दुन्दुभिः ॥ ११४५ ॥
मेघनिर्घोषगम्भीरघोंकारस्यात्र मुख्यता ॥
मङ्गले विजये चैव वाद्यते देवतालये ॥ ११४६ ॥
इति दुन्दुभिलक्षणम् ।

---

वितस्तित्रयदैर्घ्या स्याद्भेरी ताम्रेण निर्मिता ॥ ११४७ ॥
चतुर्विंशत्यङ्गुले च वदने वलयान्विते ॥
तस्याः सवलये चर्मच्छन्ने छिद्रसमन्विते ॥ ११४८ ॥
रज्ज्वा नियन्त्रिते गाढं मध्ये सूत्रेण वन्धनम् ॥
दक्षिणस्थेन कोणेन वामहस्तेन ताडनात् ॥ १४४९ ॥
उद्भटो भवति ध्वानो गम्भीरोऽरिभयंकरः ॥
तेंकारः पाटवर्णोऽस्यां मुख्यो निःशङ्ककीर्तितः ॥ ११५० ॥
इति भेरीलक्षणम् ।

---

कांस्यजस्ताम्रजो लौहो वोत्तमो मध्यमोऽधमः ॥
एकवक्त्रो महान्वक्त्रे स्वल्पोऽधोऽर्धयवाकृतिः ॥ ११५१ ॥
भृतगर्भः कांस्यपात्रभारैर्महिषचर्मणा ॥
छन्नाननो बद्धचर्मा तद्रन्ध्रन्यस्तवध्रकैः ॥ ११५२ ॥
क्षिप्तोऽधो वध्रवलये निवेश्याऽऽवर्तितैर्मुहुः ॥
द्विपद्वित्रासजननो निःसाणः शार्ङ्गिणोदितः ॥ ११५३ ॥

॥ ११४३ ॥ ११४४ ॥ ११४५ ॥ ११४६॥ ११४७ ॥ ११४८ ॥११४९॥
॥ ११५० ॥ ११५१ ॥ १२५२ ॥ ११५३ ॥

---

१ ग. घ. परैः । ख. ङ. २दृढचार्मेण को° । घ. दृढे वामेन को° । ३ ख. °रोऽतिभ° ।
४ ख. टकारः । ङ. त्रकारः । ५ ख. मृतगर्भः ।

चार्मणेनास्य कोणेन सद्वितीयस्य वादनम् ॥
ढंढशब्देन[1] भीरूणां भिनत्ति हृदयान्ययम् ॥
स्यादस्माद्युद्धवीराणां रोमाञ्चोपचितं वपुः ॥ ११५४ ॥

इति निःसाणलक्षणम् ।

---

निःसाणवत्तम्बकी स्यात्ततोऽल्पा गात्रनादयोः ॥ ११५५ ॥

इति तम्बकीलक्षणम् ।

---

॥ ११५४ ॥ ११५५ ॥

उक्तौ प्रकृतिदारूणामनुक्तौ वा विकल्पतः[2] ॥
ज्ञेयो दारववाद्यानां खदिरो रक्तचन्दनः ॥ ११५६ ॥

अथावनद्धवाद्यप्रकृतिभूतं दारुविशेषं तद्गुणांश्चाऽऽह—**उक्तावित्यादि । प्रकृतिदारूणामुक्ताविति** । यस्य(त्र) वाद्यस्य प्रकृतित्वेन यथानुक्तं य(दारूणामुक्तिर्य)था पटहादौ खदिरादि(देः) । **अनुक्तौ चे(वे)ति** । यथाभिधानं दारुविशेषाणामनभिधाने(नं) वा यथा कुडुक्कादीनाम् । तत्रोभयत्रापि दारववाद्यानां दारुणा निर्मितानां पटहादीनां वाद्यानां प्रकृतित्वेनेति शेषः । खदिरो रक्तचन्दनेन विकल्पितो ज्ञेयः । खदिरो वा रक्तचन्दनो वा कर्तव्य इत्यर्थः ॥ ११५६ ॥

सर्वेषु स्युर्यथायोगं पाटाः पाटहमार्दलाः ॥ ११५७ ॥

**सर्वेष्विति** । सर्वेषु तुडुक्कादिषु वाद्येषु । **पाटहमार्दलाः पाटा इति** । पाटहाः करवादयः षोडश । मार्दला अपि मतान्तरोक्तैः सह तद्ध्या[द]यः षोडश । **यथायोगं स्युरिति** । यैः पाटैर्यस्य वाद्यस्य स्फुटमनुकरणं भवति तत्र प्रयोज्या इत्यर्थः ॥ ११५७ ॥

नीरसोच्छ्रितभूजाताज्जीर्णाद्वाताहतात्तरोः ॥ ११५८ ॥
निर्भिद्योत्सारिते गर्भे शेषाद्वाद्यानि कारयेत् ॥
पूर्वप्ररोहे छिन्नेऽन्यो यः प्ररोहः प्ररोहति ॥ ११५९ ॥
तदुद्भवद्रुमोद्भूतं वाद्यं सर्वं प्रशस्यते ॥
गर्भस्योत्सारणं त्वेतद्वेणोरन्यत्र पादपे ॥ ११६० ॥
तरूणां जातयस्तिस्रः पित्तला वातला तथा ॥
श्लेष्मला चेति तत्र स्यात्पित्तला नीरसक्षितौ ॥ ११६१ ॥

॥ ११५८ ॥ ११५९ ॥ ११६० ॥ ११६१ ॥

---

१ ख. घ. घटशब्देन । २ घ. विकल्पितः ।

अत्यल्परसभूजाता वातला श्लेष्मला पुनः ॥
जलाशयसमीपस्थरससंप्लुतभूमिजा ॥ ११६२ ॥
पित्तलाऽत्युत्तमा जातिर्वातला त्वधमा भवेत् ॥
श्लेष्मला वर्ज्यते शुष्के वृक्षेऽपि च्छेदनात्पुरा ॥ ११६३ ॥

॥ ११६२ ॥ ११६३ ॥

इति काष्ठलक्षणम् ।

---

कोमलत्वं व्रणग्रन्थिभेदान्दारुषु वर्जयेत् ॥ ११६४ ॥

दारुदोषानाह—कोमलेत्यादि ॥ ११६४ ॥

इति काष्ठदोषाः ।

---

षाण्मासिकस्य वत्सस्य चर्म स्यात्पुटबन्धने ॥
अन्ये द्विवत्सरस्याऽऽहुस्तन्न लक्ष्येषु दृश्यते ॥ ११६५ ॥
वृद्धस्य वृषभस्यास्य चर्मणा वध्रकल्पना ॥
कुन्देन्दुहिमसंकाशमाम्रपल्लवसंनिभम् ॥ ११६६ ॥
स्नायुर्मांसविहीनं च चर्म गोसंभवं च यत् ॥
शीतोदके निशामेकां वासयित्वा समुद्धृतम् ॥
वाद्यावनहनार्थं तद्ग्राह्यं श्रीशार्ङ्गिणोदितम् ॥ ११६७ ॥

चर्मणो गुणानाह—षाण्मासिकस्येत्यादि ॥ ११६५ ॥ ११६६ ॥ ११६७ ॥

इति चर्मगुणाः ।

---

मेदोदुष्टं जराक्रान्तं क्लिन्नं काकमुखाहतम् ॥
अग्निधूमहतं जीर्णं न वाद्ये चर्म कर्मकृत् ॥ ११६८ ॥

चर्मदोषानाह—मेदोदुष्टमित्यादि ॥ ११६८ ॥

इति चर्मदोषाः ।

गुणैर्भूरितरोदारैर्यस्य नद्धं जगत्त्रयम् ॥
अवनद्धमिदं तेन शार्ङ्गिदेवेन कीर्तितम् ॥ ११६९ ॥

अथावनद्धवाद्यप्रकरणं निगमयितुमाह—गुणैरित्यादि ॥ ११६२ ॥

इत्यवनद्धवाद्यप्रकरणम् ।

---

१ ख. चूर्ण ।

## अथ घनवाद्यम् ।

कांस्यजे घनवाद्ये स्यात्कांस्यमग्नौ सुशोधितम् ॥ ११७० ॥

अथ घनवाद्यं लक्षयितुमाह—अथेति । कांस्यजमिति घनवाद्यस्य सामान्यलक्षणम् । तच्च कांस्यमग्नौ सुशोधितं ग्राह्यमिति शेषः ॥ ११७० ॥

कांस्यजो वर्तुलस्तालः सपादत्र्यङ्गुलाननः ॥
मध्येऽस्याङ्गुलविस्तारो निम्नो रन्ध्रं च निम्नगम् ॥ ११७१ ॥

तत्र तालं लक्षयति—कांस्यज इत्यादि ॥ ११७१ ॥

पादोनगुञ्जामात्रं स्यात्पिण्डस्तु यवमात्रकः ॥
सार्धाङ्गुलः स्यादुत्सेधः समा श्लक्ष्णशुभाऽऽकृतिः ॥ ११७२ ॥
कार्या तथा यथा नादो भवेच्छ्रुतिमनोहरः ॥
नेत्रवस्त्रांञ्चलाग्राणि रज्जूकृत्य निवे[1]शयेत् ॥ ११७३ ॥
रन्ध्रेऽग्राणामनिर्गत्यै ग्रन्थिं च रचयेद्दृढम् ॥
ईदृक्तालयुगं कृत्वा तालमेकमथाञ्चलैः ॥ ११७४ ॥
आवेष्ट्य तर्जनीं वामामङ्गुष्ठेन च वेष्टनम् ॥
आक्रम्य तलम[2]ध्येस्थं धृत्वा तिर्यङ्[3]मुखीकृतम् ॥ ११७५ ॥
शेषाङ्गुलीः प्रसार्योर्ध्वादक्षिणेन तु पाणिना ॥
तालमन्यतरस्यान्तलम्बमानाचलावलिम् ॥ ११७६ ॥
तर्जन्यङ्गुष्ठयोरग्रभागतस्तिर्यगाननम् ॥
धृत्वा तस्याग्रभागेण मध्यमन्यस्य ताडयेत् ॥ ११७७ ॥
अल्पनादो भवेच्छक्तिर्भूरिनादः शिवो भवेत् ॥
[4]शिवे स्निग्धे घनो नादः शक्तौ स्यात्तद्विपर्ययः ॥ ११७८ ॥
वामेन धारयेच्छक्तिं शिवं दक्षिणपाणिना ॥
अश्वमेधफलं चैव प्राप्नुयाद्दोषमन्यथा ॥ ११७९ ॥

॥ ११७२ ॥ ११७३ ॥ ११७४ ॥ ११७५ ॥ ११७६॥११७७॥११७८॥ ॥ ११७९ ॥

देवता तुम्बरुर्युग्मे शक्तिः शक्तौ शिवे शिवः ॥
द्रुतादिसिद्ध्यै त[5]न्नादधृतिरूर्ध्वाङ्गुलीकृता[6] ॥ ११८० ॥

---

१ ख. घ. 'वेश्य च । र' । २ ङ. च. 'ध्यस्थे धृ' । ३ घ. 'ङ्मुखाकृती । शे' । ४ घ. शिरे स्नि' । ५ घ. तत्तादृग्धृति' । ६ च. 'ता । अल्पेनेत्यु'।

कल्पनेत्युच्यते कार्यमस्य स्यात्तालधारणम् ॥
निःशङ्कशार्ङ्गदेवेन पाटाः सर्वेऽत्र कीर्तिताः ॥ ११८१ ॥

इति काललक्षणम्।

द्रुतादीत्यादि। द्रुतादिसिद्ध्यै। अत्राऽऽदिशब्देन लघ्वादयो गृह्यन्ते द्रुतादिमितकालप्रदर्शनायेत्यर्थः। ऊर्ध्वाङ्गुलीकृता। हस्तद्वये तर्जन्यङ्गुष्ठाभ्यां तालद्वयस्य धृतत्वात्तदतिरिक्ताङ्गुल्य ऊर्ध्वीकृतास्ता ऊर्ध्वाङ्गुल्यस्ताभिः कृता। तन्नादधृतिः। तयोस्तालयोर्नादस्यानुकरणेनाकारेण दीर्घस्य दीर्घस्य निरोधेनावसानकरणं ह्रस्वीकरणमित्यर्थः। कल्पनेत्युच्यत इति। लक्ष्यप्रधानैस्तालधारिभिरिति शेषः। कार्यमस्य स्यात्तालधारणमिति। अस्य तालधारिणस्तालधारणमुक्तप्रकारेण तालयोर्धारणं तथा तन्नादधारणं च कार्यं स्यात्कर्तव्यं भवति। अत्र ताले सर्वपाटाः कीर्तिता इति। तालस्य तूर्यत्रयमितिहेतुत्वादिति भावः ॥ ११८० ॥ ११८१ ॥

इति काललक्षणम्।

---

नलिनीदलसंकाशौ कांस्यतालौ समाकृती ॥
त्रयोदशाङ्गुलौ वक्त्रे कांस्यजे अङ्गुलौ तले ॥ ११८२ ॥

अथ कांस्यतालादीनां लक्षणानि ग्रन्थत एव सुबोधानि। तत्र कम्रिकापट्टवाद्ययोर्दारवत्वे कांस्यजत्वेऽपि मूर्तिरूपत्वाद्घनवाद्यत्वमेवेत्यवसेयम् ॥ ११८२ ॥

मध्येऽङ्गुलमितौ निम्नौ तयोरन्यत्तु तालवत् ॥११८३॥
पाटा झनकटा मुख्याः सन्ति पाटान्तराण्यपि ॥
नारदो देवता चात्रेत्युक्तं सोढलसूनुना ॥ ११८४ ॥

इति कांस्यताललक्षणम्।

---

अर्धाङ्गुलमिता पिण्डे घण्टा कांस्यमयी भवेत् ॥
उच्छ्रायेऽष्टाङ्गुला वक्त्रे विशाला मूलतोऽल्पिका ॥ ११८५ ॥
सा च प्रासादसंबद्धा शलाकाकारधारिणी ॥
मूले दण्डं त्रिशृङ्गाग्रं दधती मूलसंयुता ॥ ११८६ ॥
षडङ्गुलायतं सार्धाङ्गुलपिण्डं च लम्बितम् ॥
लोहजं लालकं गर्भे दधानां तामधोमुखीम् ॥ ११८७ ॥
दण्डे धृत्वा टणत्कारबहुलं वादयेत्सुधीः ॥
सा सर्वदेवता तज्ज्ञैर्वाद्यते देवतार्चने ॥ ११८८ ॥

इति घण्टालक्षणम्।

---

१ ख. °रणानाका°। २ ख. °र्धः। अलवेने°।

तैक्ष्णगोलकगर्भाः स्युः कांस्योद्भवपुटद्वयाः ॥ ११८९ ॥
सुघनाः सूक्ष्मजातीयबदरीबीजसंमिताः ॥
शिरःसुषिरविन्यस्तरज्जवः क्षुद्रघण्टिकाः ॥ ११९० ॥
ताश्च घर्घरिका लोके भाष्यन्ते घर्घरास्तथा ॥
ताभिर्घर्घरभेदानां कृतिः[1] पेराणि नर्तने ॥ ११९१ ॥

इति क्षुद्रघण्टिकालक्षणम् ।

---

कांस्यजा हस्तमात्रा स्यात्पिण्डे त्वर्धाङ्गुला घना ॥ ११९२ ॥
जयघण्टा समा श्लक्ष्णा वृत्ता प्रान्ते द्विरन्ध्रभाक् ॥
धृत्वा तद्रन्ध्रविन्यस्तरज्जौ तां वामपाणिना ॥ ११९३ ॥
दक्षिणो दक्षिणस्थेन दृढकोणेन वादयेत् ॥
डेंकारबहुलाः पाटाः सर्वेऽस्याः शार्ङ्गिणोदिताः ॥ ११९३ ॥

इति जयघण्टालक्षणम् ।

---

खादिरं घनवेणूत्थं यद्वा कम्राचतुष्टयम् ॥ ११९४ ॥
श्लक्ष्णत्र्यङ्गुलविस्तारं द्वादशाङ्गुलदैर्घ्यकम् ॥
मध्ये पिण्डो यथाशोभं किंचिन्न्यूनस्ततोऽन्तयोः ॥ ११९५ ॥
यस्य तत्कम्रिकावाद्यं तत्र द्वे द्वे तु कम्रिके ॥
एकैकहस्तन्यस्ते ये तयोरेकैककम्रिकाम् ॥ ११९६ ॥
मध्यमाङ्गुष्ठयोर्मूले धृत्वा प्रान्ते तयोः पुनः ॥
अपरामपरां धृत्वा शिथिलां वादयेद्धिया ॥ ११९७ ॥
कम्पेन मणिबन्धस्य कम्रिकावादनं मतम् ॥
पाटाः किटकिटा[2]मुख्यास्तत्र पाटान्तराण्यपि ॥ ११९८ ॥
कम्राणामन्तरं कृत्वाऽनामया दक्षिणस्थया ॥
तलघाताङ्गुष्ठघृष्टी वामस्येत्यपरे जगुः ॥ ११९९ ॥

इति कम्रालक्षणम् ।

॥ ११८३ ॥ ॥ ११८४ ॥ ११८५ ॥ ११८६ ॥ ११८७ ॥ ११८८ ॥
॥ ११८९ ॥ ११९० ॥ ११९१ ॥ ११९२ ॥ ११९३ ॥ ११९४ ॥ ११९५ ॥
॥ ११९६ ॥ ११९७ ॥ ११९८ ॥ ११९९ ॥

---

१ ख. 'तिः पारणन' । ङ. 'तिः पेरेणिन' । २ घ. किरिकि' ।

सर्पाकृतिरथो निम्ना कांस्यजा लोहजाऽथवा ॥
शुक्तिस्त्र्यङ्गुलविस्तारा सार्धहस्तद्वया मता ॥ १२०० ॥
तिर्यग्रेखाराजिता च मृगशृङ्गोपमेन सा ॥
ऋजुणा(ना) लोहकोणेन सरोषेण[1] विघर्षणात् ॥ १२०१ ॥
वाद्यते किरिकिट्टेति पाठा यक्षास्तु देवताः ॥
यतिमात्रावबोधेऽत्रेत्युक्तं निःशङ्कसूरिणा ॥
किरिकिट्टकमित्युक्तं तल्लोके रुद्रवल्लभम् ॥ १२०२ ॥

इति शुक्तिवाद्यम् ।

---

श्रीपर्णीदारुजः पट्टश्चतुरस्रायतो भवेत् ॥१२०३ ॥
द्वात्रिंशदङ्गुलो दैर्घ्येऽन्यैरुक्तास्त्रिंशदङ्गुलः ॥
विस्तारे हस्तमात्रः स्यादूर्ध्वाधःस्थितयोर्द्वयोः ॥ १२०४ ॥
लोहमय्योः सरिकयोस्त्रिवृद्रज्जूपमायुजोः[2] ॥
क्षिप्ताभिस्तादृशक्षुद्रवलयावलिभिर्युतः ॥ १२०५ ॥
वक्षोग्रे जानुनोर्मध्ये यद्वा संधार्य वाद्यते ॥
अयं च करशाखाग्रै रालालिप्तो विघृष्यते ॥ १२०६ ॥
करवौ थडरटाः पाटाः पाटहाश्चेह संमताः ॥
सप्तात्र देवमुनयो देवताः शार्ङ्गिणोदिताः ॥ १२०७ ॥

॥ १२०० ॥ १२०१ ॥ १२०२ ॥१२०३॥ १२०४॥१२०५ ॥ १२०६ ॥ ॥ १२०७ ॥

इति पट्टवाद्यम् ।

---

सन्त्यन्यान्यपि वाद्यानि लोके भूयांसि यानि च ॥
तेषु विस्तारसंत्रासादुदास्ते सोढलात्मजः ॥ १२०८ ॥

अन्यान्यपि वाद्यानि लोकानुसारतो द्रष्टव्यानीत्याह—सन्तीत्यादि ॥ १२०८ ॥

इति घनवाद्यलक्षणम् ।

रक्तं विरक्तं मधुरं समं शुद्धं कलं घनम् ॥
स्फुटप्रहारं सुलभं[3] विघुष्टं च गुणैरिति ॥ १२०९ ॥
दशभिः संयुतं वाद्यमुक्तं सोढलसूनुना ॥
अन्वर्थान्यत्र नामानि समं त्वष्टविधं मतम् ॥ १२१० ॥

अथ वाद्यगुणानाह—रक्तमित्यादि ॥ १२०९ ॥ १२१० ॥

---

१ ख. सरेखेन । २ च. 'पथायु' । ३ ख. सुभटं । घ. सुभरं ।

अक्षराद्यङ्गपूर्वं च तालादि यतिपूर्वकम् ॥
लयादि न्यासापन्यासपूर्वैः(र्वे) पाणिसमं तथा ॥ १२११ ॥
स्यादक्षरसमं गीतगुरुलघ्वक्षरानुगम् ॥
गीतस्य ग्रहमोक्षादीन्यङ्गान्यत्रेति यत्पुनः ॥ १२१२ ॥
स्यात्तदङ्गसमं तालानुगं तालसमं मतम् ॥
यति(ते)र्लयस्य न्यासः(स) स्यात्स(प) न्यासस्य च साम्यतः ॥
यत्यादिपूर्वकं ज्ञेयं क्रमात्समचतुष्टयम् ॥ १२१३ ॥

तत्र समस्याष्टौ भेदान्दर्शयति—अक्षरादीत्यादि ॥ १२११ ॥ १२१२ ॥ ॥ १२१३ ॥

गीतग्रहैः पाणिसंज्ञैः समं पाणिसमं मतम् ॥
वाद्यस्यैते गुणाः प्रोक्ता दोषः स्यात्तद्विपर्ययः ॥ १२१४ ॥

गीतग्रहैः समातीतागतैः । पाणिसंज्ञैरिति । क्रमात्समपाण्यवपाण्युपरिपाणिसंज्ञकैः ॥ १२१४ ॥

इति वाद्यगुणदोषाः ।

---

हस्तकोणप्रहारज्ञो गीतवादनकोविदः ॥
यतिताललयाभिज्ञः पाटज्ञः पञ्चसञ्चवित् ॥ १२१५ ॥
दशहस्तगुणोपेतः पात्राभिप्रेतवादकः ॥
आतोद्यध्वनितत्त्वज्ञः समादिग्रहवेदिता ॥ १२१६ ॥
गीतवादननृत्यस्थच्छिद्रच्छादनपण्डितः ॥
ग्रहमोक्षप्रदेशज्ञो गीतनृत्तप्रमाणवित् ॥ १२१७ ॥

अथ वादकगुणानाह—हस्तकोणप्रहार इत्यादि ॥ १२१५ ॥ १२१६ ॥ ॥ १२१७ ॥

वाद्ये समस्तभेदज्ञो रूपरेखान्वितस्तथा ॥
उद्घट्टनपटुः सर्ववाद्यभेदविवेचकः ॥ १२१८ ॥
नादवृद्धिक्षयापत्तिकोविदो वादको विदः(वरः) ॥
गुणैः कतिपयैर्हीनः सर्वैर्वा वादकोऽधमः ॥ १२१९ ॥

उद्घट्टनपटुरिति । उद्घट्टनं नाम पाटाक्षरोच्चारणम् । उद्घटनेति भाण्डिका व्यवहरन्ति । उक्तगुणयुक्तो वादको वरः । कतिपयैर्गुणैर्हीनो मध्यः । सर्वैर्गुणैर्हीनोऽधमः स्मृतः ॥ १२१८ ॥ १२१९ ॥

इति वादकगुणदोषाः ।

---

वांञ्छानुगौ दृढौ व्यक्तौ स्निग्धौ दृढनखौ लघू ॥ १२२० ॥
विधायाङ्गुलिसंचारौ स्वेदहीनौ जितश्रमौ ॥
युक्तप्रहारौ च करौ प्रोक्तौ दशगुणाविति ॥ १२२१ ॥

वादकस्य करयोर्गुणानाह—वाञ्छानुगावित्यादि ॥ १२२० ॥ १२२१ ॥

इति हस्तगुणाः ।

इति श्रीमदनवद्यविद्याविनोदश्रीकरणाधिपतिश्रीसोढलदेव-
नन्दननिःशङ्कश्रीशार्ङ्गदेवविरचिते संगीतरत्नाकरे
वाद्याध्यायः षष्ठः समाप्तः ॥ ६ ॥

अनवद्यगुणः कल्लिनाथो वाद्यविभागवित् ।
वाद्याध्यायस्य विवृतिमकरोन्निजविद्यया ॥ १ ॥

इति श्रीमदभिनवभरताचार्यरायवयकारतोडरमल्लश्रीलक्ष्मणाचार्य-
नन्दनचतुरकल्लिनाथविरचिते संगीतरत्नाकरकलानिधौ
षष्ठोऽध्यायः ॥ ६ ॥

---

## अथ सप्तमो नर्तनाध्यायः ।

---

अथ गीतवाद्योपकार्यत्वेनाभेदातिशयोपायभूतं नर्तनं प्रतिपिपादयिषुः शार्ङ्गदेवः प्रकरणादौ तत्परिसमाप्त्याकाङ्क्षया समुचितेष्टदेवतां नर्तनस्पष्टगुणत्वेन स्तौति—

*आङ्गिकं[2] भुवनं यस्य वाचिकं सर्ववाङ्मयम् ॥
आहार्यं चन्द्रतारादि तं नुमः सात्त्विकं शिवम् ॥ १ ॥

**आङ्गिकमित्यादि।** भुवनं परिदृश्यमानप्राणिलोकं यस्य शिवस्याऽऽङ्गिकमङ्गव्यापारो भवति। शिवस्य जगद्रूपत्वादिति भावः। सर्ववाङ्मयं वेदशास्त्रादि समस्तं शब्दजातं यस्य वाचिकं वाग्व्यापारो भवति। चन्द्रतारादि चन्द्रादिज्योतिषां मण्डलं यस्याऽऽहार्यं हारकेयूरादिविभूषणं भवति। सात्त्विकं सत्त्वगुणप्रधानम्। अत्र शिवशब्देन कूटस्थस्य परशिवस्य विवक्षितत्वात्सात्त्विकं तस्याविरुद्धं तं शिवं नुम इति संबन्धः। अत्राऽऽङ्गिकादिशिवगुणवाचके श्लिष्टशब्दे प्रकरणप्रतिपाद्यस्य नर्तनस्याभिधानमपि द्रष्टव्यम् ॥ १ ॥

---

* ङ. पुस्तकेऽत्र—"स्वविलासैरिदं विश्वं यो नर्तयति संततम्। समीरमूर्तिं तं वन्दे गिरिराजसुताप्रियम्" इति श्लोकोऽधिको वर्तते।

---

१ च. वाद्यानु॰। २ ख. ग. ॰र्यं सर्वता॰।

एवमिष्टदेवतां स्तुत्वा प्रकरणस्य विषयादीन्दर्शयति —

**शिवप्रसादसंप्राप्तनिःसीमज्ञानसंपदा ॥**
**तन्यते शार्ङ्गदेवेन नर्तनं तापकर्तनम् ॥ २ ॥**

**शिवप्रसादेत्यादि ।** शिवप्रसादसंपन्ननिःसीमज्ञानसंपदा शार्ङ्गदेवेन मया तापकर्तनं नर्तनं तन्यत इति संबन्धः । तत्र नर्तनं विषयः । तापकर्तनमित्यनेनाऽऽध्यात्मिकादितापत्रयच्छेदः प्रयोजनं दर्शितम् । तदर्थिन एवाधिकारिण आक्षिप्यन्ते । संबन्धस्तु तापत्रयच्छेदनर्तनयोः साध्यसाधनभावः । नर्तनस्य ग्रन्थस्य च प्रतिपाद्यप्रतिपादकभावः ॥ २ ॥

**नाट्यं नृत्यं तथा नृत्तं त्रेधा तदिति कीर्तितम् ॥ ३ ॥**

विषयत्वेनोद्दिष्टं नर्तनं विभजति—**नाट्यमित्यादिना ।** **तदिति ।** नर्तनम् ॥३॥

नाट्यादिभेदभिन्नस्य नर्तनस्येह गतिं दर्शयति—

**नाट्यवेदं[1] ददौ पूर्वं भरताय चतुर्मुखः ॥**
**ततश्च भरतः सार्धं गन्धर्वाप्सरसां गणैः ॥**
**नाट्यं नृत्यं तथा नृत्तमग्रे शंभोः प्रयुक्तवान् ॥ ४ ॥**
**प्रयोगमुद्धतं[3] स्मृत्वा स्वप्रयुक्तं ततो हरः ॥**
**तण्डुना स्वगणाग्रण्या भरताय न्यदीदिशत् ॥ ५ ॥**
**लास्यमस्याग्रतः प्रीत्या पार्वत्या समदीदिशत्[4] ॥**
**बुद्ध्वाऽथ[5] ताण्डवं तण्डोर्मर्त्येभ्यो मुनयोऽवदन् ॥ ६ ॥**
**पार्वती त्वनुशास्ति स्म लास्यं बाणात्मजामुषाम् ॥**
**तया द्वारवतीगोप्यस्ताभिः सौराष्ट्रयोषितः ॥ ७ ॥**
**ताभिस्तु शिक्षिता नार्यो नानाजनपदास्पदाः ॥**
**एवं परम्पराप्राप्तमेतल्लोके प्रतिष्ठितम् ॥ ८ ॥**

**नाट्यवेदमित्यारभ्य, एतल्लोके प्रतिष्ठितमित्यन्तेन । नाट्यवेदमिति ।** वेद्यतेऽनेन धर्माविति व्युत्पत्त्या, ऋगादिमुख्यवेदमूलत्वेन च चतुर्मुखेन(ण) दत्तस्य वेदत्वे सिद्धे तदर्थभूतनाट्यप्रतिपादकभरतमुनिप्रणीतस्य चतुर्विधपुरुषार्थफलस्य शास्त्रस्य वेदमूलत्वेन वैदिकत्वं वेदितव्यम् । अयमेवोपवेदेषु परिगणितश्च—"सामवेदस्योपवेदो गान्धर्ववेदः" इति । नाट्यवेद एव गीतप्राधान्यविवक्षया गान्धर्ववेद उच्यते । अभिनयप्राधान्यविवक्षया तु नाट्यवेद इत्युच्यते ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

**ऋग्यजुःसामवेदेभ्यो वेदाच्चाथर्वणः क्रमात् ॥**
**पाठ्यं चाभिनयान्गीतं रसान्संगृह्य पद्मभूः[6] ॥ ९ ॥**

---

१ च. शार्ङ्गदे° । २ घ. °ट्यमेतद्ददौ । ३ ख. ग. ट. °मुद्धृतं । ४ ख. घ. °दीदश° । ५ ख. ग. °ध्वा तु ता° । ६ घ. ङ. वेणाक्षः ।

तस्य च मुख्यवेदसारसंग्रहत्वं दर्शयितुमाह—**ऋग्यजुरित्यादि**। ऋग्वेदात्पाठ्यस्य संग्रहणं तस्य मन्त्ररूपत्वेन शब्दप्रधानत्वादिति मन्तव्यम् । पाठ्यं नाम वाचिकाभिनयः। पाटाक्षरोद्धटनं च यजुर्वेदादभिनयानां संग्रहणमपि तस्य नादात्मकत्वादिति मन्तव्यम् । अथर्वणाद्रसानां शृङ्गारादीनां संग्रहणमपि । तस्य मारणमोहनाद्यभिचारकर्मप्रतिपादकत्वेन रसप्रधानत्वादिति भावः । **इदं त्रयमिति**। नाट्यनृत्तनृत्यानीत्यर्थः । **धर्मकामार्थमोक्षदमिति** । यो यं यं पुरुषार्थमुद्दिश्य प्रयुङ्क्ते स स तस्य सिध्यतीत्यर्थः ॥ ९ ॥

नान्तरीयकतया कीर्त्यादयोऽपि रिष्टार्थाः सिध्यन्तीत्याह—

**व्यरीरचत्त्रयमिदं धर्मकामार्थमोक्षदम् ॥**
**कीर्तिप्रागल्भ्यसौभाग्यवैदग्ध्यानां प्रवर्धनम् ॥**
**औदार्यस्थैर्यधैर्याणां विलासस्य च कारणम् ॥ १० ॥**

**कीर्तिप्रागल्भ्येत्यादि**। प्रागल्भ्यं प्रौढता शास्त्रविषये। वैदग्ध्यं चतुरता लोकविषये। स्थैर्यं नाम प्रवृत्ताध्यवसायादचालनम् । धैर्यं तु शोकहर्षयोर्वृद्धेरेकरूपत्वम् ॥ १० ॥

नाट्यादिप्रयोगदर्शनेन दुःखाद्यनिष्टनिवृत्तिरपि भवतीत्याह—

**दुःखार्तिशोकनिर्वेदखेदविच्छेदैकारणम् ॥ ११ ॥**

**दुःखार्तीत्यादि** । दुःखं बाह्येन्द्रियपरितापः । आर्तिर्वाचिकः परितापः । शोको मनसः संतापः । निर्वेदः शून्यचित्तत्वम् । खेदः कायिकः संतापः । इति दुःखादीनां भेदा द्रष्टव्याः ॥ ११ ॥

पूर्वं नाट्यादेर्मोहसाधनत्वमुक्तमिदानीं तस्यैव मोहरूपतामर्थापत्त्या साधयति—

**अपि ब्रह्मपरानन्दादिदमभ्यधिकं ध्रुवम् ॥**
**जहार नारदादीनां चित्तानि कथमन्यथा ॥ १२ ॥**

**अपि ब्रह्मेत्यादि** । ब्रह्मविदामपि तेषां नारदादीनामत्राऽऽसक्त्यतिशयादिति भावः ॥ १२ ॥

**न किंचिद्दृश्यते लोके दृश्यं श्राव्यमतः परम् ॥ १३ ॥**

इदं न केवलं नारदादीनां मनो जहारापि तु सकललोकस्यापीत्यभिप्रायेणाऽऽह—**न किंचिद्दृश्यत इति** ॥ १३ ॥

ननु विषयासक्तमनसो लोकस्य मनोहरत्वेनास्य कथमुत्कर्ष इत्याशङ्क्यास्योत्कर्षत्वं(वत्त्वं) दर्शयितुं विषयनिवृत्तमनसाऽप्येतदनुसंधेयमित्याह—

**सर्वदा कृतकृत्येनाप्यक्लिष्टेष्टप्रदायके ॥**
**द्रष्टव्ये नाट्यनृत्ये ते पर्वकाले विशेषतः ॥ १४ ॥**

---

१ ख. ग. °न सद्ब्रह्मप्र° । २ ख. ग. प्रयुक्तं । ३ ज. °योऽपीष्टा° । ४ च. °ग्ध्यानन्दव° । ५ ङ. च. °दसाधनम् ।

**सर्वदेति** । कृतकृत्येन कृतमृणत्रयापाकरणादिकृत्यं येन स तथोक्तः( क्तस्तेन )। तस्यानन्तरमपि संसारप्रवर्तकधर्मसंचिचीषया कर्तव्यबुद्धेरभावः । कृतकृत्यशब्देन साधनचतुष्टयसंपन्नः समु(न्मु?)मुक्षुरुच्यते । अक्लिष्टेष्टप्रदायके इति हेतुगर्भितं विशेषणम् । अक्लिष्टमिष्टं मोक्षः । तस्य प्रदायके यतो नाट्यनृत्ते अतस्ते मुमुक्षुणाऽपि स[र्व]दा द्रष्टव्ये इति योजना । अयमभिप्रायः । नाट्यनृत्तयोरनुकरणात्मकत्वेनालीकत्वान्निदर्शनेन लोकस्य व्यवहारस्याप्यलीकत्वे भाव्यमाने सच्चिदानन्दस्वभावात्मविषयं ज्ञानं दृढं भवतीति । विषयसुखाभिलाषिणस्तु किमुतेत्यपिशब्दार्थः । सर्वदा दर्शनासंभवेऽपि पर्वकाले विशेषतो द्रष्टव्ये इत्याह—**पर्वकाल इति** । पर्वकाल उत्सवकालः ॥ १४ ॥

> **नृत्तं त्वत्र[3] नरेन्द्राणामभिषेके महोत्सवे ॥**
> **यात्रायां देवयात्रायां विवाहे प्रियसंगमे ॥ १५ ॥**
> **नगराणामगाराणां प्रवेशे पुत्रजन्मनि ॥**
> **ब्रह्मणोक्तं प्रयोक्तव्यं मङ्गल्यं[4] सर्वकर्मसु ॥ १६ ॥**

नाटयनृत्त(त्य)योः प्रयोगसमयमुक्त्वा नृत्तस्य प्रयोगसमयमाह—**नृत्तं त्विति** । ॥ १५ ॥ १६ ॥

नाट्यादीनां स्वरूपं वक्तुमाह—

> **नाट्यादित्रितयस्यातः प्रपञ्चमभिदध्महे ॥**
> **नाट्यशब्दो रसे मुख्यो रसाभिव्यक्तिकारणम् ॥ १७ ॥**
> **चतुर्धाभिनयोपेतं लक्षणावृत्तितो बुधैः ॥**
> **नर्तनं नाट्यमित्युक्तं स त्वत्राभिनयो भवेत् ॥ १८ ॥**
> **काव्यबद्धं[5] विभावादि व्यञ्जन्योऽर्थो(यन्यो) नटे स्थितः ॥**
> **सामाजिकानां जनयन्निर्विघ्नरससंविदम् ॥ १९ ॥**

**नाट्यादीति** । तत्र नाट्यशब्दस्य[6] लक्षकतां वक्तुं तस्य मुख्यार्थतां दर्शयति—**नाट्यशब्दो रसे मुख्य इति** । मुख्यो वाचक इत्यर्थः । तस्य लक्षा(क्ष्या)र्थं दर्शयति—**रसाभिव्यक्तीत्यादि** । मुख्यार्थस्य रसस्य नर्तनभेदत्वासंभवान्मुख्यार्थबाधे सति तस्य रसस्य व्यञ्जकत्वेन संबन्धिनश्चतुर्विधाभिनयोपेतस्य नर्तनै[7]विशेषस्य लक्ष्यार्थत्वात्तत्र च वर्तमानोऽयं नाट्यशब्दो लाक्षणिक इत्यर्थः । नाट्यविशेषणत्वेन प्रसक्तस्य चतुर्विधस्याभिनयस्य सामान्यं लक्षणमाह—**स त्वित्यादि** । स इति वक्ष्यमाणः परामृश्यते । **काव्यबद्धमिति** । अत्र काव्यशब्देन नाटकादीनि रूपकाण्यु-

---

१ ख. ग. °त्मके वि° । २ ख. ग. ज्ञानमिदं भ° । ३ ख. ग. ङ. तत्र । ४ ग. °ङ्गलं स° । ५ ख. ग. च. काव्याद्यर्थवि° । ६ ख. ग. °स्य फलक° । ७ ग. °नस्य वि° ।

च्यन्ते। तेषामेव नटाभिनेयार्थवत्त्वात्। तत्र नाटकादौ कविना निबद्धं विभावादि। आदिशब्देनानुभावसात्त्विकसंचारिस्थायिभावा गृह्यन्ते। विभावादि व्यञ्जयन्प्रकाशयन्सामाजिकानां प्रेक्षकाणां निर्विघ्नां निरन्तरायाम्। तत्र व्यवधानमेवान्तरायः। अव्यवहितामित्यर्थः। रससंविदमानन्दानुभूतिं जनयन्नटे स्थितो योऽर्थो विद्यते सोऽभिनयो भवेत्। तुशब्दोऽवधारणे स एवेति। न तु चेष्टामात्रमित्यर्थः॥ १७॥ १८॥ १९॥

**लक्षणादि(नि) विभावादेर्वक्ष्ये रसनिरूपणे॥ २०॥**

अत्राभिनयव्यङ्ग्यत्वेन प्रसक्तानां विभावादीनां लक्षणान्यध्यायान्तरे रसनिरूपणावसरे वक्ष्यन्त इत्याह—**लक्षणानीत्यादि**॥ २०॥

सामान्येन लक्षितस्याभिनयस्य विशेषानाह—

**आङ्गिको वाचिकस्तद्वदाहार्यः सात्त्विकोऽपरः॥**
**चतुर्धाऽभिनयस्तत्राऽऽङ्गिकोऽङ्गैर्दर्शितो मतः॥ २१॥**

**आङ्गिक इत्यादि**। बुद्धिविदितपदपदार्थैरनुकर्तृभिरङ्गैः करचरणादिभिः करणैर्दर्शित आङ्गिकः॥ २१॥

**वाचा विरचितः काव्यनाटकादि[1]स्तु वाचिकः॥**
**आहार्यो हारकेयूरकिरीटादिविभूषणम्॥ २२॥**

**काव्यनाटकादिस्त्विति**। तुशब्दोऽवधारणे स एवेति। न तु चेष्टामात्रमित्यर्थः। काव्यनाटकादिरेवेति न तु लोकव्यवहारार्थं शब्दमात्रमित्यर्थः। **हारकेयूरेत्यादि**। अनुकार्यगताभरणसजातीयत्वेनानुकर्त्रा धृतं हारादिविभूषणमाहार्याभिनयः। आदिशब्देन धनुराद्यायुधं पुरस्कृतं ध्वजयानादि च विभूषणत्वेन ग्राह्यम्। तस्यापि शोभाहेतुत्वेन विभूषणत्वात्। आहार्यस्याप्यनुकार्यज्ञापकत्वेनाभिनयत्वं द्रष्टव्यम्॥ २२॥

**सात्त्विकः सात्त्विकैर्भावैर्भावुकेन विभावितः॥ २३॥**

**सात्त्विकैर्भावैरिति**। स्तम्भादिभिरष्टभिर्वक्ष्यमाणैर्भावैः। भावुकेन भावनाव्यापारवता नटेन प्रेक्षकेण च। **विभावित इति**। स्तम्भादीनां सकलरसधारणत्वेन दुर्विवेचितत्वेऽपि तत्तद्र[2]सं प्रति नियतत्वेन सूक्ष्मेक्षि[3]कया संभावितः॥ २३॥

चतुर्विधस्याप्यभिनयस्य प्रथमं तावद्द्विविधामितिकर्तव्यतामाह—

**इतिकर्तव्यता तस्य द्विविधा परिकीर्तिता॥**
**लोकधर्मी नाट्यधर्मीत्येते च द्विविधे पुनः॥ २४॥**

**इतिकर्तव्यता तस्येत्यादि**। इतिकर्तव्यता प्रकारनियमः। **एते च पुनर्द्विविधे इति**। एते लोकधर्मीनाट्यधर्मी(र्म्यौ)॥ २४॥

---

१ क. 'दिपु वा'। २ ज. 'द्रसप्रति'। ३ ख. ग. 'क्षिकायां सं'।

**चित्तवृत्त्यर्पिका काचिद्बाह्यवस्त्वनुकारिणी ॥**
**इति भेदद्वयं प्राहुर्लोकधर्म्याः पुरातनाः ॥ २५ ॥**

चित्तवृत्त्यर्पिकेति लोकधर्म्या एको भेदो बाह्यवस्त्वनुकारिणीति द्वितीयः । उभे अप्यन्वर्थे वेदितव्ये । **चित्तवृत्त्यर्पिकेति** । चित्तवृत्ता(त्त्य)पकर्षेत(र्पक) स्यार्थस्य प्रदर्शकत्वेन प्रवृत्ता । यथा—"गर्वेऽप्यहमिति तज्ज्ञैर्ललाटदेशोत्थितः कार्यः" इति पताकहस्तविनियोगे मुनिनोक्तम् । तत्र चित्तवृत्त्यर्पितस्य गर्वस्य प्रदर्शनप्रकारश्चित्तवृत्त्यर्पिका । **बाह्यवस्त्वनुकारिणीति** । बहिःस्थितं पद्मादि वस्त्वनुकरोतीति । यथा पद्मकोशहस्तकमलादिनिरूपणे ॥ २५ ॥

नाट्यधर्म्या अपि भेदद्वयमाह—

**आश्रित्य कैशिकीं वृत्तिमेका नाट्योपयोगिनीम् ॥**
**तद्योग्यां लौकिकीं शोभां करोत्यावेष्टितादिभिः ॥ २६ ॥**
**अंशेनैवोपजीवन्ती लोकमन्या प्रवर्तते ॥**
**नाट्यधर्म्यामपि प्राज्ञा भेदद्वंद्वमिदं जगुः ॥ २७ ॥**

**आश्रित्येत्यादि** । तत्रैका नाट्योपयोगिनीं कैशिकीं वृत्तिमाश्रित्य तद्योग्यां लौकिकीं शोभां करोतीत्यन्वयः । **कैशिकीमिति** ।

"वागङ्गाभिनयानां या सौकुमार्येण निर्मिता ॥
उल्लसद्गीतनृत्ताढ्या शृङ्गाररसनिर्भरा ॥
निःशङ्कः कैशिकीं ब्रूते तां सौन्दर्यैकजीविताम् "

इति कैशिकीलक्षणं वक्ष्यति । अत एव नाट्योपयोगिनी । नाट्येऽवस्थानुकरण उपयोगोऽस्या अस्तीति तथोक्ता । पुरुषस्यापि लोके व्यवहारानुकरणदशायां मार्दवमपेक्ष्यत इति भावः । यथा लोके यः कश्चन पुरुषो यं कंचनाहितं पुरुषं लगुडादिना प्रहृतवांस्तत्साक्षिभूतोऽन्यस्तमनुकरोत्यनेनैवं प्रहृतमिति । तत्रानुकरणस्याऽऽरोपितत्वेनार्थक्रियाभावान्मृदुत्वमेव तस्य दृश्यते । अर्थतः सौकुमार्यात्मिका कैशिकी नान्योपयोगिनी भवति । तामाश्रित्य तद्योग्यां नाट्ययोग्यां लौकिकीं शोभां करोति । अन्यां नाट्यधर्मीमाह—**आवेष्टितादिभिरित्यादि** । आवेष्टितोद्वेष्टितव्यावर्तितपरिवर्तिताख्यैश्चतुर्भिर्वक्ष्यमाणैः करणैरुपलक्षिताऽन्यांऽशैकदेशेन लोकमुपजीवत्येवं(व) प्रवर्तते । लोकायत्तस्वभावेत्यर्थः ।

एवं "हस्तमन्तरितं कृत्वा त्रिपताकं प्रयोक्तृभिः ॥
जनान्तिकं प्रयोक्तव्यमपवारितकं तथा " ॥

इत्यादि मुनिना यदुक्तं तत्सर्वमपि यथायोगं नाट्यधर्मीद्वये द्रष्टव्यम् । एवमाङ्गि-

---

१ ग. सर्वस्य ।

काभिनये धर्मीणां चतुष्टयं दर्शितम् । वाचिकादावपि यथासंभवमूहनीयम् । वाचिकाभिनयेऽपि केवलवाक्योच्चारणं लोकधर्मी । रागयुक्तवाक्योच्चारणं नाट्यधर्मी । आहार्याभिनयेऽपि हारकेयूरादिभूषणं लोकधर्मी । फूत्कृतं ध्वजयानादिभूषणं नाट्यधर्मी । सात्त्विकाभिनयेऽपि नटेन भावयित्वा स्वरूपतो दर्शिताः स्तम्भादयो लोकधर्मी । त एव साक्षात्कृता हस्ताभिनयेन दर्शिता नाट्यधर्मी । चित्तवृत्त्यर्पिकादयोऽवान्तरभेदा अपि वाचिकादिषु यथासंभवं मतिमद्भिरुन्नेयाः ॥ २६ ॥ २७ ॥

अथ नृत्यं लक्षयति—

**आङ्गिकाभिनयैरेव भावानेव व्यनक्ति यत् ॥**
**तन्नृत्यं मार्गशब्देन प्रसिद्धं नृत्यवेदिनाम् ॥ २८ ॥**

**आङ्गिकाभिनयैरेवेत्यादि ।** यन्नर्तनमाङ्गिकाभिनयैरेव भावानेव व्यनक्ति तन्नृत्यमिति संबन्धः । अत्राऽऽङ्गिकाभिनयैरिति बहुवचनमाङ्गिकावान्तरभेदविवक्षा[1]भावादनुपपद्यमानमाङ्गिकादिभिरित्यवगमयति । तेनाऽऽङ्गिकादिषु चतुर्ष्वपि प्राप्तेषु बहुवचनस्य त्रित्वे पर्यवसानादे(त्रय ए)वेत्यवधारणे तत्रैको निवर्तनीयः । निवर्त्यान्तरस्याप्रतीतेः । तत्र वाचिकादिषु कस्य निवृत्तिरित्याकाङ्क्षायां यदि वाचिको निवर्त्येत तदाऽऽङ्गिकस्योपजीव्याभावादप्रवृत्तिरेव स्यात् । अतो यत्राऽऽङ्गिकस्तत्र वाचिकोऽभ्युपेयः । सात्त्विकाहार्ययोर्मध्ये सात्त्विकस्यैवाऽऽङ्गिकेऽन्तरङ्गत्वेनोपादेयत्वे पारिशेष्याद्बहिरङ्ग आहार्य एव निवर्तनीयो भवति । भावानेवेत्यवधारणेन रसास्तदाभासाश्च निवर्त्यन्ते । एतदुक्तं भवति । आहार्याभिनयं मुक्त्वाऽऽङ्गिकवाचिकसात्त्विकैरुपेतमतो भावानामेवाभिव्यञ्जकं यन्नर्तनं तन्नृत्यमिति । तथा चोक्तं **भावप्रकाशकृता—**

"वागङ्गशब्दाभिनया भावाः स्युर्नाट्यकर्मणि ।
रसोऽभिनेयो वागङ्गसत्त्वाहार्यसमुच्चयात्" इति ॥

**नृत्यवेदिनां मार्गशब्देन प्रसिद्धमिति ।** ते नृत्य(त्यं)मार्गशब्देन व्यपदिशन्तीत्यर्थः ॥ २८ ॥

अथ नृत्तं लक्षयति—

**गात्रविक्षेपमात्रं तु सर्वाभिनयवर्जितम् ॥**
**आङ्गिकोक्तप्रकारेण नृत्तं नृत्तविदो विदुः ॥ २९ ॥**

**गात्रविक्षेपमात्रं त्वित्यादि ।** सर्वाभिनयवर्जितमाङ्गिकादिचतुर्विधाभिनयवर्जितम् । **आङ्गिकोक्तप्रकारेणेति ।** आङ्गिकाभिनये[3]ऽङ्गप्रत्यङ्गोपाङ्गानां यः प्रकार उक्तः, तेन प्रकारेण गात्रवि[4]क्षेपमात्रं तु नृत्तविदो नृत्तं विदुः । तुशब्दो नृत्तस्य नाट्यनृत्याभ्यां वैलक्षण्यद्योतनाय ॥ २९ ॥

---

१ ख. ग. धर्माणां । २ ख. ग. °क्षायां भा° । ३ ख. ग. °येनाङ्ग° । ४ ख. ग. °क्षेपणत्वे तु ।

अथ नृत्यनृत्तयोरवान्तरभेदौ दर्शयति—

ताण्डवं लास्यमित्येतद्द्वयं द्वेधा निगद्यते ॥
वर्धमानासारिताद्यैर्गीतैस्तैस्तत्तद्ध्रुवायुतम् ॥ ३० ॥
करणैरङ्गहारैश्च प्राधान्येन प्रवर्तितम् ॥
तण्डूक्तमुद्धतप्रायप्रयोगं ताण्डवं मतम् ॥ ३१ ॥

**ताण्डवमित्यादि** । एतद्द्वयमेतयोः संनिहितयोर्नृत्यनृत्तयोर्द्वयम् । तत्र ताण्डवं लक्षयति—**वर्धमानेत्यादि** । वर्धमानादीनि गीतानि मद्रकादिपूक्तानि द्रष्टव्यानि । **तत्तद्ध्रुवायुतमिति** । सा सा ध्रुवा तत्तद्ध्रुवा प्रावेशिक्यादिका तया युक्तम् । प्रावेशिक्यादयो ध्रुवाश्च भारतीये ध्रुवाध्याये द्रष्टव्याः । करणैस्तलपुष्पपटादिभिर्वक्ष्यमाणैर्नृत्तकरणैः, अङ्गहारैः स्थिरहस्तादिभिश्च । **प्राधान्येनेति** । क्वचित्करणाङ्गहारक्रमं हित्वाऽपीत्यर्थः । उद्धतप्रायप्रयोगमिति ताण्डवस्यासाधारणं लक्षणम् । इतरस्य तु लक्षणांशस्य साधारण्यसंभवात् । तण्डूक्तमिति संज्ञाप्रवृत्तिनिमित्तकथनम् ॥ ३० ॥ ३१ ॥

लास्यं तु सुकुमाराङ्गं मकरध्वजवर्धनम् ॥ ३२ ॥

लास्यस्यासाधारणं लक्षणमाह—**लास्यं त्वित्यादि** ॥ ३२ ॥

प्रसङ्गान्नृत्तस्यैवान्यद्भेदत्रयं दर्शयति—

विषमं विकटं लघ्वित्यन्ये भेदत्रयं विदुः ॥
नृत्तस्य तत्र[2] विषमं स्याद्रज्जुभ्रमणादिकम् ॥ ३३ ॥
विरूपवेषावयवव्यापारं विकटं मतम् ॥
उपेतं करणैरल्पैर[3]ञ्चिताद्यैर्लघु स्मृतम् ॥ ३४ ॥

**विषममित्यादि** । **अल्पैरञ्चिताद्यैरिति** । क्रियावैचित्र्याभावादञ्चितादीनि नृत्यकरणान्यल्पानि भवन्ति ॥ ३३ ॥ ३४ ॥

अत्र नृत्तेपूपयोगित्वेनाऽऽङ्गिकाभिनयस्य स्वरूपं प्रपञ्चयिष्यन्नाटकाद्युपयोगित्वमात्रेण नृत्तानुपयोगिनां वाचिकादीनामप्रपञ्चने हेतुं दर्शयति—

नाटकस्थितवाक्यार्थपदार्थाभिनयात्मकम् ॥
[4]तदाद्यभरतेनोक्तं रसभावसमन्वितम् ॥ ३५ ॥
नाट्यं तन्नाटकेष्वेवोपयुक्तं तद्गतानतः ॥
विहाय त्रीनभिनयानाङ्गिकोऽत्राभिधीयते ॥ ३६ ॥

**नाटकस्थितेत्यादि** । वाक्यार्थाभिनयो रसाभिनयः । पदार्थाभिनयो भावाभिनयः । अत्र नाटकशब्दः प्रकरणाद्युपलक्षणम् । तेन नाटकेष्वेवेत्यत्र नाटकादिष्विति द्रष्टव्यम् ।

---

१ ख. ग. 'स्तत्र ध्रुवा' । २ च. तस्य । ३ ख. ग. 'रन्यैर' । ४ ख. ग. तन्नाट्यं भ' ।

**तद्गतानभिनयानिति** । नाट्यगतान्वाचिकसात्त्विकाहार्यान् ॥ ३५ ॥ ३६ ॥

आङ्गिकाभिनयस्य भेदान्दर्शयति—

**तस्य शाखाऽङ्कुरो नृत्तं प्रधानं त्रितयं मतम् ॥**
**तत्र शाखेति विख्याता विचित्रा करवर्तना ॥ ३७ ॥**

**तस्य शाखाऽङ्कुर इत्यादि** । **प्रधानमिति** । आङ्गिकाभिनयोक्तेतराङ्गापेक्षया शाखाभेदः (द)प्राधान्यमित्यर्थः ॥ ३७ ॥

**अङ्कुरो भूतवाक्यार्थमुपजीव्य प्रवर्तिता ॥**
**वर्तना सा भवेत्सूची भाविवाक्योपजीवनात् ॥ ३८ ॥**

प्रसङ्गात्सूचीं लक्षयति—**सा भवेत्सूचे(ची)ति** ॥ ३८ ॥

नृत्तं लक्षयति—

**करणैरङ्गहारैश्च साधितं नृत्तमुच्यते ॥**
**नात्रोपयोगिनौ सूच्यङ्कुरावुक्तौ प्रसङ्गतः ॥ ३९ ॥**

**करणैरिति** । ननु लक्षितस्यापि नृत्तस्य पुनर्लक्षणं कथमिति चेदुच्यते । पूर्वं सर्वाभिनयशून्यमाङ्गिकाभिनयप्रकारेण प्रवर्तितं गात्रविक्षेपमात्रं नृत्तमित्युक्तम् । इदानीमाङ्गिकाभिनयस्याऽऽङ्गिकत्वेन मध्ये मध्ये प्रयोज्यं करणाङ्गनिवृत्तं नृत्तमुक्तमिति भेदो द्रष्टव्यः ॥ ३९ ॥

**अङ्गान्यत्र शिरो हस्तौ वक्षः पार्श्वे कटीतटम् ॥**
**पादाविति षडुक्तानि स्कन्धावप्यपरे जगुः ॥ ४० ॥**
**प्रत्यङ्गानि त्विह ग्रीवा बाहू पृष्ठं तथोदरम् ॥**
**ऊरू जङ्घे षडित्याहुरपरे मणिबन्धकौ ॥**
**जानुनी भूषणानीति त्रयमभ्यधिकं जगुः ॥ ४१ ॥**

अस्मिन्नृत्ताध्याये संग्राह्यान्पदार्थाननुक्रमेणोद्दिशति—

**अङ्गान्यत्रेत्यादि** ॥ ४० ॥ ४१ ॥

**दृष्टिभ्रूपुटताराश्च कपोलौ नासिकानिलः ॥**
**अधरो दशना जिह्वा चिबुकं वदनं तथा ॥ ४२ ॥**
**उपाङ्गानि द्वादशेति शिरस्यङ्गान्तरेषु तु ॥**
**पार्ष्णिगुल्फौ तथाऽङ्गुल्यः करयोः पादयोस्तले ॥ ४३ ॥**
**मुखरागश्च करयोः प्रचाराः करणानि च ॥**
**कर्माणि पाणिक्षेत्राणि करणानि द्विधा ततः ॥ ४४ ॥**

---

१ च. तस्य । २ घ. °वर्धना । ३ ख. ग. प्रवर्तते । ४ घ. ङ. °त्सूचा भा° । ५ ग. °त्सूचां ल° । ६ च. °णादि द्वि° ।

**अङ्गान्तरेष्विति** । शिरसो व्यतिरिक्तेषु करणयोरित्यर्थः । पार्ष्णिगुल्फकराङ्गुलिपादाङ्गुलिपादतलानि पञ्चोपाङ्गानि ज्ञेयानि । तथाऽङ्गुल्यः करयोः पादयोस्तलेत्युद्देशे तु करयोरङ्गुल्य इति योजनीयम् । तले इति तु संनिहितयोः पादयोरेव योजनीयम् । कर[१]योस्तले इति त(करतल?)योस्तु करणप्रचारभेदत्वे[न?] वक्ष्यमाणत्वादिति भावः ॥ ४२ ॥ ४३ ॥ ४४ ॥

**शुद्धान्युत्प्लुतिपूर्वाणि चाङ्गहाराः सरेचकाः ॥ ४५ ॥**
**[२]चार्यः शुद्धाश्च देशीस्थाः स्थानकान्यथ वृत्तयः ॥**
**न्यायाः सप्रविचाराश्च मण्डलान्यखिलान्यपि ॥ ४६ ॥**
**लास्याङ्गानि ततो रेखा श्रमः पात्रस्य लक्षणम् ॥**
**गुणदोषा मण्ड[३]नं च तस्योपाध्यायलक्षणम् ॥ ४७ ॥**
**संप्रदायो गुणा दोषास्तस्य शुद्धा च पद्धतिः ॥**
**गौण्डल्याश्च विधिः सम्यग्लक्ष्म पेरणिनस्ततः ॥ ४८ ॥**
**तत्पद्धतिरथाऽऽचार्यो नटनर्तकलक्षणे ॥**
**वैतालिकश्चारणश्च [४]कौलाटिकसभासदः ॥ ४९ ॥**
**सभापतिः सभायाश्च निवेशो रसलक्षणम् ॥**
**भावलक्षणमित्यस्मिन्नध्याये ब्रूमहे क्रमात् ॥ ५० ॥**

**सरेचका इति** । रेचकानामङ्गहाराङ्गतयैव प्रयोगो न पार्थक्येनेति द्योतयितुमङ्गहारविशेषणत्वेनोद्देशो द्रष्टव्यः । एवं न्यायाः सप्रविचाराश्चेत्यत्रापि प्रविचाराणां न्यायाङ्गत्वं द्रष्टव्यम् ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥

**[५]धुतं विधुतमाधूतमवधूतं च कम्पितम् ॥**
**आकम्पितोद्वाहिते च परिवाहितमञ्चितम् ॥ ५१ ॥**
**निहञ्चितं परावृत्तमुत्क्षिप्ताधोमुखे तथा ॥**
**[६]लोलितं चेति विज्ञेयं चतुर्दशविधं शिरः ॥ ५२ ॥**
**तिर्यग्नतोन्नतं स्कन्धानतमारात्रिकं [७]समम् ॥**
**पार्श्वाभिमुखमित्यन्यान्भेदान्पञ्चापरे जगुः ॥ ५३ ॥**

तत्राङ्गेषु प्रथमोद्दिष्टस्य शिरसो भेदानुद्दिशति—**धुतं विधुतमित्यादि** ॥ ५१ ॥ ॥ ५२ ॥ ५३ ॥

**पर्यायेण शनैस्तिर्यग्गतमुक्तं धुतं शिरः ॥**
**शून्यस्थानस्थितस्यैव पार्श्वदेशावलोकने ॥ ५४ ॥**

---

१ ग. °रस्त° । २ ग. चार्यशु° । ३ च. °ण्डलं च । ४ ख. कोल्हाण्टिक° । ५ घ. °धूतं विधूत° । ६ ग. लालितं । ७ च. मतम् ।

यथोद्देशं लक्षणानि सविनियोगमाह—पर्यायेण शनैरित्यादि ॥ ९४ ॥

अनाश्वासे विस्मये च विषादेऽनीप्सिते तथा ॥
प्रतिषेधे च तस्योक्तः प्रयोगो भरतादिभिः ॥ ९५ ॥

इति धुतम् ।

द्रुतगत्या तदेव स्याद्विधुतं तत्प्रयुज्यते ॥
शीतार्ते ज्वरिते भीते सद्यःपीतासवे तथा ॥ ९६ ॥

इति विधुतम् ।

आधूतं तु सकृत्तिर्यगूर्ध्वं नीतं शिरो मतम् ॥
गर्वेण स्वाङ्गवीक्षायां पार्श्वस्थोर्ध्वनिरीक्षणे ॥
शक्तोऽस्मीत्यभिमाने च प्रयोगस्तस्य कीर्तितः ॥ ९७ ॥

॥ ९५ ॥ ९६ ॥ ९७ ॥

इत्याधूतम् ।

यदधः सकृदानीतमवधूतं तदुच्यते ॥
स्थित्याऽर्धदेशनिर्देशे[1] संज्ञावाहनयोरपि ॥
आलापे च प्रयोक्तव्यमिदमाहुर्मनीषिणः ॥ ९८ ॥

संज्ञावाहनयोरपीत्यत्र संज्ञेति गूढार्थसूचिका संज्ञोच्यते । एवं संज्ञापदेशयोरित्यादावपि द्रष्टव्यम् ॥ ९८ ॥

इत्यवधूतम् ।

बहुशो द्रुतमूर्ध्वाधःकम्पनात्कम्पितं शिरः ॥
ज्ञानेऽभ्युपगमे रोषे[2] वितर्के तर्जने तथा ॥ ९९ ॥
त्वरितप्रश्नवाक्ये च प्रयोक्तव्यमिदं शिरः ॥

इति कम्पितम् ।

आकम्पितं तदेव स्याद्द्विः प्रयुक्तं शनैर्यदि ॥ ६० ॥
एतत्पौरस्त्यनिर्देशे प्रश्ने[3] संज्ञोपदेशयोः ॥
आवाहने स्वचित्तस्थकथने च प्रयुज्यते ॥ ६१ ॥

इत्याकम्पितम् ।

सकृदूर्ध्वं[4] शिरो नीतमुद्वाहितमुदीरितम् ॥
शक्तोऽहमिह कार्येऽस्मीत्यभिमाने प्रयुज्यते ॥ ६२ ॥

॥ ९९ ॥ ६० ॥ ६१ ॥ ६२ ॥

इत्युद्वाहितम् ।

---

१ ङ. स्थित्यर्थं दे° । च. स्थित्यर्धदे° । २ ख. ग. रोधे । ३ च. °श्ने ज्ञानोप° । ४ च. °मिति कार्येऽस्मिन्नभि° ।

परिमण्डलिताकारभ्रामितं परिवाहितम् ॥
लज्जाभरोद्भवे माने वल्लभानुकृतौ तथा ॥ ६३ ॥
विस्मये च स्मिते हर्षामर्षयोरनुमोदने ॥
विचारे च विचारज्ञाः कार्यमाहुरिदं शिरः ॥ ६४ ॥

वल्लभानुकृताविति । लीलायामित्यर्थः । प्रियानुकरणं लीलेत्युक्तत्वात् ॥ ६३ ॥ ॥ ६४ ॥

इति परिवाहितम् ।

शिरः स्यादञ्चितं किंचित्पार्श्वतो नतकंधरम् ॥
रुक्चिन्तामोहमूर्छासु तत्कार्यं हनुधारणे ॥ ६५ ॥

हनुधारण इति । रुक्चिन्तादिविषयं यद्धस्तेन हनुधारणं तस्मिन्नञ्चितं शिरः कार्यमित्यर्थः ॥ ६५ ॥

इत्यञ्चितम् ।

उत्क्षिप्तबाहुशिखरं मग्नग्रीवं निहञ्चितम् ॥
विलासे ललिते गर्वे बिब्बोके किलकिञ्चिते ॥ ६६ ॥
मोट्टायिते कुट्टमिते माने स्तम्भे च तद्भवेत् ॥
विलासो गमनादि स्याच्चेष्टाऽऽश्लिष्टाङ्गया कृता ॥ ६७ ॥
कान्तायाः सुकुमाराङ्गोपाङ्गत्वं ललितं विदुः ॥
बिब्बोकस्त्विष्टलाभेन जाताद्गर्वादनादरः ॥ ६८ ॥
हर्षाद्रोदनहासादि प्रोच्यते किलकिञ्चितम् ॥
मोट्टायितं प्रियकथादृष्ट्यादौ तन्मयात्मता ॥ ६९ ॥
केशादिग्रहजे हर्षे दुःखवद्भवनं तु यत् ॥
स्यात्तत्कुट्टमितं मानो रोषः प्रणयसंभवः ॥ ७० ॥
*स्यात्तु निष्क्रियता स्तम्भो नवोढाप्रियसंगमे ॥ ७१ ॥

इति निहञ्चितम् ।

पराङ्मुखीकृतं शीर्षं परावृत्तमुदीरितम् ॥
तत्कार्यं कोपलज्जादिकृते वक्त्रापसारणे ॥
परावृत्तानुकरणे पृष्ठतः प्रेक्षणे तथा ॥ ७२ ॥

॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥

इति परावृत्तम् ।

---

* इदं श्लोकार्धं च. पुस्तक एव दृश्यते नान्येषु ।

---

१ ख. ग. °द्भवोन्मोहव° । ङ. °द्भवे मौने । २ ख. ग. वक्त्रप्रसा° ।

ऊर्ध्ववक्त्रं शिरो ज्ञेयमुत्क्षिप्तं तत्प्रयुज्यते ॥
दर्शने तुङ्गवस्तूनां चन्द्रादिव्योमगामिनाम् ॥ ७३ ॥
इत्युत्क्षिप्तम् ।
लज्जादुःखप्रणामेषु स्यादन्वर्थमधोमुखम् ॥ ७४ ॥

॥ ७३ ॥ ७४ ॥

इत्यधोमुखम् ॥
शिरः स्याल्लोलितं सर्वदिक्कैः शिथिललोचनैः ॥
निद्रागदग्रहावेशमदमूर्छासु तन्मतम् ॥ ७५ ॥

**सर्वदिक्कैरिति** । स्वरूपतो भिन्नानामपि शिरोभेदानां यत्र येषु केषुचिदर्थेषु विनियोगसाम्यं दृश्यते तत्र विकल्पविज्ञानादेकेनोचितेन प्रयोगः कर्तव्यः ॥ ७५ ॥

इति लोलितम् ।
इति भरतोक्तं चतुर्दशविधं शिरः ।

---

तिर्यङ्नतोन्नतिं प्राप्तं शिरस्तिर्यङ्नतोन्नतम् ॥
बिब्बोकादिषु कान्तानां तत्प्रयोगं प्रचक्षते ॥ ७६ ॥
इति तिर्यङ्नतोन्नतम् ।
स्कन्धानतं तदाख्यातं स्कन्धे यन्निहितं शिरः ॥
तन्निद्रामदमूर्छासु चिन्तायां च प्रयुज्यते ॥ ७७ ॥
इति स्कन्धानतम् ।
स्कन्धौ तु किंचिदाश्लिष्य भ्रान्तमारात्रिकं मतम् ॥
विस्मये दृश्यते तच्च पराभिप्रायवेदने ॥ ७८ ॥
इत्यारात्रिकम् ।
स्वाभाविकं समं शीर्षं स्वभावाभिनये मतम् ॥
इति समम् ।
पार्श्वाभिमुखमन्वर्थं पार्श्वस्थस्यावलोकने ॥ ७९ ॥

॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥

इति पार्श्वाभिमुखम् ।
इति पञ्च शिरःप्रकाराः ।
इत्येकोनविंशतिविधं शिरः ।

---

१ ख. ग. °र्ध्ववृत्तं शि° । २ ख. ग. विनयो योग° । ३ ख. छ. तत्प्रयोज्यं ।

पताकस्त्रिपताकोऽर्धचन्द्राख्यः कर्तरीमुखः ॥
अरालमुष्टिशिखरकपित्थखटकामुखाः ॥ ८० ॥
शुकतुण्डश्च काङ्गूलः पद्मकोशोऽलपल्लवः ॥
सूचीमुखः सर्पशिराश्चतुरो मृगशीर्षकः ॥ ८१ ॥
हंसास्यो हंसपक्षश्च भ्रमरो मुकुलस्तथा ॥
ऊर्णनाभश्च संदंशस्ताम्रचूडोऽपरः करः ॥ ८२ ॥

अथ हस्तभेदानुद्दिशति—पताक इत्यादि ॥ ८० ॥ ८१ ॥ ८२ ॥

असंयुता मता हस्ताश्चतुर्विंशतिरित्यमी ॥
अभिनेयवशादेषां संयुतत्वमपीष्यते ॥ ८३ ॥

अभिनेयवशादेषां संयुतत्वमपीष्यत इति । अभिनेयोऽभिनययोग्योऽर्थः । तद्वशादेतेषां पताकादीनां चतुर्विंशत्यसंयुतहस्तानां संयुतत्वमपीष्यत इति । यथा वक्ष्यति पताकहस्तविनियोगे—

"उचितौ विच्युतौ कार्यावेतावन्योन्यसंमुखौ" इति ।

तथा भरतेनाप्युक्तं चतुरहस्तविनियोगे—

"नयनौपम्यं पद्मदलनिरूपणं हरिणकर्णनिर्देशम् ।
संयुतकरणेनैव चतुरेणैतानि कुर्वीत" इति* ॥

एवं हस्तान्तरेष्वपि द्रष्टव्यम् ॥ ८३ ॥

अञ्जलिश्च कपोताख्यः कर्कटः स्वस्तिकस्तथा ॥ ८४ ॥
दोलपुष्पपुटोत्सङ्गखटकावर्धमानकाः ॥
गजदन्तश्चावहित्थो निषधो मकरस्तथा ॥ ८५ ॥
वर्धमानश्चेति हस्ताः संयुताः स्युस्त्रयोदश ॥
एतेऽभिनयहस्ताः स्युः सप्तत्रिंशन्मुनेर्मताः ॥ ८६ ॥

॥ ८४ ॥ ८५ ॥ ८६ ॥

चतुरस्रावथोद्वृत्तौ हस्तौ तलमुखाभिधौ ॥
स्वस्तिकौ विप्रकीर्णाख्यावरालखटकामुखौ ॥ ८७ ॥

ननु त्रयोदशसंयुतहस्तानां त्रिंशन्नृत्तहस्तानां च हस्तद्वयनिष्पाद्यत्वे समानेऽप्युद्देशेऽञ्जल्यादीनामेकवचनेन निर्देशः, चतुरस्रादीनां द्विर्व(व)चनेन निर्देशः कथमिति चेदुच्यते । अञ्जल्यादीनामभिनयहस्तत्वेनार्थगमकत्वनियमात्, संयुतत्वव्यतिरेकेणार्थगम-

* भरतनाट्यशास्त्रे—अध्या० ९ श्लो० ९२ ।

१ ख. ग. घ. °ताकश्चार्धचन्द्रः क° । २ ख. ग. °ताकाइ° । ३ ख. ग. निषेधो । ४ ख. ग. घ. °र्णावप्यरा° ।

कत्वाभावात्, संयुताकारेणैकहस्तत्वम् । तेनैकवचननिर्देश एवोपपन्नस्तेषाम् । चतुरस्रादीनां तु नृत्तहस्तत्वेन शोभामात्रोपयोगित्वात्, तस्य चैकेनापि साध्यत्वात्प्रयोगे पृथक्स्वातन्त्र्यं दर्शयितुं तेषां द्विवे(व)चननिर्देश एवोपपन्नः । यद्यप्येवं पृथक्स्वातन्त्र्यं तथाऽपि चतुरस्रावित्यादिकयोरेकरूपयोररालखटकामुखावित्यादिकयोर्भिन्नरूपयोर्वैकैक-हस्तत्वेन परिगणनं तु तयोरन्योन्यापेक्षया[1] मिलितयोरेव शोभातिशयहेतुत्वविवक्षयेति द्रष्टव्यम् । ननु च नृत्तप्रस्तावेऽभिनयहस्तानामुद्देशलक्षणपरीक्षाभिः कोऽर्थ इति चेदुच्यते—'आङ्गिकोक्तप्रकारेण नृत्तं नृत्तविदो विदुः' इति खलूक्तम् । तस्यायमर्थः । आङ्गिकाभिनये शिशिरहस्तादिभेदानामर्थावगमकत्वे यो यः प्रकार उक्तः स एवार्थावगमकत्वं विहाय नर्तकेच्छया यथाशोभंताललयानुगतत्वेन प्रयुक्तश्चेन्नृत्तं भवतीति । अतोऽत्राऽऽङ्गिकाभिनयप्रकारोऽवश्यमादौ वक्तव्य इत्यचोद्यमेतत् । किंचाभिनयप्रस्तावे नृत्तमप्युपकरोति । आवेष्टितादिभिरभिनयस्याविच्छिन्नाकारतामपोह्य वाक्यार्थविश्रान्तिप्रतीतिजननात् । यथाऽऽहाभिनवगुप्ताचार्यो भारतीयविवृतौ—" एते च त्रयोदश संयुतत्वव्यतिरेकेण न स्वार्थस्य गमका इत्युक्ता(क्तम्) । एतेषां त्वभिनयहस्तानां छिद्राच्छादनमेव(?) वर्तनानुप्रवेशादलातचक्रप्रतिमतां दर्शयितुं[2] मसृणोद्धतवर्तनात्मकतया चैकवाक्यार्थविश्रा[3]न्तितां प्रथयितुं नृत्तस्य च वस्तुभूतत्वेनोक्तस्य स्वरूपमभिधातुं नृत्यं त्यौ[4]चेद्याविति(?) नृत्तादिविषयै[5]यत्वमूच्यङ्कुरादावुपयोगमपि दर्शयितुं नृत्तशब्देन विशेषं निर्दिशति[6] । नृत्तहस्तानधिकृत्योक्तं च तेनैव संयुतासंयुतरूपोपजीविन एत इत्याद्येकाकिनोऽपि प्रयुज्यन्त इति । अतोऽञ्जल्यादीनां संयुतरूपतैव । चतुरस्रादीनां तूभयरूपतेति सर्वमवदातम् । अथ कथं चतुरस्रावित्यादीनामुद्देशमध्ये करिहस्तश्चेत्येकवचननिर्देश इत्यत्र ग्रन्थकारः स्वयमेवोपपत्तिं वक्ष्यतीत्यलम् ॥ ८७ ॥

**आविद्धवक्त्रौ सूच्यास्यौ रेचितावर्धरेचितौ ॥**
**नितम्बौ पल्लवौ केशबन्धावुत्तानवञ्चितौ ॥ ८८ ॥**
**लताख्यौ करिहस्तश्च पक्षवञ्चितकाभिधौ ॥**
**पक्षप्रद्योतकोदण्डपक्षौ गरुडपक्षकौ ॥ ८९ ॥**
**ऊर्ध्वमण्डलिनौ हस्तौ पार्श्वमण्डलिनावपि ॥**
**उरोमण्डलिनौ स्यातामुरःपार्श्वार्धमण्डलौ ॥ ९० ॥**
**मुष्टिकस्वस्तिकावन्यौ नलिनीपद्मकोशकौ ॥**
**अलपद्मावुल्बणौ च वलितौ ललिताविति ॥ ९१ ॥**

॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥

---

१ ख. ग. °क्षया तयो° । २ ज° °तुं मश्रिणोऽर्धव° । ३ ज. °श्रान्ततां । ४ ज. °त्यं तौ चैत्यावि° । ५ ज. °पये च सू° । ६ ख. ग. °ति । नृत्तहस्तावित्यादि । नृत्त° ।

**नृत्तहस्ता मतास्त्रिशन्नृत्तमात्रोपयोगिनः ॥**
**एतानभिनये[1]ऽप्याहुः शास्त्रतः संप्रदायतः ॥ ९२ ॥**

नृत्तमात्रोपयोगिन इति केषांचिन्मतम्। अन्ये त्वेतान्नृत्तहस्ताञ्शास्त्रतः संप्रदायतोऽभिनये[2]ऽप्याहुः ॥ ९२ ॥

तत्र शास्त्रं तावद्दर्शयति—

**लताख्यौ हि मुनिर्वक्ति नृत्ताभिनयगोचरौ ॥**

**लताख्यौ हि मुनिर्वक्ति नृत्ताभिनयगोचराविति।** यथाऽऽह मुनिः—

"तिर्यक्प्रचारितौ चैव पार्श्वसंस्थौ तथैव च।
लताख्यौ च करौ ज्ञेयौ वृत्ताभिनयनं प्रति" ॥ इति ।

संप्रदायं दर्शयति—

**सूच्यन्तेऽन्ये साहचर्यात्तेनाभिनयगोचराः ॥ ९३ ॥**

**सूच्यन्तेऽन्ये साहचर्यात्तेनाभिनयगोचरा इति** । अस्यार्थः। नृत्तहस्तेषु लताभिनयहस्तयोरभिनयविषयत्वे मुनिवचनेन शास्त्रेण सिद्धे तेन लताहस्तेन साहचर्यादन्ये नृत्तहस्ता अभिनयगोचराः सूच्यन्त इति । अयमेव संप्रदायो ज्ञेयः । शास्त्रानुक्तस्यापि शास्त्रेणाभ्यनुज्ञातस्य शास्त्राविरोधिनोऽर्थविशेषस्याऽऽचार्यशिष्यपरम्परया यदुपदेशप्रदानं स संप्रदाय इत्येतल्लक्षणलक्षितत्वात् ।

तथाचोक्तम्—"यो यत्सम्यग्विजानीते स यद्वदति तद्वचः ।
स संप्रदायः कथितो विष्णुना लोकजिष्णुना" इति ।
"यत्र कुत्रचिदाख्यातौ[3] संस्थितिश्चानुपूर्वतः ।
स संप्रदायः कथितो यथा स्वर्णविभूषणे" इति च ॥ ९३ ॥

एवं शास्त्रसंप्रदायाभ्यां नृत्तहस्तानामभिनयविषयत्वमपि विद्यत इति सामान्येनाभिनयविषयत्वे ज्ञाते कुत्र कस्य कथमभिनय इति विशेषजिज्ञासायामाह—

**युक्तितः संप्रदायाच्च लोकतोऽत्र विशेषधीः ॥**
**यँथा[4] हि करिहस्तेन हस्ती लोकेऽभिनीयते ॥ ९४ ॥**

**युक्तितः संप्रदायाच्च लोकतोऽत्र विशेषधीरिति ।** अत्र नृत्तहस्तानामभिनयविषयत्वे विशेषधीर्विशेषज्ञानं क्वचिद्युक्तितः प्रयोक्तुरुपपत्तिविशेषात्क्वचित्संप्रदायादाचार्योपदेशपरम्परायाः क्वचिल्लोकतो लोकचरितात्, एकैकस्माद्द्वाभ्यां त्रिभ्यो वा द्रष्टव्यम् । तत्र लोकतो ज्ञेयमुदाहृत्य दर्शयति—**यथा हि करिहस्तेन हस्ती लोकेऽभिनीयत[5] इति ॥ ९४ ॥**

---

१ च. °नये प्राहुः। २ ख. ग. °ये प्राहुः। ३ ख. य. °ता सत्स्थितिश्चानुकुर्वते। स°। ४ ख. ग. तथा। ५ ख. ग. °भिधीय°।

तदेतदाचार्यैरप्यङ्गीकृतमित्याह—

भट्टाभिनवगुप्ताद्यैरिदमभ्युपगम्यते ॥
सर्वे च मिलिताः सन्तः सप्तषष्टिरिमे कराः ॥ ९५ ॥

**भट्टाभिनवगुप्ताद्यैरिदमभ्युपगम्यत इति** । हस्तसंख्यां मिलित्वा दर्शयति—**सर्वे चेति** । संयुतासंयुतनृत्तहस्ता अत्र सर्वशब्देनोच्यन्ते ॥ ९५ ॥

चतुःषष्टित्वमेतेषां न युक्त्यागमगोचरः ॥
चतुःषष्टित्वमेवं वा तेषां सूरिभिरूह्यताम् ॥ ९६ ॥

लोके तावत्तेषां चतुःषष्टित्वप्रसिद्धिरप्रामाणिकीत्याह—**न युक्त्यागमगोचर इति** ॥ लोकप्रसिद्ध्यन्यथानुपपत्त्या चतुःषष्टित्वे युक्तिं ग्रन्थकारः स्वबुद्ध्या कल्पयति—**चतुःषष्टित्वमेवं वेत्यादिना** ॥ ९६ ॥

कर्तव्यौ स्वस्तिकौ हस्तौ विप्रकीर्णविशेषणौ ॥
करौ हि स्वस्तिकीभूय विच्युतौ विप्रकीर्णकौ ॥ ९७ ॥
स्वतन्त्रयोरतो नास्ति प्रयोगो विप्रकीर्णयोः ॥
उरोमण्डलिनावेवं पार्श्वमण्डलिनोरिह ॥ ९८ ॥
विशेषणे चोल्बणयोः कर्तव्यावलपल्लवौ ॥
विशेषणविशेष्ये च न स्यातां भिन्नगामिनी ॥ ९९ ॥
नीलमुत्पलमित्यत्र न हीष्टं पङ्कजद्वयम् ॥
प्रसिद्धेरुपपत्त्यर्थं युक्तिरेषा मयोदिता ॥ १०० ॥

॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥

आचार्याणां तु सर्वेषां पृथगुद्देशलक्षणे ॥
वदतां स्वस्तिकाद्येषु न विशेषणता मता ॥ १०१ ॥

स्वस्तिकादीनां विप्रकीर्णादिविशेषणतायुक्तिर्लोकप्रसिद्ध्यवगतचतुःषष्टित्वनिर्वाहायास्माभिरेवोक्ता न त्वाचार्यसंमतेत्याह—**आचार्याणां त्विति** ॥ १०१ ॥

कैश्चिदाचार्यैरधिकहस्तत्रयाङ्गीकारेण हस्तसप्ततिरुक्तेत्याह—

निकुञ्चकमयुक्तेषु करं द्विशिखरं पुनः ॥
युक्तेषु नृत्तहस्तेषु त्वधिकौ वरदाभयौ ॥ १०२ ॥
ब्रुवन्तः केचिदाचार्या हस्तसप्ततिमूचिरे ॥
तेषामीषद्विकारेऽपि विनियोगेष्वनन्यता ॥ १०३ ॥

**निकुञ्चकमित्यादि** । तेषां त्रयाणां स्वेनापरिगणने हेतुमाह—**तेषामीषद्विकारेऽपि विनियोगेष्वनन्यतेति** ॥ १०२ ॥ १०३ ॥

---

१ च. °पद्मकौ । वि° ।

अथ पताकादीनां यथोद्देशक्रमं सविनियोगानि लक्षणान्याह—

**तर्जनीमूलसंलग्नः कुञ्चिताङ्गुष्ठको भवेत् ॥**
**पताकः संहताकारः प्रसारिततलाङ्गुलिः ॥ १०४ ॥**

**तर्जनीमूलेत्यादि ।** अत्र पताकादीनां हस्तानां पताकाद्याकारवत्त्वेन पताका[दि]शब्दाभिधेयत्वम् । पताकादिशब्दानां च स्वप्रवृत्तिनिमित्तपताकाद्यर्थप्रकाशकत्वात् । अत्र त[त्त]दभिधेयानां हस्तानां तत्तदर्थप्रदर्शकत्वं च क्वचिदनुक्तमप्यनुसंधेयम् ॥ १०४ ॥

**एष स्पर्शे चपेटे च पताकातालिकादिषु ॥**
**ज्वालासूर्ध्वगतास्वस्याङ्गुल्यः प्रविरलाश्चलाः ॥ १०५ ॥**

तत्र पताकहस्तविनियोगे चपेटेत्युच्यते । चपेटो नाम प्रसारितनिरन्तराङ्गुलितलेन हस्तेन वटुचेटादीनामवटुस्थाने प्रहारः ॥ १०५ ॥

**धारास्वधोगताः पक्षिपक्षे त्वस्य कटिस्थिते ॥**
**ऊर्ध्वं गच्छन्नुच्छ्रितेषु पुष्करप्रहतौ त्वधः ॥ १०६ ॥**
**ऊर्ध्वं गच्छन्कटिक्षेत्रादुत्क्षेपाभिनये करः ॥**
**आभिमुख्ये मुखक्षेत्रमागच्छन्निजपार्श्वतः ॥ १०७ ॥**
**स्वपार्श्वे कम्पमानस्तु प्रतिषेधे भवत्यसौ ॥**
**शीघ्रं घर्षन्नधिष्ठाय पताकं क्षालने परम् ॥ १०८ ॥**
**पताकं तु शनैर्घर्षन्मर्दने मार्जने तथा ॥**
**उत्पाटने धारणे च शिलादिस्थूलवस्तुनः ॥ १०९ ॥**
**उचितौ विच्युतौ कार्यावेतावन्योन्यसंमुखौ ॥**
**अधोगतोच्छ्रितचलाङ्गुलिर्वायूर्मिवेगयोः ११० ॥**

**इति पताकः ।**

**स एव त्रिपताकः स्याद्वक्रितानामिकाङ्गुलिः ॥**
**दध्यादिमङ्गलद्रव्यस्पर्शादौ स विधीयते ॥ १११ ॥**
**पराङ्मुखः स्यादाह्वाने लग्नद्व्यङ्गुलिकुञ्चनात् ॥**
**बहिःक्षिप्ताङ्गुलिद्वंद्वोऽधस्तलोऽनादरोज्झिते ॥ ११२ ॥**
**नमस्कारे त्वसौ कार्यः शिरस्थः पार्श्वतस्तलः ॥**
**उत्तानिताङ्गुलिद्वंद्वो वदनोन्नामने मतः ॥ ११३ ॥**

॥ १०६ ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ १११ ॥ ११२ ॥ ११३ ॥

---

१ ङ. 'लामूर्धगतास्त्वस्या' । २ ग. 'नामेव दुःस्था' । ३ घ. 'पक्षित्वस्य कटिस्थितिः । ऊ' । ४ ख. ग. 'घ्रं गच्छन्न' । ५ ख. ग. 'र्वातोर्मि' । ६ ख. ग. 'नोत्तानितो म' ।

संदेहे[1] दधदङ्गुल्यौ क्रमेणैव नतोन्नते ॥
अधोमुखः शिरःप्रान्ते भ्रमन्नुष्णीषधारणे ॥ ११४ ॥

॥ ११४ ॥

तादृगेव किरीटस्य धृतौ मूर्धोर्ध्वदेशगः ॥
अनिष्टे गन्धवाग्घोषे नासास्यश्रोत्रसंवृतिम् ॥ ११५ ॥

त्रिपताकहस्तविनियोगे—तादृगेव किरीटस्य धृतौ मूर्धोर्ध्वदेशग इति । (*तादृगेवेति उष्णीषधारणे )। उष्णीषधारणाभिनयेऽधोमुखः शिरःप्रान्ते भ्रमन्निति यादृगुक्तस्तादृगेव मूर्धोर्ध्वदेशगश्चेदित्ययमर्थः । अधोमुखस्त्रिपताकहस्तः प्रथमं शिरः-प्रान्ते भ्रान्त्वा ततस्तदूर्ध्वदेशे पूर्वावृत्त्यर्धपरिमाणवत्तया भ्रान्त्वा ततोऽप्यूर्ध्वदेशे तद-र्धावृत्तिपरिमाणवत्तया भ्रमन्किरीटस्य धृतौ धारणाभिनये भवति । शिरस उपरिभाग आनुपूर्व्येण स्थूलमूलसूक्ष्माग्रत्वदर्शने मुकुटप्रतीतिर्भवेदित्यर्थः । अनिष्ट इत्यादि । अङ्गुलीभ्यां तर्जनीमध्यमाभ्यां नासासंवृतिं कुर्वन्न[निष्टं गन्धमभिनयेत् । तथाऽऽस्य-संवृतिं कुर्वन्न]निष्टां वाचमभिनयेत् । तथा श्रोत्रसंवृतिं कुर्वन्ननिष्टं घोषमभिनयेदिति क्रमो द्रष्टव्यः । तथाऽधोमुखचलाङ्गुल्यौ दधत् । कटिक्षेत्रगतः कर ऊर्ध्वमधस्तिर्यग्ग-च्छंस्तु क्रमात्क्षुद्रेषु पक्षिस्त्रोतोनिलेषु भवतीत्यन्वयः ॥ ११५ ॥

अङ्गुलीभ्यां क्रमात्कुर्वन्पक्षिस्त्रोतोनिलेषु[2] तु[3] ॥
क्षुद्रेपूर्ध्वमधस्तिर्यक्क्रमाद्गच्छन्दधत्तथा[4] ॥ ११६ ॥
अधोमुखचलाङ्गुल्यौ[5] कटिक्षेत्रगतः करः ॥
अस्त्रे तन्मार्जने च स्यादधो यान्तीमनामिकाम् ॥ ११७ ॥
नेत्रक्षेत्रगतां बिभ्रत्तिलके तु ललाटगाम् ॥
अलकस्यापनयने दधत्तामलकान्विताम् ॥ ११८ ॥

इति त्रिपताकः ।

---

एकतोऽङ्गुलिसंघाते यत्राङ्गुष्ठे स्थितेऽन्यतः ॥
चन्द्रलेखाकृतिर्भाति सोऽर्धचन्द्रोऽभिधीयते ॥ ११९ ॥

॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥

---

* धनुश्चिह्नान्तर्गतमधिकमिव भाति ।

---

१ संदेशे । २ ख. ग. 'ण स्थल' । ३ ङ. तु । छिद्रे' । ४ ङ. 'च्छमधस्तथा । ५ ङ. 'मुखे-न चाङ्गु' । घ. च. 'मुखं च' ।

उपर्युत्तानितोऽर्धेन्दाव्रूर्ध्वगो बालपादपे ॥
पराङ्मुखस्तु खेदे स्यात्कपोलफलकं दधत् ॥
प्रयोक्तव्यः कृशे मध्ये बलान्निर्वासनादिषु ॥ १२० ॥

इत्यर्धचन्द्रः ।

---

॥ १२० ॥

अश्लिष्टमध्यमा पृष्ठे संस्थिता तर्जनी यदा ॥ १२१ ॥
त्रिपताकस्य हस्तस्य तदा स्यात्कर्तरीमुखः ॥
अलक्तकादिना पादरञ्जने पतने पुनः ॥ १२२ ॥

कर्तरीमुखलक्षणे—पृष्ठेऽश्लिष्टमध्यमेति समभिव्याहारान्मध्यमायाः पृष्ठमेव गम्यते। पृष्ठं पाश्चात्यो भागः ॥ १२१ ॥ १२२ ॥

मध्यमां तर्जनीस्थाने पुनस्तत्रैव तर्जनीम् ॥
दधानोऽधोगतोऽथाग्रस्थोर्त्तानो लेख्यवाचने ॥ १२३ ॥

विनियोगे च—मध्यमां तर्जनीस्थान इति । तर्जन्यां मध्यमाङ्गुलिपुरोभागं नीतायां मध्यमा तर्जनीस्थाने स्थिता भवति । पुनस्तत्रैव तर्जनीमित्यनेन तर्जन्या एव व्यापारो न मध्यमाया इति गम्यते। एवं दधानोऽधोगतः पतने भवतीत्यन्वयः॥१२३॥

इति कर्तरीमुखः ।

---

तर्जन्यादिष्वङ्गुलीषु प्राच्याः प्राच्याः परा परा ॥
दूरस्थोच्चा मनाग्वक्रा धनुर्वक्रा तु तर्जनी ॥ १२४ ॥

म(अ)रालहस्तलक्षणे—तर्जन्यादिष्वङ्गुलीषु प्राच्याः प्राच्याः परा परेति । मध्यमापेक्षया तर्जनी प्राची । अनामिकापेक्षया कनीयसी परेति द्रष्टव्यम् । तत्र परा परा मध्यमादिः प्राच्याः प्राच्यास्तर्जन्यादेः सकाशात् । दूरस्थोच्चा मनाग्वक्रा कर्तव्येति । पूर्वपूर्वापेक्षया परापरासु दूरस्थत्वाद्याधिक्यं द्रष्टव्यम् ॥ १२४ ॥

अङ्गुष्ठः कुञ्चितो यत्र तमरालं प्रचक्षते ॥
आशीर्वादादिषु प्रोक्तः स पुंसां हृदयस्थितः ॥ १२५ ॥
अथ स्त्रीणां केशबन्धे केशानां च विकीर्णने ॥
द्वित्रिः कार्योऽन्यपार्श्वात्तु स्वपार्श्वे वर्तुलभ्रमः ॥ १२६ ॥

॥ १२५ ॥ १२६ ॥

---

१ ङ. °गोपाल° । २ ध. °निष्काशना° । ३ ख. ग. °श्लिष्टा म° । ४ च. °त्तास्वाले° । ङ. °त्तानो ले° । ५ च. °दये स्थि° ।

आग्रजञ्जनसंघे स्यादाह्वाने पतदङ्गुलिः ॥
विवाहे त्वङ्गुलाग्रस्थस्वस्तिकाकारयोजितम् ॥ १२७ ॥
प्रदक्षिणं करद्वंद्वं स्याद्भ्रमन्के(न्के?)वलः पुनः ॥
प्रदक्षिणं भ्रमत्का(न्का?)र्यो देवतानां प्रदक्षिणे ॥ १२८ ॥
कस्त्वं कोऽहं क्व संबन्ध इत्यसंबद्धभाषणे ॥
बहिः पुनः पुनः क्षिप्ताङ्गुलिर्भालस्थितः पुनः ॥
भालस्वेदापनयने त्रिपताकोदितेषु च ॥ १२९ ॥
इत्यरालः ।

---

तलमध्यस्थितैर्लग्नैरङ्गुल्यग्रैरगोपितैः ॥
निष्पीड्य मध्यमां तिष्ठत्यङ्गुष्ठो मुष्टिरिष्यते ॥ १३० ॥
कुन्तनिर्स्त्रिंशदण्डादिग्रहे विविधयोधने ॥
धावने प्राङ्मुखाङ्गुष्ठो मल्लयुद्धे करद्वयम् ॥ १३१ ॥
इति मुष्टिः ।

---

मुष्टेरूर्ध्वकृतोऽङ्गुष्ठः शिखरः संप्रयुज्यते ॥ १३२ ॥
॥ १२७ ॥ १२८ ॥ १२९ ॥ १३० ॥ १३१ ॥ १३२ ॥
शक्तितोमरयोर्मोक्षे धनुर्भल्लाङ्कुशग्रहे ॥
अलकोत्पीडने मुष्टिः कार्यः सोऽप्यस्य लोकतः ॥ १३३ ॥
इति शिखरः ।

---

शिखरहस्तविनियोगे—**मुष्टिः कार्य इति** । कुन्तग्रहणादावित्यर्थः । **सोऽप्यस्य लोकत इति** । स मुष्टिरस्य । शिखरस्य कार्ये लोकतो लोकानुसाराद्भवतीत्यर्थः ॥ १३३ ॥

अङ्गुष्ठाग्रेण लग्नाग्रा तर्जनी शिखरस्य चेत् ॥
कपित्थः स्यात्तदा कार्यो धारणे कुन्तवज्रयोः ॥ १३४ ॥
चक्रचापगदादेश्च शराकर्षादिकर्मणि ॥
अन्योन्यकार्यविषयौ कपित्थशिखरौ क्वचित् ॥ १३५ ॥
इति कपित्थः ।

---

॥ १३४ ॥ १३५ ॥

---

१ ख. कार्यसाध्यस्य । ग. कार्यः सोऽभ्यस्य । घ. °कार्यो सोऽथ स्वलो° । ङ. कार्यो सोऽप्यस्य । २ ख. कुम्भग्र० । ३ ग. °कर्षणक° ।

अनामिकाकनीयस्यावुत्क्षिप्ते कुटिलीकृते ।। १३६ ।।
विरले चेत्कपित्थस्य तदा स्यात्खटकामुखः ।।
उत्तानस्तुरगादेः स्याद्वल्गाचामरधारणे ।। १३७ ।।
कुसुमावचये मुक्तास्रग्दाममधरणे तथा ।।
शरमन्थाकर्षणे च संमुखो दर्पणग्रहे ।। १३८ ।।
कस्तूरिकादिवस्तूनां पेषणेऽधस्तलौ करौ ।।
ताम्बूलवीटिकावृन्तच्छेदनादौ च स स्मृतः ।। १३९ ।।

इति खटकामुखः ।

---

अरालस्य यदाऽत्यन्तवक्रे तर्जन्यनामिके ।।
शुकतुण्डस्तदा स स्यात्प्रेमकोपेन(ण) वेर्ष(र्ष्ये)या ।।
न त्वं नाहं न मे कृत्यं त्वयेति वचने तथा ।। १४० ।।
द्यूताक्षपातनादौ स्यात्सावज्ञे तु विसर्जने ।।
आह्वाने च बहिश्चान्तः क्रमात्क्षिप्ताङ्गुलिर्भवेत् ।। १४१ ।।

इति शुकतुण्डः ।

---

काङ्गूलेऽनामिका वक्रा भवेदूर्ध्वा कनीयसी ।।
ऊर्ध्वास्त्रेताग्निसंस्थानास्तर्जन्यङ्गुष्ठमध्यमाः ।। १४२ ।।
फलेऽल्पे च मिते ग्रासे स्याच्छिद्दालपदादिषु ।।
चिबुकग्रहणे चैव बालकानां विधीयते ।। १४३ ।।

इति काङ्गूलः ।

---

।। १३६ ।। १३७ ।। १३८ ।। १३९ ।। १४० ।। १४१ ।। १४२ ।। १४३ ।।

अङ्गुष्ठाङ्गुलयो यस्मिन्नलग्नाग्रा धनुर्नताः ।।
विरलाः पद्मकोशोऽसौ कार्यो देवार्चने बलौ ।। १४४ ।।
द्विस्त्रिर्वा विप्रकीर्णाग्रः पुष्पाणां प्रकरे करः ।।
फले बिल्वकपित्थादौ स्त्रीणां च कुचकुम्भयोः ।। १४५ ।।

पद्मकोशलक्षणे—अङ्गुष्ठाङ्गुलय इति । अङ्गुष्ठादयोऽङ्गुलय इत्यर्थः ।। १४४ ।। ।। १४५ ।।

इति पद्मकोशः ।

---

१ घ. 'त्तानोऽसौ स्रुगादौ स्या' । २ ङ. च. 'मधार' । ३ ग. च संस्मृ' ।

व्यावर्तिताख्यं करणं कृत्वैव समत्रस्थिताः ॥
यस्याङ्गुल्यः करतले पार्श्वगाः सोऽलपल्लवः ॥ १४६ ॥

अलपल्लवलक्षणे—व्यावर्तिताख्यं करणमिति । आवेष्टितप्रक्रियया कनिष्ठाद्यङ्गुलिकृता या करवर्तना तद्व्यावर्तितं करणम् ॥ १४६ ॥

अलपद्मः स एव स्यादङ्गुलीनां च[1] केचन ॥
अस्य व्यावर्तितस्थाने परिवर्तितमूचिरे ॥ १४७[2] ॥
कस्य त्वमिति नास्तीति वाक्ययोः प्रतिषेधने ॥
तुच्छाद्युक्तानृतत्वोक्तिष्[3]वेव स्त्रीभिः प्रयुज्यते ॥ १४८ ॥

इत्यलपल्लवः ।

---

ऊर्ध्वे प्रसारिता यत्र खटकामुखतर्जनी ॥
हस्तः सूचीमुखः स स्यादभिनेयमिहोच्यते ॥ १४९ ॥
शास्त्रे[4] चक्राभिधे कुम्भकारोपकरणे तथा ॥
रथाङ्गे जनसंघाते भ्रमन्ती तर्जनी भवेत् ॥ १५० ॥
ऊर्ध्ववक्त्राऽधोमुखी च निजपार्श्वगता तथा ॥
पार्श्वान्तरान्निजं पार्श्वमायान्ती च क्रमाद्भवेत् ॥ १५१ ॥
*पताकायां भवेदूर्ध्वा साधुवादे च दोलिता ॥
एकत्वे तर्जनी चोर्ध्वा नासास्था श्वासवीक्षणे ॥ १५२ ॥
अधस्तले पार्श्वयुक्ते संयुक्ते विरहे पुनः ॥
वियुक्ते च विधातव्ये शार्ङ्गदेवेन[5] कीर्तिते ॥ १५३ ॥

इति सूचीमुखः ।

---

पताको निम्नमध्यो यः स तु सर्पशिराः करः ॥
देवेभ्यस्तोयदानेऽसावुत्तानोऽधोमुखः पुनः ॥ १५४ ॥
भुजंगमगतौ स स्यादास्फाले करिकुम्भयोः ॥
भुजास्फोटे च मल्लानां नियुद्धादिषु कीर्तितः ॥ १५५ ॥

इति सर्पशिराः ।

॥१४७॥१४८॥१४९॥१५०॥१५१॥१५२॥१५३॥१५४॥१५५॥

---

* 'पताकायामित्यादिश्लोको ग. पुस्तके नास्ति ।

---

१ ख. ग. घ. तु । २ ख. ग. 'ने । उक्तानुक्ता' । ३ ख. ग. 'ष्वेप स्त्री' । ४ च. शास्त्रे । ५ च. शार्ङ्गदे' ।

अस्याङ्गुष्ठो मध्यमाया मध्यपर्वोदरं श्रितः ॥
ऊर्ध्वा कनीयसी यत्र चतुरं तं करं विदुः ॥ १५६ ॥
अन्ये पताकाङ्गुष्ठस्य मध्यमामूलसंस्थितिम् ॥
ईषच्च पृष्ठतो यातां कनिष्ठां चतुरे जगुः ॥ १५७ ॥
नये वदनदेशस्थो युतौ द्वौ मणिबन्धयोः ॥
विनयेऽथ विचारे स्यात्पार्श्वगोऽथ हृदि स्थितः ॥ १५८ ॥
ऊहापोहे च लीलायामुद्वेष्टितयुतः करः ॥
कैतवेऽक्षप्रेरणे च भवेदूर्ध्वतलः समे ॥ १५९ ॥
अङ्गुष्ठमध्यमान्योन्यमर्दनेन तु मार्दवे ॥
चातुर्यवचने त्वेतौ संयुतौ चतुरोदितौ ॥ १६० ॥

इति चतुरः ।

---

सर्पशीर्षकरस्योर्ध्वे यदाऽङ्गुष्ठकनिष्ठिके ॥
मृगशीर्षस्तदा हस्तः स त्वधोवदनो भवेत् ॥ १६१ ॥
अद्येहसांप्रतार्थेषूत्तानोद्यूताक्षपातने ॥
गण्डादिक्षेत्रसंस्थस्तु गण्डादिस्वेदमार्जने ॥ १६२ ॥

इति मृगशीर्षः ।

---

लग्नास्त्रेताग्निसंस्थानास्तर्जन्यङ्गुष्ठमध्यमाः ॥
शेषे यत्रोर्ध्वविरले हंसास्यः सोऽभिधीयते ॥ १६३ ॥

॥ १५६ ॥ १५७ ॥ १५८ ॥ १५९ ॥ १६० ॥ १६१ ॥ १६२ ॥ १६३ ॥

अयं मृदुनि निःसारे श्लक्ष्णेऽल्पे शिथिले लघौ ॥
मर्दितं मथितं क्षिप्तं दधदग्रं विधूनितम् ॥
औचित्याच्च्युतयुक्तं तु कुसुमावचयादिषु ॥ १६४ ॥

हंसास्यहस्तविनियोगे—अयं मृदुनि निःसारे श्लक्ष्णेऽल्पे शिथिले लघौ मर्दितं मथितं क्षिप्तं दधदग्रं विधूनितमिति । अयं हंसास्यो मर्दितमग्रं दधन्मृदुनि निःसारे च युज्यते । मथितमग्रं दधच्छ्लक्ष्णे विनियुज्यते । क्षिप्तमग्रं दधदल्पे विनियुज्यते । विधूनितमग्रं दधच्छिथिले लघौ च विनियुज्यते । एवं योजनीयम् ॥ १६४ ॥

इति हंसवक्त्रः ।

---

१ ङ. °दरे स्थितः । च. °दरं स्थितः । २ ङ. °शस्थौ यु° । ३ च. च लज्जाया° । ४ घ. °द्वेष्टनयु° । ५ ख. ग. घ. ङ. शमे । ६ ख. ग. घ. ङ. °ले स हंसास्योऽभि° । ७ ख. ग. शिशिरे । ८ ख. ग. मलितं । ९ ङ. °च्युतसंयुक्तं कु° । च. च्युतिसंयुक्तं कु° । १० ज. क्षिप्रम° ।

यदि किंचिन्नमन्मूलं तर्जन्याद्यङ्गुलित्रयम् ॥
पताकस्य तदा हस्तं हंसपक्षं प्रचक्षते ॥ १६५ ॥
अयमाचमने कार्यश्चन्दनाद्यनुलेपने ॥
हनुदेशगतस्तु स्याद्दुःखजे हनुधारणे ॥ १६६ ॥

॥ १६५ ॥ १६६ ॥

मण्डलीकृतबाहू तौ महास्तम्भप्रदर्शने ॥
आलिङ्गने च प्रत्यक्षे परोक्षे स्वस्तिकीकृतौ ॥ १६७ ॥

हंसपक्षविनियोगे—**परोक्षे स्वस्तिकीकृताविति** । अप्रत्यक्षे कृत आलिङ्गने स्वस्तिका(की)कृतौ पार्श्वव्यत्यासेनान्योन्यांसपर्यन्तं प्रापितावित्यर्थः ॥ १६७ ॥

रोमाञ्चाद्यनुभावैस्तु रसेष्वेष यथारसम् ॥
अनुभावा रसवशात्कार्या हस्तान्तरेष्वपि ॥ १६८ ॥

**रोमाञ्चेत्यादि** । रोमाञ्चादीनां सात्त्विकत्वेऽप्यनु पश्चाद्भवतीति व्युत्पत्त्याऽनुभावत्वमप्युपपन्नम् । आदिशब्देनानुभावत्वेन प्रसिद्धाः कटाक्षवीक्षणभुजाक्षेपादयो विलासा गृह्यन्ते । यथारसं स्वाभिव्यङ्ग्यं प्रकृतरसमनतिक्रम्येत्यर्थः । रसेषु शृङ्गारादिषु । एष हंसपक्षः । प्रयोज्यो भवतीति शेषः । हंसपक्षोक्तं रसव्यञ्जकत्वं हस्तान्तरेष्वपि द्रष्टव्यमित्याह—**अनुभावा इति** ॥ १६८ ॥

इति हंसपक्षः ।

---

अङ्गुष्ठमध्यमाङ्गुल्यौ श्लिष्टाग्रे तर्जनी मता ॥
यत्रोर्ध्वविरले शेषे स करो भ्रमरो भवेत् ॥ १६९ ॥
ग्रहणे दीर्घनालानां पुष्पाणामयमिष्यते ॥
कर्णपूरे तालपत्रे कण्टकोद्धरणादिषु ॥ १७० ॥

इति भ्रमरः ।

---

यत्राङ्गुष्ठाग्रलग्नाश्च संहताङ्गुलयोऽखिलाः ॥
ऊर्ध्वाश्च मुकुलः स स्यात्पद्मादिमुकुलाकृतौ ॥ १७१ ॥
बलिकर्मणि देवानां पूजने भोजनादिषु ॥
मुहुर्विकास्य प्रकृतिं नीतो दाने त्वरान्विते ॥ १७२ ॥

॥ १६९ ॥ १७० ॥ १७१ ॥ १७२ ॥

---

१ ख. ग. घ. ङ. ततो । २ ख. ग. च. 'स्तिकाकृ' ।

मुखचुम्बे तु कान्तानां संनिधौ विटचुम्बने ॥
कुचकक्षादिदेशस्थः स्यादाच्छुरितके करः ॥ १७३ ॥
यदाऽङ्गुलीपञ्चकेन सशब्दं नखलेखनम् ॥
कुचादौ कामसूत्रज्ञास्तदाऽऽच्छुरितकं विदुः ॥ १७४ ॥
इति मुकुलः ।

पद्मकोशस्य यत्र स्युरङ्गुल्यः पञ्च कुञ्चिताः ॥
ऊर्णनाभः स[1] चौर्येण ग्रहे केशग्रहादिषु ॥ १७५ ॥
शिरःकण्डूयने कार्यश्चिबुकक्षेत्रगौ तु तौ ॥
कार्यौ सस्वस्तिकौ सिंहव्याघ्रादिनखरायुधे ॥ १७६ ॥
इत्यूर्णनाभः ।

अरालाङ्गुष्ठतर्जन्यौ[2] लग्नाग्रे निम्नतां गतः ॥
किंचिच्चेत्तलमध्यः स्यात्तदा संदंश उच्यते ॥ १७७ ॥
स त्रेधा स्यादग्रजश्च मुखजः पार्श्वजः क्रमात् ॥
प्राङ्मुखः संमुखः पार्श्वमुख इत्यस्य लक्षणम् ॥ १७८ ॥
कण्टकोद्धरणे सूक्ष्मकुसुमावचयादिषु ॥
प्रयोक्तव्योऽग्रसंदंशो धिगित्युक्तौ तु रोषतः ॥ १७९ ॥
वृन्तात्पुष्पोद्धृतौ वर्तिशलाकाञ्जनपूरणे ॥
कर्तव्यो मुखसंदंशः संदंशः पार्श्वजः[3] पुनः ॥ १८० ॥
गुणनिक्षेपणे मुक्ताफलानां वेधने तथा ॥
निरूपणे च तत्त्वस्य सद्वितीयोऽथ भाषणे ॥ १८१ ॥
सरोषे वामहस्तेन किंचिदग्रविवर्तनात् ॥
अलक्तकादिनिष्पेषेऽप्येष[4] श्रीशार्ङ्गिणोदितः ॥ १८२ ॥
इति संदंशः ।

भ्रमरस्य तलस्थे चेत्कनिष्ठोपकनिष्ठिके ॥
ताम्रचूडस्तदा हस्तो बालाह्वानेऽथ भर्त्सने[5] ॥ १८३ ॥

॥ १७३ ॥ १७४ ॥ १७५ ॥ १७६ ॥ १७७ ॥ १७८ ॥ १७९ ॥ १८०॥
॥ १८१ ॥ १८२ ॥ १८३ ॥

---

१ ख. स वीर्येण । ग. स वैरेण ग्राहके । २ ख. ग. अनामाङ्गु । ३ च. पार्श्वगः । ४ ङ. °निक्षेपेऽप्ये° । ५ च. तर्जने ।

गीतादितालमाने च[३] शौर्यविश्वासनादिषु ॥
सशब्दच्युतसंदंशः कार्योऽसौ छोटिकोच्यते ॥ १८४ ॥
प्रसारितकनिष्ठस्य मुष्टेर्यत्ताम्रचूडताम् ॥
विनियोगं सहस्रादिसंख्यानिर्देशनेऽस्य च ॥
केऽप्यूचुस्तं तु (स्तत्तु) निःशङ्को नैच्छल्लक्ष्येष्वदर्शनात् ॥१८५॥

इति ताम्रचूडः ।

इति चतुर्विंशतिरसंयुतहस्ताः ।

---

पताकहस्ततलयोः संश्लेषादञ्जलिर्मतः ॥ १८६ ॥
देवतागुरुविप्राणां नमस्कारे[४]ष्वयं क्रमात् ॥
कार्यः शिरोमुखोरस्थो नृभिः स्त्रीभिर्यथेष्टतः ॥ १८७ ॥

॥ १८४ ॥ १८५ ॥ १८६ ॥ १८७ ॥

इत्यञ्जलिः ।

---

कपोतोऽसौ करौ यत्र श्लिष्टमूलाग्रपार्श्वकौ ॥
अस्य कूर्मक इत्यन्यां संज्ञां हस्तविदो विदुः ॥ १८८ ॥
प्रणामे गुरुसंभाषे विनयाङ्गीकृ[५]तौ त्वयम् ॥
प्राङ्मुखैः सशिरःकम्पः स्त्रीकापुरुषयोर्भ[६]वेत् ॥ १८९ ॥

संयुतहस्तेषु कपोतलक्षणे—कपोतोऽसौ करौ यत्र श्लिष्टमूलाग्रपार्श्वकाविति । श्लिष्टमूलाग्रपार्श्वकाविति विशेषकथनात्तलयोर्विश्लिष्टत्वं गम्यते । तेनाञ्जलितोऽस्य वैलक्षण्यं द्रष्टव्यम् ॥ १८८ ॥ १८९ ॥

इति कपोतः ।

---

अन्योन्यस्यान्तरैर्यत्राङ्गुल्यो निःसृत्य हस्तयोः ॥
अन्तर्बहिश्च दृश्यन्ते कर्कटः सोऽभिधीयते ॥ १९० ॥

॥ १९० ॥

अन्तःस्थिताङ्गुलिः कार्यश्चिन्तायामथ जृम्भणे ॥
ऊर्ध्वे पार्श्वेऽग्रतो वा स्यात्पराङ्मुखतलाङ्गुलिः ॥ १९१ ॥

---

१ ख. ग. च शौर्यवि° । २ च. °शनादिषु । के° । ३ च. °रेषु च क्र° । ४ ङ. °कृते त्व° । च. °कृतेष्वय° । ५ घ. ङ. °खः शिशिरे क° । ६ ख. ग. °र्भये । इ° ।

कर्कटविनियोगे—पराङ्मुखतलाङ्गुलिरिति । अत्र हस्तयोः पराङ्मुखतलाङ्गुलित्वं परस्परापेक्षयाऽभिनेत्रपेक्षया च द्रष्टव्यम् । बृहद्देहे स्वसंमुख इत्यत्र तु [स्व]शब्दोपादानादभिनेतृसंमुख[त्व]मेव ॥ १९१ ॥

अङ्गानां मोटने चाथ बृहद्देहे स्वसंमुखः ॥
जठरक्षेत्रगः[1] पृष्ठे त्वङ्गुलीनां हनुं दधत् ॥ १९२ ॥
खेदे च संकुचत्किंचिदन्योन्याभिमुखाङ्गुलिः ॥
शङ्खस्य धारणे सोऽयं जृम्भादौ बहिरङ्गुलिः ॥ १९३ ॥
इति कर्कटः ।

---

एकस्य मणिबन्धेऽन्यमणिबन्धस्थितौ करौ ॥
देहस्य वामपार्श्वस्थावुत्तानौ स्वस्तिको मतः ॥ १९४ ॥
अत्रारालौ पताकौ वा[2]ऽभिनये[3] वशगौ करौ ॥
विच्युतः स्वस्तिकः स्त्रीभिरेवमस्तीति[4] भाषणे ॥
गगने सागरादौ च विस्तीर्णे संप्रयुज्यते ॥ १९५ ॥
इति स्वस्तिकः ।

---

लम्बमानौ पताकौ तु श्लथांसौ शिथिलाङ्गुली ॥ १९६ ॥
दोलो भवेदसौ व्याधौ विषादे मदमूर्छयोः ॥
संभ्रमादौ यथायोगं स्तब्धो वा पार्श्वदोलितः ॥ १९७ ॥
इति दोलः ।

---

सर्पशीर्षो मिलद्बाह्यपार्श्वः पुष्पपुटो भवेत् ॥
धान्यपुष्पफलादीनामपां च ग्रहणेऽर्पणे ॥
कार्यः पुष्पाञ्जलौ चैष प्रोक्तः सोढलसूनुना ॥ १९८ ॥
इति पुष्पपुटः ।

---

अन्योन्यस्कन्धदेशस्थावरालौ स्वस्तिकीकृतौ ॥
स्वसंमुखौ च विततावुत्सङ्गो गीयते करः ॥ १९९ ॥

॥ १९२ ॥ १९३ ॥ १९४ ॥ १९५ ॥ १९६ ॥ १९७ ॥ १९८ ॥ १९९ ॥

---

१ ख. ग. ज. °ठरं क्षे° । च. °ठरः क्षे° । २ ख. ग. वा विन° । ३ घ. ङ. च. °भिनेयव° । ४ घ. ङ. च. °मस्त्विति ।

देहदक्षिणभागस्थं स्वस्तिकं केचिदूचिरे ॥
अधस्तलत्वमप्यन्येऽन्योन्यकक्षानुवेशिनीः ॥ २०० ॥
अङ्गुलीः करयोः पृष्ठद्वयं पार्श्वमुखं विदुः ॥
करावरालयोः स्थाने सर्पशीर्षावितीतरे ॥ २०१ ॥
अतिप्रयत्नसाध्येऽर्थे शीतालिङ्गनयोरपि ॥
प्रसादनानङ्गीकारे लज्जादौ चैव योषिताम् ॥ २०२ ॥

इत्युत्सङ्गः ।

---

खटकामुखयोः पाण्योः स्वस्तिके मणिबन्धने ॥
अन्योन्याभिमुखत्वे वा खटकावर्धमानकः ॥ २०३ ॥

॥ २०० ॥ २०१ ॥ २०२ ॥ २०३ ॥

ताम्बूलग्रहणादौ स्यात्कामिनां प्रथमे मते ॥
पुष्पाणां ग्रन्थने सत्यभाषणादौ मतान्तरे ॥ २०४ ॥

खटकावर्धमानस्य विनियोगे—**प्रथमे मत इति** । मणिबन्धस्वस्तिकत्वपक्ष इत्यर्थः । **मतान्तर इति** । अन्योन्यसंमुखत्वपक्ष इत्यर्थः ॥ २०४ ॥

इति खटकावर्धमानकः ।

---

स्कन्धकूर्परयोर्मध्यमन्योन्यस्य यदा करौ ॥
दधाते सर्पशिरसौ गजदन्तस्तदोदितः ॥ २०५ ॥
आकुञ्चत्कूर्परौ स्कन्धदेशस्थौ सर्पशीर्षकौ ॥
अन्योन्याभिमुखौ लक्ष्म गजदन्ते जगुः परे ॥ २०६ ॥
एषे शैलशिलोत्पाटे गतागतयुतः करः ॥ २०७ ॥
विवाहस्थाननयने स्याद्वधूवरयोरयम् ॥
स्तम्भग्रहेऽतिभारे च श्रीसोढलसुतोदितः ॥ २०८ ॥

गजदन्तहस्तविनियोग एष इति प्रथमलक्षणलक्षितो निर्दिश्यते । अतः शैलशिलोत्पाटादिषु विनियोगास्तस्यैवेति ज्ञातव्यम् । अत्राभिनयहस्तानां भरताद्यु(*क्तासमस्तविनियोगाकथनं नृत्तेऽभिनयहस्तानामप्राधान्यज्ञापनार्थम् । अथ नृत्ते(त्त)हस्तानामपि चतुरस्रादीनां स्वगाद्याकर्षणाद)भिनयदिक्प्रदर्शनं "सूच्यन्तेऽन्ये साहचर्यात्" इति पूर्वो-

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. ग. पुस्तकयोस्त्रुटितः ।

---

१ घ. 'तीरिते । अ' । २ ग. 'र्थे भीता' । ३ ग. ङ. 'न्धगे । अ' । ४ ङ. मतः । ५ ङ. 'ष हस्तः शि' ।

क्तस्यार्थस्य निर्वाहार्थमभिनये नृत्तस्य संनिपत्योपकारकाङ्गत्वं दर्शयितुं चेति मन्तव्यम् ॥ २०५ ॥ २०६ ॥ २०७ ॥ २०८ ॥

इति गजदन्तः ।

---

वक्षसोऽभिमुखौ सन्तौ शुकतुण्डावधोमुखौ ॥
कृत्वा नीतावधो यत्र साऽवहित्थोऽभिधीयते ॥
दौर्बल्यौत्सुक्यनिःश्वासगात्रकार्श्येष्वसौ भवेत् ॥ २०९ ॥

इत्यवहित्थः ।

---

मुकुलस्य कपित्थेन वेष्टनान्निषधो भवेत् ॥ २१० ॥
शास्त्रार्थसम्यग्ग्रहणे स स्यान्निष्पेषणे तथा ॥
सम्यक्च स्थापिते तथ्यमिदमित्यपि भाषणे ॥ २११ ॥
प्रथमं गजदन्तं तु निषधं केचिदूचिरे ॥
स शौर्यधैर्यगाम्भीर्यगर्वादिषु मतस्तथा ॥ २१२ ॥

इति निषधः ।

---

उपर्युपरि विन्यस्तौ यत्रान्योन्यमधोमुखौ ॥
ऊर्ध्वाङ्गुष्ठौ पताकाख्यौ करौ स मकरः करः ॥ २१३ ॥
स नक्रमकरादीनां क्रव्याद्द्वीपिनामपि ॥
सिंहादीनामभिनये नदीपूरस्य चेष्यते ॥ २१४ ॥

इति मकरः ।

---

हंसपक्षौ स्वस्तिकत्वं प्राप्तौ यदि पराङ्मुखौ ॥ २१५ ॥
वर्धमानस्तदा हस्तः कपाटोद्घाटने भवेत् ॥
विच्युतः स्वस्तिकस्तद्वद्वक्षःस्थलविदारणे ॥ २१६ ॥
सर्पशीर्षो हंसपक्षस्थानेऽस्मिन्नपरे जगुः ॥
अपरेऽभ्युपजग्मुस्तं स्वस्तिकेन विना कृतम् ॥ २१७ ॥

इति वर्धमानः ।

इति त्रयोदशसंयुतहस्ताः ।

---

॥ २०९ ॥ २१० ॥ २११ ॥ २१२ ॥ २१३ ॥ २१४ ॥ २१५ ॥ २१६ ॥ २१७ ॥

पुरोमुखौ समस्कन्धकूर्परौ खटकामुखौ ॥ २१८ ॥

नृत्तहस्तेषु चतुरस्रयोर्लक्षणे—पुरोमुखाविति । प्रयोक्ता यद्दिङ्मुख(खो) हस्तयोरपि तद्दिङ्मुखत्वमेव पुरोमुखत्वं द्रष्टव्यम् । न त्वे(त्वि)न्द्रदिङ्मुखत्वं प्रयोक्तृसंमुखत्वं वा ॥ २१८ ॥

स्थितौ वक्षःपुरोदेशे वक्षसोऽष्टाङ्गुलान्तरे ॥
चतुरस्राविति प्रोक्तौ स्रगाद्याकर्षणे करौ ॥ २१९ ॥

इति चतुरस्रौ ।

---

चतुरस्रीकृत्य पाण्योः कृतयोर्हंसपक्षयोः ॥
उत्तानोऽधो व्रजत्येको वक्षोऽन्यो यात्यधोमुखः ॥ २२० ॥
यदा स्यातां तदोद्वृत्तौ तालवृन्तनिरूपणे ॥
तावेव तालवृन्ताख्याववदन्नृत्तकोविदाः ॥ २२१ ॥

॥ २१९ ॥ २२० ॥ २२१ ॥

प्राङ्मुखौ हंसपक्षाख्यौ व्यावृत्तपरिवर्तितौ ॥
जयशब्दे प्रयोक्तव्यावुद्वृत्तौ मेनिरे परे ॥ २२२ ॥

इत्युद्वृत्तौ ।

---

उद्वृत्तहस्तयोर्द्वितीयलक्षणे—व्यावृत्तपरिवर्तिताविति । व्यावृत्तोऽन्तर्वर्तितः, परिवर्तितो बहिर्वर्तित इत्यर्थः ॥ २२२ ॥

भूत्वोद्वृत्तौ स्थितौ त्र्यस्रौ हंसपक्षौ स्वपार्श्वयोः ॥
जातौ मिथः संमुखस्थतलौ तलमुखौ मतौ ॥
बुधैरभिदधाते तौ मधुरे मर्दलध्वनौ ॥ २२३ ॥

इति तलमुखौ ।

---

अश्लिष्टहंसपक्षाभ्यां स्वस्तिकस्वस्तिकौ करौ ॥ २२४ ॥

इति स्वस्तिकौ ।

---

॥ २२३ ॥ २२४ ॥

---

१ च. 'व्याद्वृदधृत्तौ'। २ घ. 'स्तिकः स्व'।

विप्रकीर्णौ तु तावेव सहसा स्वस्तिके च्युते ॥
नीचाग्रावुन्नताग्रौ वा कुचाभ्यां पुरतः स्थितौ ॥
पराङ्मुखौ हंसपक्षौ विप्रकीर्णौ जगुः परे ॥ २२५ ॥

॥ २२५ ॥

इति विप्रकीर्णौ ।

---

पताकस्वस्तिकं कृत्वा व्या[1]वृत्तपरिवर्तने ॥
ऊर्ध्वास्यौ पद्मकोशौ च व्यावृत्तपरिवर्तने ॥ २२६ ॥
क्रमात्कृत्वा यत्र वाममुत्तानारालमाचरेत् ॥
खटकामुखमन्यं वाऽधोमुखं चतुरस्रतः ॥ २२७ ॥
स्वस्तिकेनाथवा यद्वा कृत्वाऽरालौ करौ[2] कृतौ ॥
खटकामुखसंज्ञौ तावरालखटकामुखौ ॥ २२८ ॥

अरालखटकामुखयोर्लक्षणे—**पताकस्वस्तिकं कृत्वेति** । पताकहस्तयोः स्वस्तिकमित्यनेन मणिबन्धकृतः स्वस्तिको गम्यते । विशेषानभिधानात् । व्या[3]वृत्तपरिवर्तने इत्यत्र कृत्वेत्यनुषञ्जनीयम् । ततः पद्मकोशाविति द्विवचनोपादानेन स्वस्तिकत्वं तयोर्नेष्यत इति ज्ञायते । अतस्तयोर्व्यावृत्तपरिवर्तने क्रमात्कृत्वेत्यन्वयः । अत्रापि पताकस्वस्तिकवदेव पद्मकोशयोरपि स्वस्तिकं कृत्वा व्यावृत्तपरिवतर्नयोः क्रियमाणयोर्न चारुतातिशय इति मत्वाऽभिनवगुप्तपादैर्नलिनीपद्मकोशोक्तवर्तना कर्तव्येत्यवधारितम् । सा च यथा—

"अन्योन्यसंमुखौ सन्तौ संश्लिष्टमणिबन्धकौ ।
पद्मकोशौ पृथग्व्या(क्प्रा)प्तौ व्यावृत्तिपरिवर्तने ॥
नलिनीपद्मकोशौ स्तः"

इति वक्ष्यमाणनलिनीपद्मकोशलक्षणानुसारेणात्र पद्मकोशयोरा(र्व्या)वृत्तिपरिवर्तने कर्तव्ये इति नाट्याचार्यसंप्रदायोऽवगन्तव्यः । किंचात्र पद्मकोशयोः क्रियायां क्रमादित्युच्यते तत्र पताकस्वस्तिकस्य पद्मकोशयोश्च वचनक्रमेणैव क्रियाक्रमस्यावगतत्वात्तदर्थमनर्थकं क्रमग्रहणं पद्मकोशयोर्व्यावृत्तिपरिवर्तनक्रियाक्रमस्यापि पाठक्रमेणैवावगतत्वात्तदर्थमप्यनर्थकं सदूर्ध्वस्थयोः पद्मकोशयोरेकस्य व्यावृत्तिमितरस्य परिवृत्तिं तथा परिवर्तितस्य व्यावृत्तिमव्यावर्तितस्य परिवर्तनं च क्रमात्कृत्वैतज्ज्ञापयतीति ग्रन्थकाराभिप्रायो वेदितव्यः ॥ २२६ ॥ २२७ ॥ २२८ ॥

---

१ घ. ङ. 'वृत्तिप' । २ ङ. करावुभौ । ३ ख. ग. 'वृत्तिप' ।

वणिजां सचिवादीनां वितर्केऽसौ प्रयुज्यते ॥
अन्ये त्वाहुरुरोग्रस्थः प्राङ्मुखः खटकामुखः ॥ २२९ ॥
अरालः प्रोन्नताग्रोऽन्यस्तिर्यगीषत्प्रसारितः ॥
पार्श्वव्यत्ययतो यद्वा स्वपार्श्वे चेत्करौ स्थितौ ॥
तलान्तरौ तदा स्यातामरालखटकामुखौ ॥ २३० ॥

इत्यरालखटकामुखौ ।

---

भुजाग्रयोः कूर्परयोरंसयोः सविलासयोः ॥
सतोः पताकौ व्यावृत्तिं विधाय भवतो द्रुतम् ॥
अधस्तलौ चेदाविद्धवक्त्रौ हस्तौ तदोदितौ ॥ २३१ ॥

॥ २२९ ॥ २३० ॥ २३१ ॥

विक्षेपवलने प्राहुः प्रयोगं कृतिनस्तयोः ॥ २३२ ॥

आविद्धवक्त्रयोर्विनियोगे—विक्षेपवलन इति । विक्षेपः संभ्रमः । तेन वलनं वक्रतया गमनम् । तस्मिन् ॥ २३२ ॥

इत्याविद्धवक्त्रौ ।

---

मध्यमासंगताङ्गुष्ठौ चतुरस्रप्रदेशगौ ॥
सर्पशीर्षौ क्रमात्तिर्यक्प्रसरन्तौ प्रदेशिनीम् ॥
बहिः प्रसारितां धत्तो यदा सूचीमुखौ तदा ॥ २३३ ॥

सूच्यास्ययोर्लक्षणे—चतुरस्रप्रदेशगाविति । अत्र चतुरस्रयोः प्रदेशो वक्षसोऽष्टाङ्गुलान्तरो वक्षःपुरोदेशः । तत्र गत इ(तावि)ति तथोक्तौ । सर्पशीर्ष(र्षौ?)क्रमात्स्वयं तिर्यक्प्रसरन्तौ बहिः प्रसारितां प्रदेशिनीं यदा धत्तस्तदा सूचीमुखावित्यन्वयः ॥२३३॥

पताकौ प्रथमं कार्यौ व्यावृत्तपरिवर्तितौ ॥
भ्रान्त्वा प्रसारणं चात्र विशेषं केचिदूचिरे ॥ २३४ ॥
मध्यप्रसारिताङ्गुष्ठौ सर्पशीर्षाकृती करौ ॥
रेचितस्वस्तिकौ केचिदूचुः सूच्यास्यलक्षणम् ॥ २३५ ॥

इति सूच्यास्यौ ।

---

प्रसारितोत्तानेतलावुच्येते रेचितौ करौ ॥
अथवा रेचितौ प्रोक्तौ हंसपक्षौ द्रुतभ्रमौ ॥ २३६ ॥

॥ २३४ ॥ २३५ ॥ २३६ ॥

---

१ ङ. चाध । २ ख. ग. °नकरावुद्धृतौ रे° ।

यद्वा रेचितयोर्लक्ष्म लक्षणे मिलिते इमे ॥
प्रयोज्यौ तौ नृसिंहस्य दैत्यवक्षोविदारणे ॥ २३७ ॥
इति रेचितौ ।

---

एकेन चतुरस्रेण तौ स्यातामर्धरेचितौ ॥ २३८ ॥
इत्यर्धरेचितौ ।

---

रेचितयोर्लक्षणे—यद्वा रेचितयोर्लक्ष्म लक्षणे मिलिते इमे इति। इमे पूर्वोक्ते द्वे लक्षणे मिलिते सती रेचितयोर्लक्ष्मेति तृतीयं लक्षणम्। तौ तृतीयलक्षणलक्षितौ रेचितौ। नृसिंहस्य दैत्यवक्षोविदारणे प्रयोज्याविति तयोरेव विनियोगः ॥ २३७ ॥ २३८ ॥

उत्तानाधोमुखत्वाभ्यां क्रमेण स्कन्धदेशतः ॥
पताकौ यदि निष्क्रम्य नितम्बक्षेत्रवर्तिनौ ॥
रेचकं[2] कुरुतो हस्तौ नितम्बावुदितौ तदा ॥ २३९ ॥
इति नितम्बौ ।

---

बाहू व्यावर्तितेनोर्ध्वे प्रसार्य परिवर्तितः[3] ॥
स्वस्तिकाकृतितां नीतौ पताकौ पल्लवौ मतौ ॥ २४० ॥
शिथिलौ त्रिपताकौ तु[4] केचिदत्र प्रचक्षते ॥
नतोन्नतौ पद्मकोशौ शिथिलौ मणिबन्धयोः ॥ २४१ ॥
स्वपार्श्वयोः पुरस्ताद्वा पल्लवाववदन्परे ॥
पद्मकोशकरस्थाने पताकावपरे जगुः ॥ २४२ ॥

नितम्बयोर्लक्षणे—उत्तानाधोमुखत्वाभ्यां क्रमेणेति। उत्तानाधोमुखत्वे क्रमेण भवतः। ए(नै)ककालमेवेति मन्तव्यम्। अन्यथा द्वयोरुत्तानत्वं द्वयोरप्यधोमुखत्वं ताभ्यामित्युक्त(क्तं)क्रमेणेति पदमनर्थकं स्यात्। हस्तयोस्तथाभावस्य विना क्रमेणा(ण?)संभवात्। एवं हि सार्थकत्वं भवति। पूर्वं यस्योत्तानत्वं भवति तस्याधोमुखत्वं यस्याधोमुखत्वं तस्योत्तानत्वमिति [*ज्ञायमाने युगपदेवोत्ता]नाधोमुखत्वे क्रमेण संभवतः। न हस्तयोर्यौगपद्येनोत्तानत्वमधोमुखत्वं चेति व्यवच्छेद्यस्य संभवात्। किंच क्रियावैचित्र्याच्छोभातिशयलाभोऽपि भवति ॥ २३९ ॥ २४० ॥ २४१ ॥ २४२ ॥

इति पल्लवौ ।

---

* "ज्ञायमान उत्ता" इति भाति ।

---

१ च. लक्ष्मणी । २ ख. ग. रेचितं । ३ ङ. परिवर्तितौ । ४ ख. ग. च ।

पार्श्वदेशोत्थितौ पार्श्वमस्पृशन्तौ गतौ शिरः ॥
नितम्बवत्केशदेशान्निष्क्रम्य च पुनः पुनः ॥
पृथग्गतागतौ यौ तौ केशबन्धौ करौ मतौ ॥ २४३ ॥

केशबन्धयोर्लक्षणे—**नितम्बवदि**त्यतिदेशेनात्रापि क्रमेणोत्तानाधोमुखत्वाभ्यामित्येतदनुसंधेयम् । एवं पार्श्वदेशाच्छिरःपर्यन्तं गतौ तथा । **केशदेशान्निष्क्रम्य च पुनः पुनः पृथग्गतागताविति** । यदैकः केशदेशान्निर्गच्छति तदाऽन्यः केशदेशं प्रत्यागच्छति । एवं पौनःपुन्येन पृथग्गतागतौ यौ हस्तौ तौ केशबन्धाविति संमतौ ॥२४३॥

इति केशबन्धौ ।

---

कपोलांसललाटानां क्षेत्रे त्वन्यतमे स्थितौ ॥ २४४ ॥
त्रिपताकौ करौ किंचित्तिर्यञ्चौ संमुखौ मिथः ॥
अंसकूर्परयोः किंचिच्चलतोरूर्ध्वतस्तलौ ॥ २४५ ॥
क्षणं भूत्वा प्रचलितौ ज्ञेयावुत्तानवञ्चितौ ॥
अंसकूर्परयोः किंचित्पतनं मन्वते परे ॥ २४६ ॥

उत्तानवञ्चितयोर्लक्षणे—ऊर्ध्वतस्तलावित्यत्रोत्तानत्वं प्रचलितावित्यत्र वञ्चितत्वं च द्रष्टव्यम् ॥ २४४ ॥ २४५ ॥ २४६ ॥

इत्युत्तानवञ्चितौ ।

---

पताकौ दोलितौ तिर्यक्प्रसृतौ तौ लताकरौ ॥
अनयोः करयोः केशबन्धयोश्च नितम्बयोः ॥
त्रिपताकाकृतिं केचिदाचार्याः प्रतिजानते ॥ २४७ ॥

॥ २४७ ॥

इति लताकरौ ।

---

स्पृशेत्करिकराकारः पार्श्वयोश्चेल्लताकरः[3] ॥
उन्नतो दोलितोऽन्यस्तु कर्णस्थः खटकामुखः ॥ २४८ ॥
त्रिपताकोऽथवा यत्र करिहस्तममुं विदुः ॥
नन्वन्यहस्तवत्कस्मान्नात्र द्विवचनं कृतम् ॥ २४९ ॥

करिहस्तस्य लक्षणे—**स्पृशत्करिकराकार इति**। कारिणः करः करिकरः । स्पर्शश्चासौ करिकरश्च तस्याऽऽकार इवाऽऽकारो यस्येति बहुव्रीहिः । यदा करी स्वकरेण

---

१ च. 'थगुत्तानितौ'। २ ङ. 'शन्करि'। ३ च. 'योश्च लता'।

पार्श्वस्थितद्रुमादि स्पृशति तदा पार्श्वप्रसारितस्य तत्करस्य य आकारस्तमनुकुर्वाण इत्यर्थः । अत्र चतुरस्रादयो नृत्तहस्ताश्चतुरस्राविव्येवं द्विवचनेनैवोद्दिष्टाः । तथैव लक्ष्यन्ते लक्षयिष्यन्ते च नृत्तहस्तत्वाविशेषेऽप्ययं करिहस्ताविति नोद्दिष्टः । किंतु करिहस्तश्चेत्येकवचनेनोद्दिष्टः । तथैव करिहस्तममुं विदुरिति लक्ष्यते च । तत्कथमुपपद्यत इत्यभिप्रायेण पृच्छति—**नन्वन्यहस्तवदिति** ॥ २४८ ॥ २४९ ॥

अत्र द्विवचनाश्रयणे सजातीयार्थवाचकयोरेकरूपयोः शब्दयोरेकशेषश्चतुरस्रावित्यादिषु निमित्तत्वेन स्वीकृतः । तथा विजातीयार्थवाचकयोर्भिन्नरूपयोः शब्दयोस्तु द्वंद्वोऽरालखटकामुखावित्यत्र निमितत्वेन स्वीकृतः । करिहस्त इत्यत्र तु द्वंद्वैकशेषयोरेकतरासंभवाद्विवचनानुपपत्तौ सत्यामेकवचनमेव सम्यगाश्रितमिति प्रतिपादयिष्यन्परिहरति—

**ब्रूमो यत्रैकशब्देन सजातीयावुभौ करौ ॥**
**उक्तौ तत्र द्विवचनं घटवच्चतुरस्रवत् ॥ २५० ॥**

**ब्रूमो यत्रेत्यादिना** । सजातीयौ चतुरस्रत्वाद्याकारेण समानजातीयावुभौ करावेकशब्देन चतुरस्रादिकशब्देन यत्रोक्तौ तत्र घटवत् । घटश्च प(घ)टश्च घटादावि(टावि)ति यथा चतुरस्रवत् । चतुरस्रश्च चतुरस्रश्च चतुरस्राविति यथा तथोन्नृत्तादिषु द्विवचनमेकशेषेण कृतमित्यर्थः ॥ २९० ॥

**भिन्नशब्दौ विजातीयौ यौ वा द्विवचनं तयोः ॥**
**यथा घटपटौ स्यातामरालखटकामुखौ ॥ २५१ ॥**

यौ वा करौ विजातीयौ विविधजातीयौ भिन्नशब्दौ भिन्नशब्दवाच्यावित्यर्थः । तयोः करयोर्घटपटौ यथा स्याताम(तां तथाऽ)रालखटकामुखाविति द्विवचनं द्वंद्वेन भवेदिति भावः ॥ २९१ ॥

प्रकृते द्वंद्वैकशेषयोरभावं दर्शयितुमाह—

**करिहस्ताकृतिस्त्वेको दृश्यतेऽत्र लताकरः ॥**
**इतिकर्तव्यता त्वन्या स्यादेकवचनं ततः ॥ २५२ ॥**

**करिहस्ताकृतिस्त्वेक इति** । द्वितीयस्य करस्य क उपयोग इत्याकाङ्क्षायामाह—**इतिकर्तव्यता त्वन्येति** । अन्येति क्रियापरत्वेन स्त्रीलिङ्गत्वम् । अन्या द्वितीया करक्रिया । इतिकर्तव्यताऽङ्गमित्यर्थः । एकस्मिन्करे करिहस्ताकृतौ कृते सति ततो द्वितीयस्य खटकामुखस्य त्रिपताकस्य वा कर्णाभ्यर्णस्थितिः करिकर्णानुकरणेन करिहस्तस्यैवोपकारिकेति तदङ्गत्वम् । ततः कारणादेकवचनमेव स्यादिति निगमनम् ॥२९२॥

१ ख. ग. 'स्तत्वेऽपि' । २ च. 'नं पट' । ३ ख. ग. 'दङ्कत्व' ।

न चात्र करिहस्तत्वमेकैकत्र घटत्ववत् ॥
न चात्रैकः करी हस्तः(स्त) शब्दवाच्योऽपरः करः ॥
नैकशेषो न च द्वंद्वो यतो द्विवचनं भवेत् ॥ २५३ ॥

एवमनभ्युपगच्छन्तं प्रत्याह—न चात्रेति ॥ २५३ ॥

आश्रितं चैकवचनं मुनिना सर्वदर्शिना ॥ २५४ ॥

प्रतिपादितेऽर्थे संमतिं दर्शयति[2]—आश्रितमिति । यथाऽऽह मुनिः—
"समुन्नतो लताहस्तः पश्चात्पार्श्वविलोलितः ।
त्रिपताको[3]ऽपरः कर्णे करिहस्तः प्रकीर्तितः " इति ॥ २५४ ॥

इति करिहस्तः ।

---

त्रिपताकौ कटीशीर्षे न्यस्ताग्रौ पक्षवञ्चितौ ॥ २५५ ॥

॥ २५५ ॥

इति पक्षवञ्चितौ ।

---

तौ पार्श्वाभिमुखाग्रौ तु पक्षप्रद्योतकौ मतौ ॥
उत्तानौ केचिदन्ये तूर्ध्वाङ्गुली च पराङ्मुखौ ॥
हस्तौ भणन्ति शोभेते चैतौ प्राग्भ्यामनन्तरम् ॥ २५६ ॥

पक्षप्रद्योतकयोर्लक्षणे—शोभेते चैतौ प्राग्भ्यामनन्तरमिति । एताविल्यूर्ध्वाङ्गुली च पराङ्मुखाविति तृतीयपक्षोक्तौ । प्राग्भ्यामित्युत्तानौ केव(चि)दिति द्वितीयपक्षोक्ताभ्याम् । अत्र चकारः प्राग्भ्यामित्यनेन प्रथमपक्षोक्तयोः समुच्चयार्थं योजनीयः प्राग्न्यां(ग्भ्यां) चेति । तेनायमर्थः । कटीशीर्षन्यस्ताग्रौ त्रिपताकौ प्रथमं पार्श्वाभिमुखाग्रौ कृत्वा तदनन्तरमुत्तानौ कृत्वा ततः परमूर्ध्वाङ्गुली पराङ्मुखौ च कृतौ चेच्छोभातिशयो भवतीति ॥ २५६ ॥

इति पक्षप्रद्योतकौ ।

---

उपवक्षस्थलं हंसपक्षे गच्छति पार्श्वतः ॥
सविलासोऽपरस्तिर्यक्प्रसृतश्चेल्लताकरः ॥ २५७ ॥
क्रमादङ्गान्तरेणैवं दण्डपक्षौ तदा करौ ॥
हस्तप्रसारणं त्वत्र युगपन्मेनिरेऽपरे ॥ २५८ ॥

इति दण्डपक्षौ ।

---

१ ख. ग. च. 'कत्वघ' । २ ख. ग. 'ति–स्वाश्रि' । ३ ख. ग. 'को पराक' ।

अधोमुखौ कटिक्षेत्रे स्थित्वा न्यञ्चितकूर्परौ ॥ २५९ ॥
पताकौ तिर्यगूर्ध्वे द्राग्गतौ गरुडपक्षकौ ॥
त्रिपताकाविमौ कैश्चिदुक्तौ न तु मुनेर्मतौ ॥ २६० ॥

इति गरुडपक्षकौ ।

---

भालस्थलमुरोदेशात्प्राप्य तत्पार्श्वमागतौ ॥
मण्डलभ्रान्तिविततावूर्ध्वमण्डलिनौ करौ ॥ २६१ ॥

ऊर्ध्वमण्डलिनोर्लक्षणे—उरोदेशात्पार्श्वं प्राप्य भालस्थलमागताविल्यन्वयः । अत्र वक्षोदेशाद्व्यावर्तनकरणपूर्वकं[3] स्वं स्वं पार्श्वं प्राप्य ललाटप्रदेशमागतौ । ततो मण्डलवद्भ्रान्त्या प्रसारितावूर्ध्वमण्डलिनाविति केषांचिन्मतम् ॥ २५७ ॥ २५८ ॥ २५९ ॥ ॥ २६० ॥ २६१ ॥

ललाटप्राप्तिपर्यन्तमन्ये लक्ष्मानयोर्जगुः ॥
चक्रवर्तनिके[4]त्येतौ प्रसिद्धौ नृत्तवेदिनाम् ॥ २६२ ॥

अन्ये त्वनयोरूर्ध्वमण्डलिनोर्ललाटप्राप्तिपर्यन्तं लक्ष्म विदु(जगु)रिति । तावतैवोर्ध्वमण्डलित्वस्य च निष्पन्नत्वादिति तेषामभिप्रायः । मण्डलभ्रान्तिविततत्वं *पार्श्वमण्डलिनोः स्वरूपमिति च तेषां मतम् । यत ऊर्ध्वमण्डलिनोरे(नावे)व चक्रवर्तनिकेति नृत्तवेदिनां प्रसिद्धौ भवतः ॥ २६२ ॥

इत्यूर्ध्वमण्डलिनौ ।

---

तौ पताकाकृती पार्श्वन्यस्तावन्योन्यसंमुखौ ॥
पार्श्वमण्डलिनावुक्तावन्ये त्वाहुः स्वपार्श्वयोः ॥ २६३ ॥
आविद्धभ्रामितभुजौ पार्श्वमण्डलिनाविति ॥
कक्षवर्तनिकेत्येतौ मन्वते नृत्तवेदिनः ॥ २६४ ॥

पार्श्वमण्डलिनोर्द्वितीयलक्षणे—आविद्धभ्रामितभुजाविति । अत्राऽऽविद्ध[5]शब्देनाऽऽवेष्टितकरणपूर्विका वर्तना गम्यते । [6]तयोः स्वपार्श्वयोर्भ्रामितभुजावित्यनेन पार्श्वमण्डलिनोरन्वर्थता दर्शिता भवति ॥ २६३ ॥ २६४ ॥

इति पार्श्वमण्डलिनौ ।

---

* अत्रोर्ध्वमण्डलिनोरित्यपेक्षितमिति भाति ।

---

१ ङ. °भ्रान्तवि° । २ ङ. °तादूर्ध्वं° । ३ ख. ग. °कं स्वस्वपा° । ४ ङ.° के त्वेतौ । ५ ख. ग. °द्धत्वश° । ६ ख. ग. तयोश्च पा° ।

युगपत्करणे कृत्वोद्वेष्टितं चापवेष्टितम् ॥
यातौ स्वपार्श्वे वक्षस्तो भ्रान्त्या मण्डलवत्क्रमात् ॥ २६५ ॥
वक्षोऽभिव्युत्क्रमात्प्राप्तावुरोमण्डलिनौ करौ ॥
अनयोर्भ्रमणं प्राहुरन्ये वक्षस्थलस्थयोः ॥ २६६ ॥
उरोवर्तनिकात्वेन प्रसिद्धौ तद्विदामिमौ ॥
हंसपक्षौ परे प्राहुरूर्ध्वमण्डलिषु त्रिषु ॥ २६७ ॥

उरोमण्डलिनोर्लक्षणे—उद्वेष्टितमपवेष्टितं च करणे युगपत्कृत्वेति । एकेन हस्तेनोद्वेष्टितमन्येनापवेष्टितं च कृतं चेत्करणद्वयस्य यौगपद्यं संभवति । तथा चैकस्याऽऽगमनेऽन्यस्य गमनं कर्तव्यमिति भिन्नरूपाभ्यां वर्तनाभ्यां वक्षस्तो वक्षःप्रदेशात्स्वपार्श्वयोः (र्श्वे)पार्श्वदेशे(शौ) प्रति मण्डलवद्भ्रान्त्या मण्डलाकारभ्रमणेन यातौ गतौ ततो वक्षो वक्षःस्थलमाभिमुख्येन व्युत्क्रमादुपक्रान्तं क्रममुल्लङ्घ्य [प्राप्तौ] । अयमर्थः । उद्वेष्टोपक्रमेण स्वपार्श्वगतो हस्त आवेष्टितेन वक्षः प्राप्नोति । तथाऽऽवेष्टितोपक्रमेण स्वपार्श्वगतश्चोद्वेष्टितेन वक्षः प्राप्नोतीति । हंसपक्षौ परे प्राहुरित्यनेन प्रथमं पताकौ[3]विति मन्तव्यम् ॥ ॥ २६५ ॥ २६६ ॥ २६७ ॥

इत्युरोमण्डलिनौ ।

---

एकत्रोरःस्थितोत्तानेऽन्यस्मिन्पार्श्वप्रसारिते ॥ २६८ ॥
व्यावर्तिते नालपद्मीकृत्वोरस्थो यदा करः ॥
स्वपार्श्वे नीयतेऽन्यस्तूद्वेष्टितक्रियया करः ॥२६९ ॥
तदैवारालतां प्राप्य यात्युरो मण्डलाकृतिः ॥
अन्योऽप्येवं क[4]राभ्यासादुरःपार्श्वार्धमण्डलौ ॥ २७० ॥

उरःपार्श्वार्धमण्डलयोर्लक्षणे—एकत्रैकस्मिन्हस्त उरःस्थितोत्ताने सति । उरःस्थितश्चासावुत्तानश्चेति समासः । अन्यस्मिन्हस्ते प्रसारिते सति । अत्रानुक्तमप्युत्तान इत्यूहनीयम् । अन्यथाऽन्यस्यावेष्टितक्रियया कर इति वक्ष्यमाणावेष्टितक्रियोचितसंनिवेशाभावेनाशोभावहत्वं स्यात् । एवमन्यः करस्तदैवारालतां प्राप्य मण्डलाकृतिः सन्नुरो यातीति संबन्धः । तदैवेति । यदोरस्थः करः स्वपार्श्वे नीयते पार्श्वप्रसारितोऽपि करस्तत्स[5]मसमयमे(य ए)वोरो यातीत्यर्थः ॥ २६८ ॥ २६९ ॥ २७० ॥

इत्युरःपार्श्वार्धमण्डलौ ।

---

१ ख. ग. घ. 'क्षोऽभीक्ष्णं क्रमा' । २ ग. घ. 'लिनस्त्रिषु । ङ. 'लिनौ त्रिषु । ३ ख. ग. 'कामिति । ४ ङ. करोऽभ्या' । ५ ख. ग. 'समे' ।

एकं वर्तनयाऽरालं तथाऽन्यमलपल्लवम् ॥
हस्तं मुहुः क्रमात्कृत्वा क्रियते स्वस्तिकाकृती ॥ २७१ ॥
खटकामुखहस्तौ चेन्मुष्टिकस्वस्तिकौ तदा ॥
कपित्थौ शिखरौ मुष्टी चाथ वा स्वस्तिकाकृती ॥ २७२ ॥

मुष्टिकस्वस्तिकयोर्लक्षणे—**एकं वर्तनयाऽरालमिति** । वर्तनया मणिबन्धकुञ्चनप्रभवयाऽऽवेष्टितवर्तनयेत्यर्थः । अरालकरणे तस्याः संगतत्वात् । **तथाऽन्यमलपल्लवमिति** । तथेति तदुचितवर्तनयेत्यर्थः । अत्रालपल्लवकरणे संगतया मणिबन्धाकुञ्चनप्रभवयोद्वेष्टितवर्तनयेति द्रष्टव्यम् । अत्र खटकामुखादीनां पारम्पर्येण मुष्टिप्रभवत्वात्तेष्वन्यतमप्रयोगेऽपि मुष्टिस्वस्तिकव्यपदेश उपपन्न इति तद्विदां मतम् ॥ २७१ ॥ २७२ ॥

अश्लिष्टस्वस्तिकौ[3] सन्तौ व्यावृत्तक्रियया करौ ॥

इति मुष्टिकस्वस्तिकौ ।

---

मिथः पराङ्मुखौ कृत्वा यौ कृतौ पद्मकोशकौ ॥ २७३ ॥
नलिनीपद्मकोशौ तावपरे त्वन्यथा जगुः ॥
अन्योन्यसंमुखौ सन्तौ संश्लिष्टमणिबन्धकौ ॥ २७४ ॥
पद्मकोशौ पृथक्प्राप्तौ व्यावृत्तिपरिवर्तने ॥
नलिनीपद्मकोशौ स्तः केऽप्याहुः पद्मकोशयोः ॥ २७५ ॥
व्यावृत्त्या परिवृत्त्या च जान्वन्तिकगताविमौ ॥
स्कन्धयोः स्तनयोर्यद्वा जानुनोर्निकटं गतौ ॥
विवर्तितौ[3] पद्मकोशौ तल्लक्ष्मेत्यवदन्परे ॥ २७६ ॥

नलिनीपद्मकोशयोर्द्वितीयलक्षणे—**व्यावृत्तिपरिवर्तने पृथक्प्राप्ताविति** । अन्योन्यसंमुखयोः संश्लिष्टमणिबन्धयोः पद्मकोशयोरेको व्यावृत्तिमन्यः परिवर्तनं च युगपदेव पृथक्कुरुत इत्यर्थः ॥ २७३ ॥ २७४ ॥ २७५ ॥ २७६ ॥

इति नलिनीपद्मकोशौ ।

---

उद्वेष्टितक्रियौ वक्षःक्षेत्रस्थावलपल्लवौ ॥
स्कन्धान्तिकमथोपेत्य[4] प्रसृतावलपद्मकौ[5] ॥ २७७ ॥

॥ २७७ ॥

इत्यलपद्मकौ ।

---

१ ङ. 'ष्टीरूर्ध्वे वा । २ च. आश्लि' । ३ घ. च. 'वर्तिते । न' । ४ च. 'न्धाश्लितम' । ङ. 'न्धान्तिकमथाऽऽगत्य । ५ घ. ङ. 'पलवौ । इ' ।

प्रसार्य स्कन्धयोः स्कन्धाभिमुखप्रचलाङ्गुली ॥
वर्तितावलपद्मौ चेदुल्बणौ भणितौ तदा ॥ २७८ ॥
इत्युल्बणौ ।

---

कूर्परस्वस्तिकयुतौ लताख्यौ वलितौ मतौ ॥
मुष्टिकस्वस्तिकौ मूर्ध्नि विवृत्तौ तौ परे विदुः ॥ २७९ ॥
अन्ये त्वाचक्षतेऽन्योन्यलग्नाग्रौ खटकामुखौ ॥
ऊर्ध्वगौ पृष्ठतो नम्रकूर्परौ वलितौ मतौ ॥ २८० ॥
इति वलितौ ।

---

पल्लवौ शीर्षदेशस्थौ ललितौ कलितौ बुधैः ॥
चतुरस्रीमभञ्जन्तौ शिरस्थावचलौ करौ ॥ २८१ ॥
ललितावपरे प्राहुरन्ये तु खटकामुखौ ॥
शनैः प्राप्य शिरोऽन्योन्यलग्नाग्रौ ललितौ विदुः ॥ २८२ ॥
इति ललितौ ।

---

नृत्तहस्तौ क्रमेणापि प्रयोज्यौ सूरयो विदुः ॥ २८३ ॥
इति त्रिंशन्नृत्तहस्ताः ।

---

॥ २७८ ॥ २७९ ॥ २८० ॥ २८१ ॥ २८२ ॥ २८३ ॥

पताको मध्यमामूललग्नाङ्गुष्ठो निकुञ्चकः ॥
स स्वल्पाभिनये वेदाध्ययने च प्रयुज्यते ॥ २८४ ॥
इत्यसंयुतहस्तः ।

---

शिखरद्वंद्वसंयोगात्करो द्विशिखरो मतः ॥
शयनार्थेऽङ्गुलिस्फोटे स्त्रीणामनुनये तथा ॥
नास्तीत्यर्थे तु संयुज्य वियुक्तं शिखरद्वयम् ॥ २८५ ॥
इति संयुतहस्तः ।

---

१ ङ. °र्ध्नि धृतौ तावप° । २ च. विधूतौ । ३ घ. ङ. °लिताविति । इ० । ४ घ. °धैः । चातुरश्रीम° । ५ ख. ग. °रोऽन्यां तु ल° । ६ च. °हस्ताः क्र° । ७ च. °योज्याः सू° । ८ च. °त्यसंयु° । ९ ख. ग. त्यर्थे तु संतुष्टाति° ।

पृथग्दक्षिणवामौ चेद्वरदाभयदौ करौ ॥
अरालौ कटिपार्श्वस्थौ तदोक्तौ वरदाभयौ ॥ २८६ ॥

इति नृत्तहस्तौ ।

---

[1]मतान्तरोक्तानां निकुञ्चकादीनां त्रयाणां कराणां लक्षणानि सविनियोगमाह—**पताको मध्यमामूल इत्यादिना** ॥ २८४ ॥ २८५ ॥ २८६ ॥

निगमयति—

**प्रदर्शनार्थमुक्तेयं हस्तानां सप्ततिर्मया ॥**
**आनन्त्यादभिनेयानां सन्त्यनन्ताः परे कराः ॥ २८७ ॥**

**प्रदर्शनार्थमिति** । अभिनयदिक्प्रदर्शनार्थमियं हस्तानां सप्ततिरुक्तेत्युक्ते सति न साकल्येनोक्ता हस्ता इति प्रतीयते । असाकल्येनोक्तौ सत्यां कति हस्ता इत्याकाङ्क्षायामाह—**सन्त्यनन्ताः परे करा इति** । साकल्येनाकथन आनन्त्यमेव हेतुर्द्रष्टव्यः । आनन्त्यमेव कुत इत्याकाङ्क्षायामाह—**आनन्त्यादभिनेयानामिति** । अभिनेयानां जातिक्रियागुणद्रव्यरूपाणां पदार्थानाम् । तेषामानन्त्यमेव हस्तानन्त्ये हेतुरुक्तः । एतेन प्रत्यर्थं हस्तोऽपि भिन्न इत्यभिप्रायः सूचितो भवति । नन्वेवं तर्हि भूयसामप्यर्थानामेकैकेन सूचीमुखादिना भरतादिभिर(कृतम?)भिनयप्रदर्शनं कथमिति चेदुच्यते । न हि तेषामप्येक एव सूचीमुखादिव(र्बे)ह्वर्थप्रदर्शकोऽभिमतः । किंतु करणकर्मस्थाने(न?)-प्रचारक्रियादिभेदात्प्रत्यर्थं भिन्न एवेत्यभिमतः । एकत्व[2]व्यवहारस्तु संक्षेपार्थं वृक्षादिशब्दवत्प्रकृतिसारूप्याद्द्रष्टव्यः । यथा वृक्षशब्दे विभक्त्यादिभेदात्प्रत्यर्थं भिन्नेऽपि लौकिकानामेकोऽयमिति व्यवहारः, तथा पताकादावपि प्रकृतिसारूप्यादेकत्वव्यवहारोऽवगन्तव्यः । क्वचिदनेकेष्वप्यर्थेष्वेकरूपकरणस्थानादियुक्तस्य हस्तस्य प्रयोगदर्शनं त्वनेकार्था[3]नामक्षादिशब्दानां(?) प्रयोगवदवगन्तव्यम् । एवं सति हस्तसप्ततिवचनं संक्षेपाभिप्रायं मन्तव्यम् । अयमेवार्थोऽभिनवगुप्तपादैर्भारतीयविवृतौ [प्रपञ्चितो] विर्वृतां(त?)संयुतहस्तनिगमनावसरे । यथा "संयुतास्तावदेते भवन्ति । न ह्येतेऽसंयुता एव । नाप्येत एव कोहलादिभिरन्येषां दर्शनात्" इत्युपक्रम्य । तथाहि । कूर्प[5]राधिकत्रिपताकेन पार्श्वे खटकामुखेन च स्त्रीणामभिनय इति । खटकेन कर्णान्तमागच्छता वामेन कपित्थमु[6]ष्ट्याऽन्यतरेण बाणमोक्षस्येति च । अत्र स्त्रीदर्शने नैकस्त्रिपताको नैकः खटकामुखो वा । किं तूभयसंनिवेशवानेको हस्तः । तथा बाणमो-

---

१ ख. ग. समन्तरोक्तादीनां । २ ख. ग. °कत्र व्य° । ३ ख. ग. °र्थानां वृक्षा° । ४ ग. °वृत्तसं° । ५ ख. ग. °र्परोऽधि° । ६ ख. ग. °मुष्टितरे°(?) ।

क्षाभिनयेनैकः खटके(को?) नापि मुष्टिकपित्थयोरन्यतरः । अपि तु तत्संनिवेशविशेषवानन्यो हस्तः । तथा **मुनिना**ऽपि—

*"अङ्गाद्यभिनयस्य हेयो विशेषः क्वचित् ? ।
अनुक्त उच्यते यस्मात्स चित्रोऽभिनयः स्मृतः" ॥

इति प्रपञ्चितः ॥ २८७ ॥

एवं हस्तानामानन्त्ये सिद्धे तत्राप्रसिद्धहस्तपरिज्ञाने लोकं प्रमाणयन्नाह **मुनिः**—

**लोकवृत्तानुसारात्तेऽप्यूह्यन्तामनया दिशा ॥ २८८ ॥**

**लोकवृत्तानुसारात्तेऽप्यूह्यन्तामनया दिशेति** । तथा चाऽऽह—

"नोक्ता ये च मया ह्यत्र लोकाद्ग्राह्यास्तु ते बुधैः ।
लोको वेदास्तथाऽध्यात्मं प्रमाणं त्रिविधं स्मृतम् ।
तस्मान्नाट्यप्रयोगे तु प्रमाणं लोक इष्यते" इति ।

अत्रेदमुपह्वरम् । अभिनयानन्त्याद्धस्तानन्त्येऽपि स्वबुद्ध्या लोकतो वाऽनुक्तहस्तकल्पनायां[1] करणप्रचारादिभिः संयुतत्वेनासंयुतत्वेन वा संनिवेशविशेष एव कल्पनीयो न तूक्तपताकादिव्यतिरेको हस्तः । उक्तरीत्या कल्पितस्य तावतैव हस्तान्तरे[2]सिद्धेः कंचिदप्यर्थं यथा तथा वा धर्मिद्वयाश्रयणेन यथाशोभमभिनीय पताकादिष्वन्यतमे पर्यवस्येदिति । ननु क्वचिदेकस्याप्यर्थस्य बहवो हस्ताः संभवन्ति तत्र केनाभिनयः कर्तव्य इति चेदुच्यते । प्रयोगे पूर्वापरसंगतत्वेन यः शोभाकारी करस्तेनाभिनयः कर्तव्य इति मन्तव्यम् । यथाऽऽह **भरतः**—

"अर्थस्यैकस्य भूयांसः संभवन्ति यदा कराः ।
शोभाकारी तथा तत्र[3] करः कार्यः प्रयोक्तृभिः" इति ॥ २८८ ॥

अभिनये त्वङ्गान्तरापेक्षया हस्तानामेव प्राधान्यं दर्शयितुमाह—

**नेत्रभ्रूमुखरागाद्यैरुपाङ्गैरुपबृंहिताः ॥
प्रत्यङ्गैश्च कराः कार्या रसभावप्रदर्शकाः ॥ २८९ ॥**

**नेत्रभ्रूमुखरागाद्यैरिति** । अत्राऽऽद्यशब्देन तारापुटादीन्युपाङ्गान्तराणि गृह्यन्ते । मुखे रागस्यानुपाङ्गत्वेऽपि नेत्राद्युपाङ्गसाहचर्यादुपाङ्गत्वमुपचर्यते । प्रत्यङ्गैश्चेत्यत्र चकारेणाङ्गान्यपि समुच्चीयन्ते । तेन शिरश्चरणादीन्यभिनये हस्तानामुपबृंहकत्वादुपसर्जनानि भवन्तीत्यर्थः । हस्तानामप्युपाङ्गाद्युपबृंहितानामेव हस्त(रस)भावप्रदर्शकं(कत्वं) भवति न तु केवलानामिति भावः । कार्या इति प्रयोक्तृविषयो नियमविधिः ॥ २८९ ॥

* ख. ग. पुस्तकस्थोऽङ्गाद्यभिनयस्येह य इति पाठो युक्त इव भाति ।

१ ख. ग. °कलना° । २ ख. ग. °रत्वं सिद्धये किंचि° । ३ ख. ग. °त्र एकः का° ।

अथाभिनयहस्तानामभिनयेऽर्थादीनां* स्थाननियममाह—

**उत्तमेष्वभिनेयेषु ललाटक्षेत्रचारिणः ॥**
**वक्षःस्था मध्यमेषु स्युरधमेषु त्वधोगताः ॥ २९० ॥**

**उत्तमेष्वित्यादि** । उत्तमेषु सुवर्णादिष्वर्थेष्वभिनेयेष्वभिनेतव्येषु करा ललाटक्षेत्रचारिणः स्युरिति । तथा कर्तव्या इत्यर्थः । मध्यमेषु पुष्पफलाद्यर्थेष्वभिनेतव्येषु वक्षःस्थाः स्युः । अधमेषु पिण्याकादिष्वर्थेषु त्वभिनेतव्येष्वधोगताः स्युः ॥ २९० ॥

इयमर्थकृता व्यवस्थाऽभिनेतृविषयत्वेनान्यैरुक्तेत्याह—

**अन्यैरुक्ता व्यवस्थेयमुत्तमाद्यभिनेतृषु ॥ २९१ ॥**

**अन्यैरिति** । उत्तमाद्यभिनेतृषु । उत्तमा अभिनेतारो **राजदेवीप्रभृतयः** । आदिशब्देन मध्यमा अभिनेतारः **सेनापतिपुरोहितप्रभृतयो**ऽधमा **दौवारिकपरिचारकादयश्च** गृह्यन्ते । एतेष्वभिनेतृषु । **इयं व्यवस्थोक्तेति** । राजादिष्वभिनेतृषु ललाटदेशचारिणः पुरोहितादिष्वभिनेतृषु वक्षःस्था दौवारिकादिष्वभिनेतृष्वधोगताः कर्तव्या इति व्यवस्था ॥ २९१ ॥

**उत्तमे संनिकृष्टाः स्युर्मध्यमे मध्यसंस्थिताः ॥**
**अधमे त्वभिनेये स्युर्विप्रकृष्टचराः कराः ॥ २९२ ॥**

उत्तमाद्यर्थविषयं व्यवस्थान्तरं दर्शयति—**उत्तमे संनिकृष्टाः स्युरित्यादि** ॥२९२॥

अथ हस्तप्रचारस्याल्पप्रचुरमध्यमत्वव्यवस्थां विषयभेदेन दर्शयति—

**अल्पो हस्तप्रचारः स्यात्प्रत्यक्षे भूरिसात्त्विके ॥**
**परोक्षे प्रचुरः स स्यान्मध्यमे मध्यमो मतः ॥ २९३ ॥**

**अल्पो हस्तप्रचारः स्यादित्यादि** । प्रत्यक्षे साक्षादनुभूयमानेऽर्थे भूरिसात्त्विके प्रभूतसात्त्विके भावे वाऽभिनेतव्ये हस्तप्रचारोऽल्पः कर्तव्यः स्यात् । परोक्षेऽप्रत्यक्षेऽर्थेऽभिनेतव्ये स हस्तप्रचारः प्रचुरः कर्तव्यः स्यात् । मध्यमे किंचित्प्रत्यक्षत्वेन किंचिदप्रत्यक्षत्वेन च स्थितेऽर्थेऽभिनेतव्ये मध्यमो नात्यल्पो नातिप्रचुरः प्रचारः कर्तव्योऽभिमतः । भूरिसात्त्विक इत्यनेनैवाल्पसात्त्विकेऽप्रचुरः । मध्यमसात्त्विके मध्यमः प्रचार इत्यवगन्तव्यम् ॥ २९३ ॥

अभिनेतृविषयामन्यां व्यवस्थां दर्शयति—

**कार्याः सुव्यक्तलक्ष्माणः पात्रैरुत्तममध्यमैः ॥**
**ससौष्ठवाश्च नीचैस्तु पाणयस्तद्विलक्षणाः ॥ २९४ ॥**

---

* अत्र ख. ग. पुस्तकयोः—'अभिनेयार्थाधीनं स्थाननियमम्' इति पाठः । अयमेव युक्ततरः ।

---

१ च. 'ष्टकराः । २ च. 'वास्तु नी' ।

**कार्याः सुव्यक्तलक्ष्माण** इति । उत्तममध्यमैः पात्रै राजपुरोहिताद्यनुकारकैः पात्रैः । सुव्यक्तलक्ष्माणः शास्त्रे यस्य हस्तस्य यल्लक्षणमुक्तं तत्सम्यकृतं चेत्सुव्यक्तं भवति । सुव्यक्तं लक्ष्म येषां ते तथोक्ताः । **ससौष्ठवाश्चेति** ।

"कटी जानुसमा यत्र कूर्परांसशिरःसमम् ।
उरः समुन्नतं सन्नं गात्रं तत्सौष्ठवं भवेत्" ॥

इति वक्ष्यमाणलक्षणेन सौष्ठवेन सहिताः ससौष्ठवाः । **नीचैस्त्विति** । दौवारिकादिभिर्नीचपात्रैस्तु । **तद्विलक्षणा इति** । अव्यक्तलक्षणा असौष्ठवाश्चेत्यर्थः । उत्तमादितारतम्येन पात्राणि योजयेदित्यभिप्रायः ॥ २९४ ॥

**विषण्णे व्याकुले भीते मूर्छिते तन्द्रयाऽन्विते ॥**
**जुगुप्साशोकसंतप्ते सुप्ते ग्लाने जराऽर्दिते ॥ २९५ ॥**
**रोगशीतार्तनिश्चेष्टसंचितेष्वपि तापसे ॥**
**मत्तोन्मत्तप्रमत्तेषु न हस्ताभिनयो भवेत् ॥ २९६ ॥**

केषुचिदभिनेयविशेषेषु हस्ताभिने(न)यं निषेधति—**विषण्ण इति** ॥२९५॥२९६॥

**सूचयन्त्यान्तरं भावं ये कराः कर्कटादयः ॥**
**विषण्णादिष्वपि प्रायः प्रयोज्यास्ते सतां मताः ॥ २९७ ॥**

किं सर्वत्र एवात्र न हस्ताभिनय इत्याशङ्क्य प्रतिप्रसवार्थमाह—**सूचयन्तीति** ॥ २९७ ॥

**इति हस्तप्रकरणम् ।**

---

**स्याद्वक्षः सममाभुग्नं निर्भुग्नं च प्रकम्पितम् ॥**
**उद्वाहितं पञ्चधेति तेषां लक्ष्माभिदध्महे ॥ २९८ ॥**

*अथ वक्षःप्रभेदानुद्दिश्य लक्षयति—**स्याद्वक्ष इत्यादि** ॥ २९८ ॥

**सौष्ठवाधिष्ठितं वक्षश्चतुरस्राङ्गसंश्रयम् ॥**
**प्रकृतिस्थं समं प्राहुः स्वभावाभिनये च तत् ॥ २९९ ॥**

**इति समम् ।**

---

तत्र समस्य वक्षसो लक्षणे—**सौष्ठवाधिष्ठितमिति** । सौष्ठवेन कटीजान्वित्या-

---

* छ. ज. संज्ञितयोः पुस्तकयोः—'अथ वक्ष इत्याद्यारभ्य "इति वर्तनाभरणलक्षणम्" इत्यन्तटीकांशस्त्रुटितः ।

---

१ ग. 'षमे व्या' । ङ. 'पयव्याकुलीभूते । २ ख. ग. भ्रमार्दिते । ३ च. प्रपञ्चितम् ।

दिनोक्तलक्षणेनाधिष्ठितम् । चतुरस्रं च तदङ्गं च चतुरस्राङ्गम् । चतुरस्राङ्गं संश्रयो यस्येति तथोक्तम् ।

"वैष्णवं स्थानकं यत्र कटीनाभिचरौ करौ ।
पृथक्समुन्नतं वक्षश्चतुरस्रं तदुच्यते" इति ॥

चतुरस्राङ्गलक्षणं वक्ष्यते । शिष्टं स्पष्टम् ॥ २९९ ॥

निम्नं शिथिलमाभुग्नं वक्षः स्याद्दुर्वलज्जयोः ॥
शीतहृच्छल्ययोः शोके मूर्छाभीसंभ्रमेषु च ॥
कार्यं व्याधौ विषादे च ब्रूते शंकरकिंकरः ॥ ३०० ॥

इत्याभुग्नम् ।

---

निर्भुग्नं निम्नपृष्ठत्वादुन्नतं स्तब्धमग्रतः ॥[1]
माने च सत्यवचने स्तम्भे विस्मयवीक्षिते ॥[2]
प्रहर्षभाषणे गर्वोत्सेके चेदं प्रयुज्यते ॥ ३०१ ॥

इति निर्भुग्नम् ।

---

प्रकम्पितं कम्पितं स्यादूर्ध्वक्षेपैर्निरन्तरैः ॥
स्याद्धीहासश्रमश्वासकासहिक्कासु रोदने ॥ ३०२ ॥

इति प्रकम्पितम् ।

---

अकम्पं सरलोत्क्षिप्तमुद्वाहितमुदीरितम् ॥
दीर्घोच्छ्वासे च जृम्भायामुत्तुङ्गालोकने[3] च तत् ॥ ३०३ ॥

॥ ३०० ॥ ३०१ ॥ ३०२ ॥ ३०३ ॥

इत्युद्वाहितम् ।

इति पञ्चधा वक्षः ।

---

विवर्तितं चापसृतं प्रसारितमथो नतम् ॥
उन्नतं चेति संचख्युः पार्श्वं पञ्चविधं बुधाः ॥ ३०४ ॥

पार्श्वभेदानुद्दिश्य लक्षयति—विवर्तितमित्यादि ॥ ३०४ ॥

विवर्तनात्त्रिकस्य स्यात्परावृत्तौ विवर्तितम् ॥ ३०५ ॥

इति विवर्तितम् ।

---

१ घ. ङ. °ब्धमप्युरः । मा° । २ च. °वीक्षणे । प्र° । ३ ख. ग. च. °लोचने ।

तन्निवृत्त्या त्वपसृतं भवेत्पार्श्वनिवर्तने ॥

इत्यपसृतम् ।

प्रसारितं तूभयतो विस्तारात्स्यान्मुदादिषु ॥ ३०६ ॥

इति प्रसारितम् ।

न्यञ्चितांसं नितम्बं तु नतं स्यादुपसर्पणे ॥

इति नतम् ।

पार्श्वं तद्विपरीतं तून्नतं स्यादपसर्पणे ॥ ३०७ ॥

॥ ३०५ ॥ ३०६ ॥ ३०७ ॥

इत्युन्नतम् ।

इति पञ्चधा पार्श्वम् ।

---

कम्पितोद्वाहिता छिन्ना विवृता रेचिता तथा ॥

कटी पञ्चविधेत्युक्ता तल्लक्ष्म व्याहरेऽधुना ॥ ३०८ ॥

कटीं विभज्य लक्षयति—कम्पितोद्वाहितेत्यादि ॥ ३०८ ॥

द्रुतं गतागते पार्श्वे दधती कम्पिता मता ॥

तां कुब्जवामनादीनां गमने विनियुञ्जते ॥ ३०९ ॥

इति कम्पिता ।

शनैरुच्चलिता पार्श्वद्वयेनोद्वाहिता कटी ॥

स्त्रीणां लीलागतेष्वेषा पीनाङ्गानां गतावपि ॥ ३१० ॥

इत्युद्वाहिता ।

छिन्ना तिर्यङ्मुखे पात्रे मध्यस्य वलनात्कटी ॥

व्यायामे संभ्रमे चैषा व्यावृत्तप्रेक्षणादिषु ॥ ३११ ॥

इति च्छिन्ना ।

पराङ्मुखेन पात्रेणाभिमुखं या विवर्तिता ॥

विवृत्ता सा कटी प्रोक्ता विनियोज्या विवर्तने ॥ ३१२ ॥

इति विवृत्ता ।

सर्वतो भ्रमणादुक्ता रेचिता भ्रमणे भवेत् ॥ ३१३ ॥

॥ ३०९ ॥ ३१० ॥ ३११ ॥ ३१२ ॥ ३१३ ॥

इति रेचिता ।

इति पञ्चविधा कटी ।

---

१ ख. ग. ङ. 'र्श्वनिव' । २ च. 'स्तारे स्यान्मु' ।

पादभेदानुद्दिश्य लक्षयति—

समोऽञ्चितः कुञ्चितश्च सूच्यग्रतलसंचरः ॥
उद्घट्टितश्चेति मुनेः षड्विधश्चरणो मतः ॥ ३१४ ॥

समोऽञ्चित इत्यादि । सविनियोगानि तेषां लक्षणानि स्फुटार्थानि ॥ ३१४ ॥

त्राटितो घटितोत्सेधो घट्टितो मर्दितस्तथा ॥
अग्रगः पार्ष्णिगः पादः पार्श्वगश्चापरः परैः ॥ ३१५ ॥
इति सप्तापरे प्रोक्ताः पादास्तल्लक्षणं ब्रुवे ॥
स्वभावेन स्थितो भूमौ समः पादोऽभिधीयते ॥
स्वभावाभिनये कार्यः स्थिरोऽसौ रेचके चलः ॥ ३१६ ॥

इति समः ।

भूस्थपार्ष्णिः समुत्क्षिप्ताग्रतलः प्रसृताङ्गुलिः ॥
अञ्चितः स भवेत्पादाहतिभ्रमणकादिषु ॥ ३१७ ॥

इत्यञ्चितः ।

कुञ्चिताङ्गुलिरुत्क्षिप्तपार्ष्णिम(र्म)ध्ये च कुञ्चितः ॥
कुञ्चितः स्यादतिक्रान्तक्रमे तुङ्गस्य च ग्रहे ॥ ३१८ ॥

इति कुञ्चितः ।

वामः स्वाभाविकोऽन्यस्तु भुव्यङ्गुष्ठाग्रसंस्थितः ॥
उत्क्षिप्तेतरभागोऽसौ सूची नूपुरबन्धने ॥ ३१९ ॥

इति सूची ।

यस्योत्क्षिप्ता भवेत्पार्ष्णिरङ्गुष्ठः प्रसृतस्तथा ॥
अङ्गुल्यो न्यञ्चिताः स स्यात्पादोऽग्रतलसंचरः ॥ ३२० ॥
प्रेरणे कुट्टने स्थाने पीडने भूमिताडने ॥
भूस्थापसारणे स स्याद्रेचके भ्रमणे मदे ॥ ३२१ ॥

इत्यग्रतलसंचरः ।

यदि पादतलाग्रेण स्थित्वा भूमौ निपात्यते ॥
असकृद्वा सकृत्पार्ष्णिर्भवेदुद्घट्टितस्तदा ॥ ३२२ ॥

इत्युद्घट्टितः ।

---

॥ ३१५ ॥ ३१६ ॥ ३१७ ॥ ३१८ ॥ ३१९ ॥ ३२० ॥ ३२१ ॥ ३२२॥

---

१ च. घट्टितो॰ । २ ख. ग. ॰पाणिः स॰ । ३ ख. ग. ॰मकरादि॰ । घ. ङ. ॰मरकादि॰ । ४ घ. कुन्दने ।

पार्ष्ण्या धरामवष्टभ्य तामग्रेण निहन्ति यः ॥
त्राटितश्चरणः स स्यात्प्रयोज्यः क्रोधगर्वयोः ॥ ३२३ ॥

इति त्राटितः ।

घ्नन्मुहुर्घटितोत्सेधोऽग्रपार्ष्णिभ्यां भुवं क्रमात् ॥

इति घटितोत्सेधः ।

घट्टितः क्षितिघाती स्यात्पा[1]र्ष्ण्यङ्घ्रिः प्रेरणे च सः ॥ ३२४ ॥

इति घट्टितः ।

यस्तिरश्चा तलेनोर्वीं प्रमृद्नाति स मर्दितः ॥

इति मर्दितः ।

अग्रगोऽग्रे द्रुतं सर्पन्प्रयोज्यः पङ्क्तिलक्षितौ ॥ ३२५ ॥

इत्यग्रगः ।

पृष्ठतोऽपसरन्पार्ष्ण्या पार्ष्णिगः पाद उच्यते ॥

इति पार्ष्णिगः ।

स्थितः पार्श्वे[2]ऽथवा पार्श्वे व्रजन्पार्श्वग ई[3]ष्यते ॥ ३२६ ॥

इति पार्श्वगः ।

इति त्रयोदश चरणाः ।

---

एकोच्चौ कर्णलग्नौ चोच्छ्रितौ स्रस्तौ च लोलितौ ॥
इत्युक्तौ पञ्चधा स्कन्धौ नाम्नैव व्यक्तलक्षणौ ॥ ३२७ ॥

॥ ३२३ ॥ ३२४ ॥ ३२५ ॥ ३२६ ॥ ३२७ ॥

एकोच्चौ कथितौ स्कन्धौ मुष्टिकुन्तप्रहारयोः ॥ ३२८ ॥
आश्लेषे शिशिरे चांसौ कर्णलग्नौ मतौ सताम् ॥
उच्छ्रितौ हर्षगर्वादौ स्रस्तौ दुःखे श्रमे मदे ॥ ३२९ ॥
मूर्छायां चाथ कर्तव्यौ लोलितौ विटनर्तने ॥
नृत्तज्ञैर्गदितौ हास्ये हुडुक्कावाद्यवादने ॥ ३३० ॥

भेदानां विनियोगं दर्शयति—एकोच्चावित्यादि ॥ ३२८ ॥ ३२९ ॥ ३३० ॥

इति पञ्चधा स्कन्धौ ।

इति सप्ताङ्गानि ।

---

१ ख. ग. 'स्पार्ष्ण्यधः प्रे' । २ च. 'र्श्वे यदा पा' । ३ ख. ग. उच्यते ।

समा निवृत्ता वलिता रेचिता कुञ्चिताऽञ्चिता ॥ ३३१ ॥
त्र्यस्रा नतोन्नता चेति ग्रीवा नवविधा भवेत् ॥
समा स्वाभाविकी ध्याने जपे कार्ये स्वभावजे ॥ ३३२ ॥

अथ प्रथमोद्दिष्टाया ग्रीवायाः प्रभेदानुद्दिशति—**समा निवृत्तेत्यादि** ॥ ३३१ ॥ ॥ ३३२ ॥

इति समा ।

ग्रीवा त्वभिमुखीभूय निवर्तेत यदा तदा ॥
निवृत्तेत्युच्यते सा स्यात्स्वस्थानाभिमुखादिषु ॥ ३३३ ॥

इति निवृत्ता ।

पार्श्वोन्मुखी तु वलिता ग्रीवा भङ्गे तथेक्षणे ॥

इति वलिता ।

रेचिता विधुतभ्रान्ता[1] वर्तुले मथने तथा ॥ ३३४ ॥

इति रेचिता ।

आकुञ्चिता कुञ्चिता स्यान्मूर्धभारे[2] स्वगोपने ॥

इति कुञ्चिता ।

अञ्चिता प्रसृता लोला केशाकर्षेऽथ वीक्षणे ॥ ३३५ ॥

इत्यञ्चिता ।

त्र्यस्रा पार्श्वगता खेदे पार्श्वेक्षास्कन्धभारयोः ॥

इति त्र्यस्रा ।

नताऽवनम्राऽलंकारबन्धे कण्ठावलम्बने ॥ ३३६ ॥

इति नता ।

उन्नतोर्ध्वनता ग्रीवाऽलंकारोर्ध्वप्रदर्शने ॥ ३३७ ॥

॥ ३३३ ॥ ३३४ ॥ ३३५ ॥ ३३६ ॥ ३३७ ॥

इत्युन्नता ।

इति नवधा ग्रीवा ।

---

ऊर्ध्वस्थोऽधोमुख[3]स्तिर्यगपविद्धः प्रसारितः ॥
अञ्चितो मण्डलगतिः स्वस्तिकोद्वेष्टितावपि ॥ ३३८ ॥

अथ बाहुभेदानुद्दिशति—ऊर्ध्वस्थोऽधोमुख इत्यादि ॥ ३३८ ॥

---

१ ङ. 'धुता भ्रा' । २ घ. ङ. 'भागे स्व' । ३ ख. ग. 'मुखः सम्यग' ।

पृष्ठानुसारीत्युदितो बाहुर्दशविधो बुधैः ॥
आविद्धः कुञ्चितो नम्रः सरलान्दोलितावपि ॥ ३३९ ॥
उत्सारित इति प्राहुर्बाहून्षडपरान्परे ॥
शीर्षादूर्ध्वं व्रजन्बाहुरूर्ध्वस्थस्तुङ्गदर्शने ॥ ३४० ॥

॥ ३३९ ॥ ३४० ॥

इत्यूर्ध्वस्थः ।

अधोमुखो महीश्लेषी

इत्यधोमुखः ।

तिर्यक्पार्श्वगतो भवेत् ॥

इति तिर्यग्गतः ।

बाहुर्मण्डलवद्गत्या वक्षःक्षेत्राद्विनिर्गतः ॥ ३४१ ॥
अपविद्धः

इत्यपविद्धः ।

अथाग्रदेशमनुधावन्प्रसारितः ॥

इति प्रसारितः ।

वक्षःक्षेत्राच्छिरः प्राप्य वक्षः प्रत्यागतोऽञ्चितः ॥ ३४२ ॥

तत्रापविद्धबाहुलक्षणे[2]—मण्डलवद्गत्या[3] वक्षःक्षेत्राद्विनिर्गत इत्यादि । मण्डलमस्या [अ]स्तीति मण्डलवती । सा चासौ गतिश्चेति कर्मधारयः । पुंवत्कर्मधारयेत्यादिना पुंवद्भावे सति मण्डलवद्गतिरिति रूपम् । तच्च मण्डलमत्र बाहोरपविद्धसंज्ञानुसारेण बहिर्मुखमेव मन्तव्यम् । अन्यथा 'वक्षःक्षेत्राद्विर्गतः' इत्येतल्लक्षणं नोपपद्यते ॥ ३४१ ॥ ३४२ ॥

इत्यञ्चितः ।

उच्यते मण्डलगतिः सर्वतो भ्रमणाद्भुजः ॥
खड्गादिभ्रामणे चास्य विनियोगं प्रपेदिरे ॥ ३४३ ॥

इति मण्डलगतिः ।

॥ ३४३ ॥

स्वस्तिको लग्नयोर्बाह्वोः पार्श्वव्यत्यासतः स्थितौ ॥
स स्याद्धानोरुपस्थाने परिरम्भेऽभिवादने ॥ ३४४ ॥

स्वस्तिकबाहुविनियोगे—स स्याद्धानोरुपस्थाने परिरम्भेऽभिवादन इत्यत्र

---

१ च. 'सारी गदि'। २ ख. ग. 'विद्धाद्बाहु'। ३ ख. ग. 'वत्यङ्गेषु गत्या। ४ घ. ङ. परीर'। ५ ख. ग. 'म्भे निवेद'।

हस्तप्रचारविशेषानभिधानेऽपि लोकप्रसिद्धभानूपस्थानादिविनियोगवशात्तदुचितः प्रचारो द्रष्टव्यः । तथाहि भानूपस्थाने मस्तकोपरि स्वस्तिकाकारविन्यस्तावुत्तानितहस्ततलौ बाहू लोकप्रसिद्धौ । परी(रि)रम्भे स्वसंमुखहस्ततलौ स्वस्वपार्श्वात्पार्श्वान्तरगतौ बाहू प्रसिद्धौ । अभिवादने तु तादृशावधोमुखहस्ततलौ बाहू प्रसिद्धौ । एवं हस्ताद्यभिनयेष्वपि प्रचारविशेषानभिधानेऽपि विनियोगवशाद्विनियोगो द्रष्टव्यः ॥ ३४४ ॥

इति स्वस्तिकः ।

निष्क्रामन्मणिबन्धस्थवर्तनामाश्रितो भुजः ॥ ३४५ ॥
उद्वेष्टितो भवेत्

इत्युद्वेष्टितः ।

पृष्ठानुसारी पृष्ठतो गतः ॥
भवेत्तूणशराकर्षे वीटिकाग्रहणे च सः ॥ ३४६ ॥

॥ ३४५ ॥ ३४६ ॥

इति पृष्ठानुसारी ।

---

आविद्धोऽभ्यन्तराक्षिप्तः

इत्याविद्धः ।

कुञ्चितस्तु स उच्यते ॥
यस्तीक्ष्णकूर्परं वक्रीकृतः खड्गादिधारणे ॥ ३४७ ॥
प्रहारे भोजने पाने प्रोक्तो निःशङ्कसूरिणा ॥

इति कुञ्चितः ।

ईषद्वक्रस्तु नम्रोऽसौ स्तुतौ माल्यस्य धारणे ॥ ३४८ ॥

आविद्धलक्षणे—अभ्यन्तराक्षिप्त इति। उद्वेष्टितोपक्रान्तयन्तिर्मुखवर्तनं(?) वेत्यर्थः ॥ ३४७ ॥ ३४८ ॥

इति नम्रः ।

सरलः पार्श्वयोरूर्ध्वमधस्ताच्च प्रसारितः ॥
स्यात्पक्षानुकृतौ माने भूस्थनिर्देशने क्रमात् ॥ ३४९ ॥

इति सरलः ।

गतावान्दोलितोऽन्वर्थः

इत्यान्दोलितः ।

---

१ ख. ग. °म्भे न (च) स्व° । २ ख. ग. °षाभिधा° । ३ ग. निष्क्रम्य मणि° । ४ ग. °णेऽपि च । इ° ।

बाहुरुत्सारितः पुनः ॥
स्वपार्श्वमन्यतो गच्छन्नतोत्सारणे भवेत् ॥ ३५० ॥

सरलबाहुलक्षणे—**सरलः पार्श्वयोरूर्ध्वमधस्ताच्च प्रसारित इति** । अत्र त्रीणि लक्षणानि द्रष्टव्यानि । यथा पार्श्वयोः प्रसारितः सरलः । ऊर्ध्वं प्रसारितः सरलः । अधस्तात्प्रसारितश्च सरल इति । एकलक्षणवै(त्वे) हि स्यात्पक्षानुक्तौ माने भूस्थनिर्देशने क्रमादिति क्रमाद्विनियोगभेदं न ब्रूयात् ॥ ३४९ ॥ ३५० ॥

इत्युत्सारितः ।

इति षोडशविधो बाहुः ।

---

बाहूनां करणेनाथ समस्तव्यस्तयोजनात् ॥
क्रमाद्द्रुतादिवैचित्र्याज्जायन्तेऽत्र सहस्रशः ॥
वर्तनाश्चतुरैरूह्यास्ताः शोभाभरसंभृताः ॥ ३५१ ॥

**बाहूनामित्यादि** । बाहूनामुक्तानां षोडशविधानां करणेनाऽऽवेष्टितादिद्विपूर्वि(?)-कव्यापारेण । **समस्तव्यस्तयोजनादिति** । द्वित्रिप्रभृतीनामेकैकरूपाणां [समस्तानां] व्यस्तानां वा योजनान्मिश्रणात् । **क्रमाद्द्रुतादिवैचित्र्यादिति** । आदिशब्देन मध्यविलम्बितौ गम्येते । द्रुतादीनां लयानां वैचित्र्यं नाम यतिविशेषरूपेणावस्थानम् । तस्मात्सहस्रशो वर्तना जायन्ते । वर्तनाः शोभाभरसंभृताः सत्यश्चतुरैरूह्या भवन्ति । अत्रास्माभिर्न प्रपञ्च्यत इत्यर्थः । ग्रन्थकारेणानुक्तानामपि तासां स्वरूपपरिज्ञानार्थं **कोहलोक्ताः** काश्चन वर्तनाः कथ्यन्ते ।

यथा—अथ वर्तनाः ।

पताकारालयोः पूर्वं शुकतुण्डालपद्मयोः ।
वर्तना खटकस्यापि पश्चान्मकरवर्तना ॥
ऊर्ध्ववर्तनिकाऽऽविद्धवर्तना रेचिताह्वया ।
नितम्बकेशबन्धाख्ये [चक्र]वर्तनिका ततः ॥
कक्षवर्तनिकोरःस्थवर्तना खड्गवर्तना ।
पद्मवर्तनिका दण्डवर्तना पल्लवाभिधा ॥
अर्धमण्डलिका घातवर्तना ललिताभिधा ।
वलिता गात्रपूर्वा च वर्तना प्रतिवर्तना ॥
चतुर्विंशतिरित्युक्ता वर्तना भट्टतण्डुना" ।

---

१ ख. ग. घ. °रणानां च स° । २ च. °न्ते ते स° । ३ ख. ग. °ताद्विपू° । ४ ख. ग. व्यात्तानां । ५ ख. ग. °तः । पक्ष° ।

अथ क्रमाल्लक्षणमुच्यते—

सव्यापसव्यव्यत्यासा भ्रान्तिरामणिबन्धनः ॥
क्रियते चेत्पताकस्य सा पताकाख्यवर्तना ।

इति पताका(क)वर्तना ।

तर्जन्याद्यङ्गुलीनां यदन्तरावेष्टनं क्रमात् ॥
आवेष्टितक्रियापूर्वं सा प्रोक्ताऽरालवर्तना ।

इत्यरालवर्तना ।

शुकतुण्डा करो वक्षस्याविद्धाधोकृतः सुखः(?) ॥
ऊरुपृष्ठं वर्तितश्चेत्साऽवहित्थाख्यवर्तना(?) ।

इति शुकतुण्डवर्तना ।

अभ्यन्तरे कनिष्ठाया वर्तन्तेऽङ्गुलयः क्रमात् ॥
व्यावर्तिक्रियया यत्र साऽलपल्लव(ग्रस्य?)वर्तना ।

[ इत्यलपल्लव(वग्र)वर्तना ] ।

पताकामुखयोर्नाभिपक्षे सव्यापसव्यतः ॥
मणिबन्धावधि भ्रान्तिः खटकामुखवर्तना ।

इति खटकामुखवर्तना ।

यदा तु मकरो हस्तः पुरस्तात्पार्श्वयोरपि ॥
व्यावर्तते[1] बहिश्चान्तस्तदा मकरवर्तना ।

इति मकरवर्तना ।

यदोद्धृतौ नृत्तहस्तावूर्ध्वदेशेन वर्तितौ ॥
तदोर्ध्ववर्तना नाम वर्तनाविद्भिरीरिता ।

इत्यूर्ध्ववर्तना ।

आविद्धवक्रयोः पाण्योर्वर्तेते चेद्धजौ क्रमात् ॥
आविद्धावन्तराक्षिप्तौ सा स्यादाविद्धवर्तना ।

इत्याविद्धवर्तना ।

स्वस्तिकाद्विच्युतौ हस्तौ हंसपक्षौ द्रुतभ्रमौ ॥
*रचिते चेद्वर्तनाभ्यां तदा रेचितवर्तना ।

इति रेचितवर्तना ।

---

* ग. पुस्तके रेचे(च्ये)ते इति पाठः, अयमेव समीचीन इव भाति ।

---

1 ख. ग. व्यावर्ते(र्त्ये)ते ।

मणिबन्धविधिभ्रान्तौ विश्लिष्टाङ्गुलिपल्लवा ॥
नितम्बोक्तप्रकारेण वर्तितौ स्कन्धदेशयोः ।
पुनर्नितम्बदेशे तु पताकौ वर्तितौ क्रमात् ॥
नितम्बवर्तना नाम

इति नितम्बवर्तना ।

केशबन्धोत्करीतितः ।
विचित्रवर्तनायोगात्केशदेशाद्विनिर्गतौ ॥
पुनश्च केशदेशे च पर्यायेण विवर्जितैः(तौ?) ।
पताकावते चेत्प्राहुः केशबन्धाख्यवर्तनाम् ॥

इति केशबन्धवर्तना ।

व्यावृत्य वक्षसः फालं प्राप्य तत्पार्श्वमागतौ ।
ततो मण्डलवद्भ्रान्त्या प्रचालितभुजौ करौ ॥
पताकौ चेच्छनैरूर्ध्वमण्डलावेव कोविदैः ।
चक्रवर्तनिकेत्युक्ता फालवर्तनिकाऽपि च ॥

इति फालवर्तनिका ।

पार्श्वमण्डलिनोः पाण्योर्भ्रमणं स्वस्वपार्श्वयोः ।
क्रमादेकैकपार्श्वे या(तां) कक्षवर्तनिकां जगुः ॥

इति कक्षवर्तना ।

उरोवर्तनिकां विद्यादुरोमण्डलिनोः क्रियाम् ।

इत्युरोवर्तनिका ।

एकस्याऽऽकुञ्चितो मुष्टिः खटकास्योऽञ्चितः परः ॥
इति कीर्तिधरस्त्वाह मुष्टिकस्वस्तिकौ करौ ।
खड्गवर्तनिकेत्येतन्नामधेयं त्वकल्पयत् ॥

इति खड्गवर्तनिका ।

पद्मकोशाभिधौ हस्तौ व्यावृत्तादिक्रियान्वितौ ।
आश्लिष्टौ च करौ क्षेत्रे व्यावृत्तपरिवर्तितौ ॥
मिथः पराङ्मुखौ सन्तौ सैषा कम्ब(म)लवर्तना ।

इति पद्मवर्तना ।

वक्षःक्षेत्रं श्रयत्येके(?) येन कालेन पार्श्वतः ॥
व्यावृत्त्या हंसपक्षाख्यस्तेनैव परिवर्तितः ।
प्रसारितभुजोऽन्यस्तु तिर्यक्कार्या पराः पुनः(?) ॥

एवमङ्गान्तरेणापि क्रिया स्याद्दण्डपक्षयोः ।
दण्डवर्तनिकामेनां भट्टतण्डुरभाषत ॥

इति तण्डु(दण्ड)वर्तना ।

पताकौ मणिबन्धस्थौ शिथिलौ स्वस्तिकौ पुनः ।
कथितौ पल्लवौ तौ हि ख्याता पल्लववर्तना ॥

इति पल्लववर्तना ।

व्यावर्तितेन हस्तश्चेद्दलपल्लवशंसिता ।
स्वपार्श्ववक्षसः प्राप्य प्रसारितभुजो भ्रमन् ॥
अरालं दधदावेष्टकरणेन स्वयं नरः(?) ।
तदानीमेव पार्श्वं स्वमन्यो वाञ्छति पूर्ववत् ॥
मण्डलेन ततोऽप्येवंमुरःपार्श्वेऽर्धमण्डलौ ।
तयोर्यैषा क्रिया च(सा) स्यादर्धमण्डलवर्तना ।

इत्यर्धमण्डलवर्तना ।

उद्वेष्टितेन निष्पन्नौ स्यातां चेद्दलपल्लवौ ।
वक्षसः स्कन्धयोरूर्ध्वप्रसारितयुतावुभौ ।
स्कन्धाभिमुखमाविद्धौ वलितौ चाङ्गुलीदले ।
अलपद्मोल्वलौ(?) प्राहुर्घातवर्तनिकां परे ।

इति घातवर्तनिका ।

एतावेव चलौ मूर्धक्षेत्रगौ ललिता मता ।
खटकाग्रौ शिरोदेशे लग्नाग्रौ तां परे जगुः ।

इति ललितवर्तनिका ।

कूर्पकस्वस्तिकाकारवर्तनाद्वलिता मता ।
अन्ये त्वाचक्षतेऽन्योन्यलग्नाग्रौ खटकामुखौ ।
ऊर्ध्वगौ पृष्ठतो नम्रकूर्परौ वलितेति च ।

इति वलितवर्तना ।

व्यावर्तितोत(?) गात्रं चेद्दलपल्लवहस्तकः ।
पराङ्मुखोऽपविद्धः स्यात्कथिता गात्रवर्तना ।

इति गात्रवर्तना ।

गात्रस्य प्रातिलोम्येन पाणिराक्षिप्य वर्तते ।

---

१ ख. ग. 'व सुरः पार्श्वर्धम' ।

अलपल्लवसंज्ञश्चेत्प्रतिवर्तनिका तदा ।

इति प्रतिवर्तनिका ।

अन्याश्च कथिताः सप्त वर्तना नृत्तवेदिभिः ।
वर्तना या शिरस्थाऽऽद्या द्वितीया तिलकस्य च ।
वर्तना नागबन्धाख्या स्यात्सिंहमुखवर्तना ।
वैष्णव्ये(?) नलमुखी सप्तमी कलसाभिधा ।
नाममात्रप्रसिद्धास्तास्तैरेव स्फुटलक्षणाः ।

इति वर्तनाः ।

प्रकृतमनुसरामः ॥ ३९१ ॥

**ते रेषामनतिक्रम्य भूरिभङ्गिभृतो भुजाः ॥**
**रेच्यन्ते यदि लक्ष(क्ष्य)ज्ञैश्चालकाः कीर्तितास्तदा ॥ ३९२ ॥**

**ते रेषामित्यादि** । ते षोडश भुजा रेषां शोभामनतिक्रम्यापरित्यज्य भङ्गिभृतः सन्तो रेच्यन्ते चेद्बहुविधैः प्रकारैश्चाऽऽत्मानात्मरलकै( लनात्मकैः?)रित्यर्थः । पृथग्भूताः क्रियन्ते चेत्तदा लक्ष(क्ष्य)ज्ञैश्चालका इति कीर्तिताः । तेषां चालनात्मक(श्रय ?)-त्वाच्चालकसंज्ञा वेदितव्या । तेषां लक्ष्यप्रसिद्धत्वात्ते तत एवावगन्तव्या इत्यत्र ग्रन्थ-कारेण नोक्ताः । तेषां केषांचित्स्वरूपपरिज्ञानाय **कोहलोक्तानि** लक्षणानि लिख्यन्ते । **यथा शार्दूलमुनिना पृष्टः कोहल उवाच**—

"स्वरूपं चालकानां वै समाहितमनाः शृणु ।
तत्र क्रिया मनोहारी वाद्ये चालनमुच्यते ॥
अनेन रहितं निष्प्राणनुवद्भवम् (?) ।
विश्लिष्टवर्तितं पूर्वं वेपथुव्यञ्जकं तथा ॥
अपविद्धं ततः पश्चाल्लहरी चक्रसुन्दरी(रम्) ।
वर्तनास्वस्तिकं चैव संमुखीनरथाङ्गजम् ॥
पुरोदण्डभ्रमाख्यं च त्रिभङ्गीवर्णसारकम् ।
दोलं नीराजनं चैव स्वस्तिकाश्लेषचालनम् ॥
मिथोसंवीक्ष्यबाह्यं च वामदक्षविलासितम् ।
मौलिरेचितकं चेव वर्तनाभरणं ततः ॥
आदिकूर्मवितारारख्यमंसवर्तनकं तथा ।
मणिबन्धासिकर्षाख्यं कलविङ्कविनोदितम् ॥

---

१ घ. रेखाम° । २ ग. घ. ङ. रच्यन्ते । ३ ख. ग. °वाद्ये च ।

चतुष्पत्राब्जसंज्ञं च मण्डलाग्राभिधं तथा ।
बालव्यजनचालाख्यं तथा वीरुधबन्धनम् ॥
विशृङ्गाटकबन्धाख्यं पश्चात्कुण्डलिचारकम् ।
मुरुजाडम्बरं पश्चाद्वारदामविलासकम् ॥
धनुराकर्षणं चैव साधारणमतः परम् ।
समप्रकोष्ठवलनं तथा देवोपहारकम् ॥
तिर्यग्वातस्वस्तिकाग्रं मणिबन्धगतागतम् ।
अलातचक्रकाख्यं च व्यस्तोत्प्लुतनिवर्तकम्[1] ॥
तथोरभ्रकसंबाधं[2] तिर्यक्काण्डवचालनम् ।
धनुर्वल्लीविनामाख्यं तार्क्ष्यपक्षविलासितम् ॥
कररेचकरत्नाख्यं शरसंधाननामकम् ।
मण्डलाभरणं चैवमंसपर्यायनिर्गतम् ॥
अष्टबन्धविहारं च कर्णयुग्मप्रकीर्णकम् ।
पर्यायगजदन्ताख्यं रथनेमिसमाह्वयम् ॥
स्यात्स्वस्तिकत्रिकोणं च लतावेष्टनकं तथा ।
नवरत्नमुखं चेति पञ्चाशद्वैव चालयाः(काः ?) ।
एतेषामेव मुख्यत्वं मुनेर्नृत्तकर्मसु[3] वै ।
किंत्वमी केचनान्वर्था नामगम्यास्तु केचन ॥
केचित्प्रायोगिकास्तद्वदपरे सांप्रदायिकाः ।
अन्येऽपि बहवः पूर्वं प्रयुक्ता भट्टतण्डुना ॥
अन्योन्यव्यतिहारेण तिलतण्डुलवर्त(त्म)ना ।
नृत्तमङ्गलशास्त्रे तु शतं सन्त्येव चालयाः(काः ?) ॥
नारदेनापि मुनिना तथा सप्तशतं मुने ।
देशीनृत्तसमुद्राख्ये कीर्तिताश्चालया(का?)श्च वै ॥
सहस्रं चालया(का?)स्त्वन्ये ताण्डवे शंभुनोदिताः ।
अतोऽनन्तत्वमेतेषां तत्तच्छास्त्रविकल्पनात् ॥
किं तु लोके प्रयोक्तॄणां कालतोऽल्पधियामिह ।
तेषु तेषु विशेषेण कररेचितकाशि(दि)षु ॥
सारसारतरास्त्वेते वेधसा भव्यचेतसा ।
दध्नो घृतमिवोदीर्णाः सुबोधाय च चालयाः(काः ?) ॥

---

१ ख. ग. 'स्तोत्पन्ननिवृत्तिक' । २ ख. ग. 'थोरुभ्र' । ३ ग. 'लास्ये' वै ।

प्रातयोः स्वस्तिकत्वं प्राक्तिर्यगेको विलोलितः ।
पार्श्वयोर्मौलिपर्यन्तमूर्ध्वं चाधश्च लोलनम् ।
अन्यस्तु भजते यत्र तत्तु विश्लिष्टवर्तितम् ॥

इति विश्लिष्टवर्तितम् ।

नाभिक्षेत्रसमीपस्थे तिर्यग्लुण्ठति चैकके ।
स्वस्यापरागवलनं रसवृत्तिसमुज्ज्वलम् ।
करयोर्यत्तु तत्प्रोक्तं वेपथुव्यञ्जनं(कं)पुनः ॥

इति वेपथुव्यञ्जकम् ।

वामदक्षिणभागेन नाभिकण्ठप्रदेशयोः ।
लुण्ठने मण्डलेनैव त्वपविद्धमिति स्मृतम् ॥

इत्यपविद्धम् ।

नाभिक्षेत्रसमीपस्थे तिर्यग्लुण्ठति चैकके ।
अपरं तु पराचीनमान्दोलितककर्मणा ॥
नीत्वा वामांसपर्यन्तं बहिरेव प्रसार्य च ।
अमुमन्तः समाक्षिप्य मूर्ध्ना सव्यापसव्ययोः ॥
विलोड्य पार्श्वयोर्मन्दं विलासेन तु यद्भवेत् ।
प्रकीर्तितं तु तद्धीरैर्लहरीचक्रसुन्दरी(रम्) ॥

इति लहरीचक्रसुन्दरम् ।

एकस्य पार्श्वचलने विद्युद्दामविडम्बिनः ।
अन्वगण्येन हस्तेन [1]यो मुच्यति(?) स पूर्वकः ॥
पौनःपुन्येन यस्मात्तु वर्तना स्वस्तिकं मतम् ।
अथवा तुम्बिखण्डाब्जवर्तनाभिस्तु तद्भवेत् ॥

इति वर्तनास्वस्तिकम् ।

अन्योन्याभिमुखे स्यातां त्र्यस्रं चलितरेचितौ ।
पार्श्वगावन्तरावृत्त्या द्विगुणौ तीक्ष्णकूर्परम् ॥
पूर्ववद्वलितौ यत्र करौ सौन्दर्यशालिनौ ।
संमुखीनरथाङ्गं तन्निर्दिष्टं तपतां वर ॥

इति संमुखीनरथाङ्गम् ।

कृत्वैकमुष्टिरूपेण तिर्यङ्मुखतयाऽपि च ।
तस्यैव बहिरन्तश्च लुण्ठितोऽन्यस्य लीलया ॥

---

१ ग. यो विमुच्यति पू° ।

पुरो निःसरणं पाण्योः पर्यायेण च यत्र तु ।
पुरोदण्डभ्रमं तत्तु निर्दिष्टं पूर्वसूरिभिः ॥

इति पुरोदण्डभ्रमम् ।

पूर्वपार्श्वेण विदिशि तिर्यक्चेन्मण्डलात्मना ।
या क्रिया जायते पाण्योः पर्यायाद्युगपच्च वा ॥
त्रिभङ्गीवर्णसरकं चालयं(नं?) चेति सा स्मृता ।

इति त्रिभङ्गीवर्णसरकम् ।

ऊर्ध्वाधोवदनौ त्र्यस्रं लुण्ठतो यस्य लीलया ॥
पर्यायेण करौ सौम्यं दोलं[1] तत्परिकीर्तितम् ।

इति दोलम् ।

प्राप्तौ स्वस्तिकतामेव बहिरेव च निःसृतौ ।
अन्तस्तिर्यक्चक्रभावाच्छीर्षे सव्यापसव्ययोः ॥
लुण्ठतो यत्र युगपत्करौ नीराजितं तु तत् ॥

इति नीराजितम् ।

करयोः स्वस्तिकाश्लेषसारिणोरंश(स)देशतः ।
वल्लनं यत्र निर्दिष्टं स्वस्तिकाश्लेषचालय(न?)म् ॥

इति स्वस्तिकाश्लेषचालय(न?)म् ।

एको हस्तः परस्यांसपर्यन्तं सरले ततः ।
निवृत्तश्चेत्स्वपार्श्वे स्यात्पर्यायाद्वृत्तमण्डलम् ॥
मिथोसंवीक्ष्यबाह्यं तद्वदितं नामतो बुधैः ।

इति मिथोसंवीक्ष्यबाह्यम् ।

सव्यापसव्ययोस्तिर्यग्लुण्ठनं स्वस्तिकात्मना ।
करयोर्यत्र विद्येत निर्दिष्टं तच्च तण्डुना ॥
वामदक्षतिरश्चीनं तच्चाप्यन्वर्थसंज्ञितम् ।

इति वामदक्षविलासितम् ।

कटिक्षेत्रगतश्चैकः स्याच्चेदेकः पुरोगतः ॥
अथ तौ केशपर्यन्तं लुण्ठतो यत्र लीलया ।
मौलिरेचितकं प्रोक्तं तज्ज्ञैर्नयनसुन्दरम् ॥

इति मौलिरेचित[क]म् ।

---

[1] ख. ग. डोलं ।

कर्णभागगतश्चैकः परश्चेद्वर्तितो भवेत् ।
उत्सारितोद्वेष्टितैर्वर्तनाभरणं तु तत् ॥

इति वर्तनाभरणम् ।

वामदक्षिणकावर्तौ मूर्ध्नो वा युगपत्क्रमात् ।
ऊर्ध्वाधोमण्डलाकारभ्रान्तौ स्वस्तिकगौ पुनः ॥
वर्तनास्वस्तिकौ पार्श्वद्वये मण्डलघूर्णितौ ।
अभिमण्डलसंपूर्णौ यदा तु लुण्ठतः करौ ॥
आदिकूर्मावतारं तद्रेचकज्ञाः प्रचक्षते ।

इत्यादिकूर्मावतारम् ।

मणिबन्धप्रकोष्ठांसवर्तनावलितोद्धृतैः ॥
सा च किंचिन्नतशिरः कृत्वोपरिविलोडनैः ।
परागधोमुखत्वेन लुण्ठितैर्वा पुरो भुवि ॥
वलितैरार्जवादन्यैः पाण्योः सव्यापसव्ययोः ।
पार्श्वयोर्यौगपद्येन नम्रभावात्करेण च ॥
भूयते यत्र लुठितमंसवर्तनकं विदुः ।

इत्यंसवर्तनकम् ।

द्विगुणोदञ्चनेनैव क्रमादंसात्तु लोडितौ ॥
पर्यायेण च कृत्वाऽथ कूर्परस्वस्तिकात्मना ।
विलोड्य तत्रैव बहिः करं मुष्टिस्वरूपतः ॥
अन्तर्निवेश्य त्वरया लुण्ठनात्र्यस्रभावतः ।
वलमाने तदन्यस्मिन्क्रमशः पार्श्वयोर्द्वयोः ॥
तस्यैव च समुत्क्षेपः क्रियते यत्र लीलया ।
मणिबन्धासिकर्षाख्यं तद्विदः प्रतिजानते ॥

इति मणिबन्धासिकर्षम् ।

शिरःक्षेत्रोपरिष्टात्तु मध्यादाकाशकस्य वा ॥
विलोड्य मण्डलभ्रान्त्या पर्यायेण च पार्श्वयोः ।
करयोः कल्पते यत्र पनतोत्पतनात्मिका ॥
क्रियासमभिहारेण क्रिया च द्रुतमानतः ।

---

१ ख. ग. अतिम॰ । २ ख. ग. ॰तैः । स वै किंचिन्नततरः । ३ ख. ग. ॰म्रतां च क्रमेण । ४ ख. ॰कात्मिका । वि॰ । ५ ग. ॰दः परिजा॰ । ६ ख. ग. ॰कामकस्य च । वि॰ ।

कलविङ्कविनोदाख्यं चालयं(नं)तत्प्रचक्षते ॥

इति कलविङ्कविनोदम् ।

पूर्वमूर्ध्वं प्रलुठितस्ततो मण्डलवर्तितः ॥
तत्पश्चाच्चतुराशासु करो यत्र विलासतः ।
लुठमाने तदन्यस्मिन्नाभिक्षेत्रसमीपगे ॥
पर्यायाद्वर्तते रम्यं चतुष्पत्राब्जमीरितम् ।

इति चतुष्पत्राब्जम् ।

मुष्टिरूपस्तु लुठितस्तदूर्ध्वं चाऽऽर्जवात्पुनः ॥
गतागतः पार्श्वयोश्च तत्पश्चादग्रतो गतः ।
चलमाने तदन्यस्मिन्पूर्वोक्तस्थानगामिनि ॥
पर्यायेण करो यत्र मण्डलाग्राभिधं तु तत् ।

इति मण्डलाग्रम् ।

उत्प्रकोष्ठं च पर्यायादंसपर्यन्तकान्तरे ॥
लुठितौ च तथाऽधस्ताद्भ्रामिनौ च प्रभावतः ।
भवतो यत्र तु करौ वालव्यजनचालनम् ॥

इति वालव्यजनचालनम् ।

यत्र त्रिकोणमर्यादामनुसृत्य प्रलोड्यते ॥
पुरस्तात्पार्श्वयोश्चैव करौ(रो?) मण्डलचारतः ।
तद्वद्वीरुधबन्धाख्यमुद्दिष्टं भट्टतण्डुना ॥

इति वीरुधबन्धनम् ।

प्रतिलोमानुलोमाभ्यामस्यैव खलु या क्रिया ॥
विशृङ्गाटकबन्धाख्यं मतङ्गस्तदुवाच ह ।

इति शृङ्गाटकबन्धनम् ।

वामदक्षिणयोर्यत्र करस्थस्य विलोडनम् ॥
कुर्वन्ग(?)तागते दिक्षु त्र्यस्रं वा वर्तते पुनः ।
तद्वै कुण्डलिचाराख्यं प्रणीतं प्राच्यसूरिभिः ॥

इति कुण्डलिचारम् ।

आपादिकगतश्चाथ तत्रैवाऽऽबद्धमण्डलः ।
सव्यापसव्ययोश्चैव पार्श्वयोर्वर्तनक्रिया ॥

---

१ ख. ग. 'यावर्ते' । २ ख. ग. 'ण्डलक्चि' ।

दक्षिणो यत्र हस्तस्तु ततो वामांसमुद्यतः ।
वेगाद्विदिशि गत्वाऽत्र लुठितः सव्यपार्श्वगः ॥
तदन्यस्मिन्विलुठितो यत्र नाभिसमीपगः ।
मुरुजाडम्बरं नाम निर्णीतं यमिनां वरैः[1] ॥

इति मुरुजाडम्बरम् ।

अंसान्तरक्षेत्रगतौ बाहू चेत्पार्श्वयोर्द्वयोः ॥
पततो युगपद्यत्र द्वारदामविलासकम् ।

इति द्वारदामविलासकम् ।

बद्धस्वस्तिकयोः पार्श्वे तिर्यग्वेगात्प्रसर्पतोः ।
एको निवृत्य सहसा यदि कर्णावतंसकः ॥
धनुराकर्षणाख्यं[2] तन्निर्णीतं भट्टतण्डुना ॥

इति धनुराकर्षणम् ।

कश्चि(किंचि?)त्क्षेत्रगतौ चाथ तिर्यग्द्विगुणलोलितौ ।
अन्तरामण्डलभ्रान्तिकारिणौ बहिरेव वा ॥
युगपच्च करौ यत्र तच्च साधारणं स्मृतम् ।

इति साधारणम् ।

समप्रकोष्ठवलनमन्वर्थमिह कीर्तितम् ।
अथवाऽऽविद्धकेन स्यादपविद्धेन वा च तत् ॥

इति समप्रकोष्ठवलनम् ।

अरालकपरावृत्त्या पार्श्वयोरपि च द्वयोः ।
लुठितः प्रसृतस्याग्रे सदलत्वममुञ्चतः[3] ॥
कूर्परक्षेत्रमासाद्य लुठत्यन्योऽपि यत्र च ।
देवोपहारकं नाम तत्त्वविद्भिर्निरूपितम् ॥

इति देवोपहारकम् ।

प्रथमं पार्श्वयोरेव प्रसृतौ द्विगुणौ ततः ।
अन्योन्याभिमुखौ चैव पश्चात्स्वस्तिकबन्धनौ ॥
प्रधावतः पुरोदेशं यत्र हस्तौ विलासतः ।
तिर्यग्गतस्वस्तिकाग्रं[4] तदुद्दिष्टं सुमन्तुना ॥

इति तिर्यग्गतस्वस्तिकाग्रम् ।

---

१ ख. वर । २ ज. °ख्यं तु निर्णी° । ३ ज. °मुन्नतः । ४ ज. °र्यग्वासं स्व° ।

कस्यचिन्मणिबन्धे तु लुठितोऽन्यस्ततः करः ।
बहिर्मण्डलगः स्थित्वा तथाऽन्तर्मण्डलैरपि ॥
यत्र प्रवर्तते तत्तु मणिबन्धगतागतम् ।

**इति मणिबन्धगतागतम् ।**

अन्तर्बहिश्चक्रचरः कश्चिद्धस्तः पराङ्मुखः ।
अपरोऽलातचक्रस्य कुरुते च[१] विडम्बनम् ॥
अलातचक्रकाख्यं तत्तद्विद्याः परिचक्षते ।

**इत्यलातचक्रकम् ।**

पूर्वं पार्श्वमुखावेव निर्गतौ तत्र वेगतः ।
तीक्ष्णकूर्परकावेव द्विगुणत्वावलम्बनौ[२] ॥
संश्लिष्टावूर्ध्ववदनौ भूतलाभिमुखौ ततः ।
यत्र स्यातां करौ तत्तु[३] व्यस्तोत्लुतनिवर्तकम् ॥

**इति[४] व्यस्तोत्लुतनिवर्तकम् ।**

प्रथमं स्वस्तिकं भूयो बहिरेव विनिर्गतौ ।
वेगान्निवृत्तावन्योन्यं सांमुख्यं भजतः करौ ॥
यत्रोरभ्रकसंबाधं तदुक्तं तपतां वर ॥

**इत्युरभ्रसंबाधम् ।**

तिर्यगूर्ध्वं प्रथमतः कृत्वैकं नाभिदेशगम् ।
तिर्यक्पार्श्वान्तरायातं करमन्यं प्रकल्प्य च ॥
या क्रिया जायते सा तु तिर्यक्काण्डवचालय(न?)म् ।

**इति तिर्यक्काण्डवचालनम् ।**

ऊर्ध्वाधोवदनौ कृत्वा पर्यायेण विलासतः ।
तत्रैव मण्डलाकारभ्रान्तौ कृत्वा तु पूर्ववत्[६] ॥
शिरःक्षेत्रे च कट्यां च पार्श्वयो[७]र्गतिपूर्वकम् ।
यत्र स्यातां करौ तत्तु धनुर्वल्लीविनामकम् ॥

**इति धनुर्वल्लीविनामकम् ।**

वर्तनास्वस्तिकं कृत्वा युगपत्पार्श्वयोर्द्वयोः ॥
यदि स्यातां करौ प्राहुस्तार्क्ष्यपक्षविलासक(सित?)म् ।

**इति तार्क्ष्यपक्षविलासकम् ।**

---

१ ख. ग. न । २ ख. ग. °नौ । अश्लिष्टापूर्वव° । ३ ख. °त्तु बस्तो° । ४ ख. °ति बस्तो° । ५ ग. 'गान्नि°' । ६ ख. ग. °त् । करः क्षे° । ७ ख. ग. °योर्नेति° ।

प्रथमं पार्श्वयोर्गत्वा प्रसार्य च विदिश्यनु ।
निबद्धस्वस्तिकौ तत्र कटीमौलिगतौ मिथः ॥
बालव्यजनचालाख्यक्रियां पूर्ववदाश्रितौ ।
वर्तनास्वस्तिकं बद्ध्वा भूतलाभिमुखौ ततः ॥
समुत्थितौ मण्डलतः स्वस्तिकौ पतितावधः ।
कृत्वैकं भ्रामितं चांसे तदन्यं रथचक्रवत् ॥
भ्रामयित्वा विलासेन तदान्दोलितकर्मणा ।
सर[1]लोत्सारि[2]तोद्वेष्टतत्प्रसारिकनम्रकौ (?) ॥
एकैकलुठितो स्वैरमंसान्ते मण्डलोर्ध्वगौ ।
विश्रुताभिमुखौ चैव पर्यायेण तु यत्र वै ॥
पतितोत्पतितौ बाहु[3]रूर्ध्वः कट्यवसानकम् (?) ।
ततः स्वस्तिकबन्धेन कमनीयेषु केषुचित् ॥
अरं तत्र प्रदेशेषु वामदक्षिणघूर्णितौ ।
अन्तर्बहिश्चक्रभावं सविलासमथाऽऽश्रितौ ॥
कूर्परस्वस्तिकेनैव पराचीनप्रलोलितौ ।
अथवा सरलत्वेन केवलं द्रुतमानतः ॥
वामदक्षिणयो[4]ः पश्चात्रिकपर्यन्तलो[5]डितौ ।
एकैकं स्वस्तिकं चाथ नयनानन्ददायकौ ॥
ऊर्ध्वाधोवदनौ त्र्यस्रकरौ यत्र गतौ मुने ।
कररेचकरत्नाख्यं [6]लक्षितं तत्पुरारिणा ॥
इदं तु कमनीयं वै यत्र यत्र प्रयुज्यते ।
यक्षा विद्याधराः सिद्धाः पद्मभूश्च महर्षयः ॥
तत्र तत्र प्रदेशेषु प्रीतास्तिष्ठन्त्यलक्षिताः ।
इन्द्रादिदेवाः प्रीताः स्युः प्रीणाति परमेश्वरः ॥
ग्रन्थविस्तरभीतेन कथ्यते नास्य विस्तरः ।

इति कररेचकरत्नम् ।

---

[7]एकस्मिंस्तु पराचीने लुठमाने विलासतः ।
अन्यो हस्तः शिरःक्षेत्रपर्यन्तं चेद्रुतागतः ॥

---

१ ख. °रातोत्सा° । २ ख. °रितौ द्वेष्टित° । ३ ख. ग. °हुर्मूर्धः कं व्याव° । ४ ख. ग. °योः पार्श्वात्रि° । ५ ख. ग. °लोठितौ । ६ ख. ग. लक्षणं । ७ ख. ग. एतस्मिं° ।

पुनस्तन्मुख एव स्याच्छरसंधाननाम तत् ।

**इति शरसंधानम् ।**

अभ्यन्तराविद्धेन चक्रकभ्रान्तिपूर्वकम् ।
अनुप्रलोड्य डो(दो)लावद्या क्रिया पार्श्वयोर्द्वयोः ॥
प्रातिलोम्यन वा स्यात्तु मण्डलाभरणं तु तत् ।

**इति मण्डलाभरणम् ।**

आदौ तु स्वस्तिकं बद्ध्वा कलासावसरेऽपि च(?) ।
निष्क्रान्तावंसदेशात्तु पर्यायेण कटीं प्रति ॥
स्यातां चेद्यत्र हस्तौ तदंसपर्यायनिर्गतम् ।

**इत्यंसपर्यायनिर्गतम् ।**

वामदक्षिणपाश्चात्यपुरोभागेषु सर्वतः ।
स्वस्तिकान्मण्डलाग्राह्य(?) द्युगपत्क्रमेशोऽथवा ॥
अष्टासु दिक्षु स्यातां चेत्करौ विलुठितौ ततः ।
अष्टबन्धविहाराख्यं निरणायि मनीषिभिः ॥

**इत्यष्टबन्धविहारम् ।**

पर्यायतुष्टौ लुठितौ तिर्यक्कर्णसमीपतः ।
पार्श्वे स्वस्मिन्नुरःक्षेत्रपर्यन्तं हि यदा करौ ॥
सुमन्तुना तदुद्दिष्टं कर्णयुग्मप्रकीर्णकम् ।

**इति कर्णयुग्मप्रकीर्णकम् ।**

तिर्यग्लुठति चैकस्मिन्नपरश्चेत्प्रसारितः ।
क्रमेण यत्र तत्प्रोक्तं पर्यायगजदन्तकम् ॥

**इति पर्यायगजदन्तकम् ।**

आदौ मध्येऽवसाने च स्वस्तिकाकारधारिणौ ।
रथचक्राकृती तिर्यग्युगपत्क्रमशोऽथवा ॥
लुण्ठितौ चेत्करौ तत्तु रथनेमिसमाह्वयम् ।

**इतिरथनेमि ।**

प्रथमं स्वस्तिकी भूत्वा कुञ्चितावूर्ध्वगौ पुनः ।
तथा वामांसपर्यन्तं पर्यायाच्चेद्गतौ करौ ॥
तत्स्वस्तिकत्रिकोणाख्यं क्षेमराजेन लक्षितम् ।

**इति स्वस्तिकत्रिकोणम् ।**

---

१ ज. 'अभ्यद्गनायवे' । २ ख. ग. 'मणेऽथ' । ३ ख. ग. लिख्यते ।

अन्तर्बहिश्चेद्वलितावूर्ध्वप्रोद्वेष्टितौ करौ ।
पर्यायात्पार्श्वयोस्तिर्यगेकस्मिल्लुँण्ठितोऽपरः ॥
स्याच्चेत्करस्तदुद्दिष्टं[1] लतावेष्टित(ष्टन)काभिधम् ।

इति[2] लतावेष्टित(ष्टन)कम् ।

विशिष्टवर्तिताद्यैश्च नवभिर्दशभिश्च वा ।
उक्तैः संकरसंसृष्टिरूपेण परिकल्पितैः ॥
आधम्मिल्लसमुत्क्षिप्तैस्ततः स्वस्तिकबन्धनैः ।
अपराङ्गपरावृत्तौ भूतलाभिमुखौ ततः ॥
मण्डलौ च तिरश्चीनौ साविद्धावपविद्धकौ ।
युगपत्क्रमशो वाऽथ तत्कालार्हक्रियोचितौ ॥
आन्दोलितक्रियायुक्तौ भवेतां यत्र वै करौ ।
नवरत्नमुखं तत्र प्राह **लोहितभट्टकः** ॥

इति नवरत्नमुखम् ।

इतीदं तपतांश्रेष्ठ यदादिष्टं स्वयंभुवा ।
लक्षणं चालया(का)नां वै प्रत्यपादि मयाऽधुना ॥
एते सौभाग्यविजयप्रस्ताना(वा)मरभूरुह(हः) ।
देवानां भूसुराणां च पार्थिवानां प्रियंकराः ॥
अनन्तमङ्गलग्राह्यलीलाविभ्रममण्डनाः ।
नृत्तलक्ष्यविशेषेण प्राणसर्वस्वमेव च ॥
यथार्हं ते प्रयुक्ताः स्युः कीर्तिमङ्गलदायकाः ।
बहुनाऽत्र किमुक्तेन संध्याकालेषु सर्वदा ॥
नानानृत्तकलोल्लासशालिनोऽपि महेशितुः ।
अल्पप्रकसंज्ञास्ते संकीर्णा नेह लक्षिताः ॥
अत्यन्तवल्लभाश्चैव सिद्धानां नाकिनामपि ।
अतो वियुक्ता युक्ताश्च हस्ता नृत्ताश्रयाः परे ॥
प्रसङ्गानुप्रसङ्गेन कोहलेन मया दिश(?) ।
यथालक्षणमाख्याता मुनिशार्दूल तत्त्वतः ॥

इति कोहलशार्दूलसंवादे संगीतमेरौ युक्तायुक्तनृत्तहस्ताश्रयचालय(क)भेदप्रभेदलक्षणं नाम द्वितीयमाह्निकं समाप्तम् ॥ ३९२ ॥

---

१ ख. ग. 'ष्टं तिलकावेष्टिताभि' । २ ख. ग. 'ति तिलकावे' ।

अथैषां चालकानां प्रयोगस्य विषयं दर्शयति—

**ओतावत्सरिगोणीनां पदस्य मलपस्य च ॥ ३५३ ॥**
**गजरोपशमस्यान्ते खण्डेऽप्येलादिगामिनि ॥**
**सालगस्थध्रुवाद्यन्ते यच्च प्रहरणं भवेत् ॥ ३५४ ॥**
**तदन्तखण्डेऽन्यत्रापि प्रोद्धते तुण्डकैशिके ॥**
**कवितेऽपि प्रयोज्यास्ते नान्यत्रेत्यूचिरे परे ॥ ३५५ ॥**

**ओतेत्यादि** । ओतादयो वाद्यप्रबन्धाः पूर्वमुक्ताः । गजरप्रबन्धान्तर्गतत्वेन चोपशम उक्तः । एतेषामन्ते खण्डे प्रयोज्या इति वक्ष्यमाणेन संबन्धः । **एलादिगामिन्यपीति** । एलादीञ्शुद्धान्गीतप्रबन्धान्गच्छतीत्येलादिगामी [तस्मिन्] । अत्रापिशब्देनान्तखण्डः समुच्चीयते । तथा सालगस्थध्रुवादीनामन्ते खण्ड इत्यनुषङ्गः । **यच्च** प्रहरणं वाद्यप्रबन्धविशेषः, तदन्तखण्डे प्रयोज्याः । मतान्तरमाश्रित्याऽऽह—**अन्यत्रापीति** । पर आचार्याः । **अन्यत्रेति** । ध्रुवादीनामन्तिमखण्डव्यतिरिक्त इत्यर्थः । तुण्डकैशिके प्रोद्धत इति विशेषपदं प्रकरणादनुषञ्जनीयम् । **तुण्डकैशिक इति** । तुण्डं मुखं प्रारम्भ इत्यर्थः । तत्र कैशिकं सुकुमारम् । अयमर्थः—यद्गीतखण्डं मुखे प्रारम्भे सुकुमारं भवति पश्चाद्भागे प्रोद्धतं भवति । यद्वा मुखे प्रथमावृत्तौ सुकुमारं भवति तद्गीतखण्डं तुण्डकैशिकं प्रोद्धतमित्युच्यते । तत्रोद्धतांशे चालकाः प्रयोज्या इत्यर्थः । **कवितेऽपीति** । कवितं नाम वाद्यप्रबन्धविशेषः । तत्रापि बाहुल्याद्दीप्तनृत्तमित्युक्तम् । तस्मिन्नंशे प्रयोज्या इत्यर्थः । कवितेऽपीत्यनेनोचिर इति(त्यस्य) संबन्धः ॥ ३५३ ॥ ॥ ३५४ ॥ ३५५ ॥

## इति बाहुप्रकरणम् ।

---

अथ पृष्ठोदरयोः प्रभेदाँल्लक्षयितुमाह—

**पृष्ठं[3] तु जठरोक्ताभिर्वर्तनाभिर्विवर्तते ॥**
**अतो न तत्पृथग्वाच्यं जठरं तूच्यतेऽधुना ॥ ३५६ ॥**
**क्षामं खल्लं तथा पूर्णं त्रेधा[4] जठरमिष्यते ॥**
**क्षामं स्यान्नमनाज्जृम्भाहास्यनिश्वासरोदने ॥ ३५७ ॥**

**इति क्षामम् ।**

**निम्नं खल्लं क्षुधार्ते स्यादातुरे श्रमकर्शिते ॥**
**वेतालभृङ्गिरिट्याद्यजठराकारधारि तत् ॥ ३५८ ॥**

**इति खल्लम् ।**

---

१ ङ. रुण्डकैशिके । च. तुण्डकैशिरे । २ ख. ग. औडवकैशिके । ३ च. °ष्ठं तज्जठ° । ४ ख. ग. त्रिधा । ५ ङ. °म्भालस्य° । च. °म्भाहासनि° । ६ घ. °लभृङ्गि° ।

पूर्णं स्थूलं व्याधिते स्यात्तुन्दिलेऽत्यशिते तथा ॥

इति पूर्णम् ।

अन्येऽन्वर्थं रिक्तपूर्णं श्वासरोगेऽपरं जगुः ॥ ३५९ ॥

पृष्ठं त्वित्यादि। जठरोक्ताभिवर्तनाभिर्विवर्तत इति। जठरं क्षामं चेत्पृष्ठमक्षामं भवति। जठरं खल्लं चेत्पृष्ठं पूर्णं भवति। जठरस्य रिक्तपूर्णत्वे पृष्ठस्य पूर्णरिक्तत्वमित्यर्थः ॥ ३५६ ॥ ३५७ ॥ ३५८ ॥ ३५९ ॥

इति रिक्तपूर्णम् ।

इति *चतुर्धोदरम् ।

---

कम्पितो वलितः स्तब्धोद्वर्तितौ च निवर्तितः ॥

इत्यूरुः पञ्चधा तत्र मुहुः पार्श्वे नतोन्नते ॥

यस्यासौ कम्पितो ज्ञेयोऽधमानां गमने च सः ॥ ३६० ॥

अथोरुजङ्घामणिबन्धजानुभूषणभेदानां लक्षणानि ग्रन्थत एव सुबोधानि ॥ ३६० ॥

इति कम्पितः ।

वलितोऽन्तर्गते जानुन्यूरुः स्वैरगतौ स्त्रियाः ॥ ३६१ ॥

इति वलितः ।

स्तब्धस्तु निष्क्रियः स स्याद्विषादे साध्वसे तथा ॥

इति स्तब्धः ।

पार्ष्णेरन्तर्बहिःक्षेपात्क्षेपादग्रतलस्य च[2] ॥

मुहुरुद्वर्तितः स स्याद्व्यायामे ताण्डवे तथा ॥ ३६२ ॥

इत्युद्वर्तितः ।

निवर्तितोऽन्तर्गतया पार्ष्ण्या स्यात्संभ्रमे श्रमे ॥

इति निवर्तितः ।

इति पञ्चधोरुः ।

---

आवर्तिता नताक्षिप्तोद्वाहिता परिवर्तिता ॥

इति पञ्चविधा जङ्घा शार्ङ्गदेवेन कीर्तिता ॥ ३६३ ॥

॥ ३६१ ॥ ३६२ ॥ ३६३ ॥

---

* °धोदरमित्यारभ्य प्रसन्नो निर्मल इत्यन्तो ग्रन्थांशः—ख. ग. संज्ञितयोः पुस्तकयोस्त्रुटितः ।

---

१ च. अन्वर्थं रिक्तपूर्णं स्याच्छ्वासरोगे परे ज° । २ च. वा ।

निःसृता च परावृत्ता तिरश्चीना बहिर्गता ॥
कम्पितेत्यपराः पञ्च जङ्घाः संचक्षते परे ॥ ३६४ ॥
वामे दक्षिणतः पादे दक्षिणे वामतः कृते ॥
मुहुरावर्तिता प्रोक्ता विदूषकपरिक्रमे ॥ ३६५ ॥

इत्यावर्तिता ।

नमज्जानुर्नता जङ्घा स्थानासनगतादिषु ॥

इति नता ।

बहिर्विक्षेपतः क्षिप्ता व्यायामे ताण्डवे च सा ॥ ३६६ ॥

इति क्षिप्ता ।

ऊर्ध्वं नीतोद्वाहिता स्यादाविद्धगमनादिषु ॥

इत्युद्वाहिता ।

प्रतीपं गच्छतो जङ्घा ताण्डवे परिवर्तिता ॥

इति परिवर्तिता ।

---

पुरः प्रसारिता जङ्घा निःसृता परिकीर्तिता ॥ ३६८ ॥

इति निःसृता ।

पश्चाद्गता परावृत्ता भूमिलग्नेन जानुना ॥
वामेन पितृकार्ये स्यादन्येन सुरकर्मणि ॥ ३६९ ॥

इति परावृत्ता ।

भूमिलग्नबहिःपार्श्वा तिरश्चीनाऽऽसने मता ॥

इति तिरश्चीना ।

बहिर्गता मता जङ्घा नृत्ते पार्श्वप्रसारिता ॥ ३७० ॥

इति बहिर्गता ।

कम्पनात्कम्पिता भीतौ कार्या घर्घरिका ध्वनौ ॥

इति कम्पिता ।

इति दशधा जङ्घा ।

---

पञ्चधा मणिबन्धः स्यान्निकुञ्चाकुञ्चितौ चलः ॥ ३७१ ॥

॥ ३६४ ॥ ३६५ ॥ ३६६ ॥ ३६७ ॥ ३६८ ॥ ३६९ ॥ ३७० ॥ ३७१ ॥

---

१ च. विसृता । २ च. न्ये तु सु° ।

भ्रमितः सम इत्यत्र निकुञ्चस्तु स उच्यते ॥
यो बहिर्निम्नतां नीतः स दानाभयदानयोः ॥ ३७२ ॥

इति निकुञ्चः ।

आकुञ्चितोऽन्तर्निम्नोऽसौ कार्योऽपसरणे बुधैः ॥

इत्याकुञ्चितः ।

निकुञ्चा कुञ्चिताभ्यासाच्चलमावाहने विदुः ॥ ३७३ ॥

इति चलः ।

भ्रमितो भ्रमणात्खड्गच्छुरिकाभ्रामणादिषु ॥[1]

इति भ्रमितः ।

ऋजुः समः पुस्तकस्य धारणे[2] च प्रतिग्रहे ॥ २७४ ॥

इति समः ।

इति पञ्चधा मणिबन्धः ।

---

संहतं कुञ्चितं चार्धकुञ्चितं नतमुन्नतम् ॥
विवृतं सममित्यूचे जानु सप्तविधं बुधैः ॥
श्लिष्टान्यजानु जानूक्तं ह्रीरोषेर्ष्यासु संहतम् ॥ ३७५ ॥

इति संहतम् ।

जानु लग्नोरुजङ्घं तु भवेत्कुञ्चितमासने ॥

इति कुञ्चितम् ।

नितम्बनमनाज्जानु त्वर्धकुञ्चितमुच्यते ॥

इत्यर्धकुञ्चितम् ।

महीगतं नतं जानु मतं पाते नमस्कृतौ ॥ ३७७ ॥

इति नतम् ।

स्तनक्षेत्रागतं[3] जानून्नतं शैलादिरोहणे ॥

इत्युन्नतम् ।

गजारोहे तु विवृतं जानुद्वंद्वं बहिर्गतम् ॥

इति विवृतम् ।

समं स्वाभाविकं जानु स्वभावावस्थितौ भवेत् ॥ ३७८ ॥

इति समम् ।

इति सप्तधा जानु ।

---

॥ ३७२ ॥ ३७३ ॥ ३७४ ॥ ३७५ ॥ ३७६ ॥ ३७७ ॥ ६७८ ॥

---

१ च. 'ड्गक्षुरि' । २ ड. 'णे संप्र' । ३ ड. 'क्षेत्रग' ।

तत्तद्देशंजुषो भूषा भूषणानीति मन्वते ॥ ३७९ ॥

॥ ३७९ ॥

इति नव प्रत्यङ्गानि ।

---

कान्ता हास्या च करुणा रौद्री वीरा भयानका ॥
बीभत्सा चाद्भुतेत्यष्टौ द्रष्टव्या रसदृष्टयः ॥ ३८० ॥

अथोपाङ्गेषु प्रथमोद्दिष्टाया दृष्टेर्भेदानुद्दिशति—कान्ता हास्येत्यादि ॥ ३८० ॥

स्निग्धा हृष्टा तथा दीना क्रुद्धा दृप्ता भयान्विता ॥
जुगुप्सिता विस्मितेति दृशोऽष्टौ स्थायिभावजाः ॥
स्थायिष्वव्यभिचारित्वं प्राप्तेषु स्थायिदृष्टयः ॥ ३८१ ॥

स्थायिष्वव्यभिचारित्वं प्राप्तेषु स्थायिदृष्टय इति । स्थायिष्वित्यादि(ष्विति) स्थायिभावेषु । अव्यभिचारित्वं प्राप्तेष्विति व्यभिचारित्वमप्राप्तेष्वित्यर्थः । रत्यादीनां व्यभिचारित्वप्राप्तिरपि शृङ्गारादिर्रसपर्यन्ततां विहाय विरुद्धभावान्तरबाध्यत्वेन यदेवाभूता(?)रत्यादयो भवन्ति तदा स्निग्धादयः स्थायिदृष्टयः ॥ ३८१ ॥

शून्या च मलिना श्रान्ता लज्जिता शङ्किता तथा ॥
मुकुला चार्धमुकुला ग्लाना जिह्मा च कुञ्चिता ॥ ३८२ ॥
वितर्किताऽभितप्ता च विषण्णा ललिताभिधा ॥
आकेकरा विकोशा च विभ्रान्ता विप्लुता परा ॥ ३८३ ॥
त्रस्ता च मदिरेत्येता व्यभिचारिषु विंशतिः ॥
सर्वास्ता मिलिताः सत्यः षट्त्रिंशद्दृष्टयो मताः ॥ ३८४ ॥

अन्यथा व्यभिचारित्वं प्रापितेष्विति दृष्टय एवेत्यर्थः (?) ॥ ३८२ ॥ ३८३ ॥ ॥ ३८४ ॥

आपिबन्तीव दृश्यं या सविकासाऽतिनिर्मला ॥
सभ्रूक्षेपकटाक्षा सा कान्ता मन्मथवर्धिनी ॥ ३८५ ॥

कान्तादीनां षट्त्रिंशद्दृष्टीनां लक्षणानि स्पष्टानि ॥ ३८५ ॥

यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम् ॥
तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते ॥ ३८६ ॥

॥ ३८६ ॥

इति कान्ता ।

---

१ घ. 'शपुषो । २ घ. 'यिषु व्य' । ३ च. 'षु रसदृ' । ४ ख. 'दि समर्पयततां । ५ च. विशोका । ६ घ. ङ. 'वर्धनी ।

किंचिदन्तःसमाविष्टविचित्रभ्रान्ततारका ॥ ३८७ ॥
आकुञ्चितपुटा मन्दमध्यतीव्रतया क्रमात् ॥
विस्मापनेऽभिनेतव्ये हास्या दृष्टिः प्रशस्यते ॥ ३८८ ॥
इति हास्या ।
पतितो[1]र्ध्वपुटो[2] सास्रा शोकमन्थरतारका ॥
नासाग्रमेवानुगता करुणादृष्टिरुच्यते ॥ ३८९ ॥
इति करुणा ।
च[3]कितद्विपुटा स्तब्धतारकाऽत्यन्तलोहिता ॥
रूक्षा भ्रुकुटिभीमोग्रा रौद्री दृष्टिरुदाहृता ॥ ३८९ ॥
इति रौद्री ।
अचञ्चला विकसिता गम्भीरा समतारका ॥
दीप्ता संकुचितापाङ्गा वीरा धीरैरुदाहृता ॥ ३९१ ॥
*औदार्यधै[4]र्यगाम्भीर्यमाधुर्यललितान्यपि ॥
तेजःशोभाविलासांश्च सप्त भेदान्विवृण्वती ॥ ३९२ ॥
इति वीरा ।
स्तब्धोद्वृत्तपुटाऽत्यन्तचञ्चलोद्वृत्ततारका ॥
दृश्यात्पलायमाने च भीत्या दृष्टिर्भयानका ॥ ३९४ ॥
इति भयानका ।
बीभत्सा स्यान्मिलल्लोलपक्ष्मा तरलतारका ॥
दृश्योद्वेगादपाङ्गौ च निकुञ्चितपुटौ श्रिता ॥ ३९४ ॥
इति बीभत्सा ।
प्रसन्ना स्निग्धशुक्लांशान्तर्वहिर्गामितारका ॥
ईषत्कुञ्चितपक्ष्माग्राऽद्भुतापाङ्गविकासिनी ॥ ३९५ ॥
इत्यद्भुता ।
रसेष्वष्टासु शृङ्गारप्रमुखेषु क्रमादिमाः ॥ ३९६ ॥
इत्यष्टौ रसदृष्टयः ।

---

॥ ३८७ ॥ ३८८ ॥ ३८९ ॥ ३९० ॥ ३९१ ॥ ३९२ ॥ ३९३ ॥ ३९४॥
॥ ३९५ ॥ ३९६ ॥

---

* औदार्येत्यादिश्लोको 'ङ' पुस्तके न विद्यते ।

---

१ घ. ङ. °तोऽर्धपु° । २ घ. °टा साश्रुः शो° । च. °टा स्रस्ताक्रोशम° । ३ च. विकटद्वि-पुटा । ४ घ. °र्यस्थैर्य° । ५ घ. °भ्रा शुद्धशु° ।

रसदृष्टि[1]र्भवेद्भावदृष्टिर्भावैरनुल्बणैः ॥
विकासिस्निग्धा मधुरा चतुरे विभ्रती भ्रुवौ ॥ ३९७ ॥
कटाक्षिणी साभिलाषा दृष्टिः स्निग्धाऽभिधीयते ॥
अत्रैकभ्रूसमुत्क्षेपमाहुः कीर्तिधरादयः ॥ ३९८ ॥

इति स्निग्धा ।

फुल्लगल्ला विशत्तारा किंचिदाकुञ्चितौ[2] चला ॥
निमेषिणी स्मिताकारा हृष्टा दृष्टिरुदाहृता ॥ ३९९ ॥

इति हृष्टा ।

या त्वर्धपतितो[3]र्ध्वस्थपुटेषद्रुद्धतारका ॥
सबाष्पा मन्दसंचारा दीना दृष्टिरसौ मता ॥ ४०० ॥

इति दीना ।

स्थिरोद्वृत्तपुटां रूक्षां किंचित्तरलतारकाम् ॥
भ्रुकुटी[4]कुटिलां दृष्टिं क्रुद्धां ब्रूते हरप्रियः ॥ ४०१ ॥

इति क्रुद्धा ।

सत्त्वमुद्गिरती दृष्टिर्दृप्ता विकासिता स्थिरा[5] ॥ ४०२ ॥

इति दृप्ता ।

म[6]ध्यनिर्गमनोद्युक्ता भावविस्फारितौ पुटौ ॥
तारके कम्पिते यस्याः सा स्याद्दृष्टिर्भयान्विता ॥ ४०३ ॥

इति भयान्विता ।

अस्पष्टालोकिनी मीलत्तारका संकुचत्पुटा ॥
दृश्यं दृष्ट्वा समुद्विग्ना दृष्टिरुक्ता जुगुप्सिता ॥ ४०४ ॥

इति जुगुप्सिता ।

दूरविस्फारिताकारपुटद्वंद्वविकाशिनी ॥
निश्चला दृष्टिरुद्वृत्ततारका विस्मिता स्मृता ॥ ४०५ ॥

इति विस्मिता ।

दृष्टयोऽष्टासु रत्यादिस्थायिभावेष्विमाः क्रमात् ॥

इत्यष्टौ स्थायिभावदृष्टयः ।

॥ ३९७ ॥ ३९८ ॥ ३९९ ॥ ४०० ॥ ४०१ ॥ ४०२ ॥ ४०३ ॥४०४ ॥
॥ ४०५ ॥

---

१ च. 'ष्टिर्भावदृष्टिभावैस्तु लक्षणैर्भवेत् । वि° । २ च. °ताश्चला । ३ च. °तितस्तब्धपुटे° । ४ ङ. °टीतरलां दृ° । ५ ङ. स्थिता । ६ ङ. मध्यान्निर्गमनोद्युक्तं भाति विस्तारि° ।

समतारापुटा दृश्यदृष्टिशून्या विलोकिनी ॥
निष्कम्पा धूसरा शून्या चिन्तायां दृष्टिरिष्यते ॥ ४०६ ॥
इति शून्या ।
दृश्यादपसृते तारे किंचिन्मुकुलितौ पुटौ ॥
दधत्यपाङ्गौ विच्छायौ पक्ष्माग्रस्यन्दनं[1] तथा ॥ ४०७ ॥
दृष्टिः स्यान्मलिता स्त्रीणां विहृते सा प्रयुज्यते ॥
प्राप्ते कालेऽप्यसंलापः प्रियेण विहृतं मतम् ॥ ४०८ ॥
इति मलिना ।
अदूरालोकिनी म्लानपुटाऽप्यलसचारिणी ॥
पतत्तारा[2] मनाकुञ्चत्प्रान्ता श्रान्ता श्रमे मता ॥ ४०९ ॥
इति श्रान्ता ।
मिथोऽभिगामिपक्ष्माग्राऽप्यधस्ताद्गततारका ॥
पतितोर्ध्वपुटा दृष्टिर्लज्जायां लज्जिता मता ॥ ४१० ॥
इति लज्जिता ।
मुहुश्चलस्थिरा पार्श्वालोकिनी बहिरुन्मुखी ॥
गूढावलोकिनी शीघ्रं[3] विनिवृत्ता विलोकनात् ॥
शङ्कायां शङ्किता दृष्टिरुक्ता निःशङ्कसूरिणा ॥ ४११ ॥
इति शङ्किता ।
स्फुरत्संश्लिष्टपक्ष्माग्रा सुखविश्रान्ततारका ॥
मुकुला दृष्टिरानन्दे हृद्ययोः स्पर्शगन्धयोः ॥ ४१२ ॥
इति मुकुला ।
अर्धव्याकोशिते किंचिद्भ्रमन्त्यौ तारके पुटौ ॥
यत्रार्धमीलितौ साऽर्धमुकुलार्थे सुखप्रदे ॥ ४१३ ॥
इत्यर्धमुकुला ।
मज्जत्तारा मन्दचारा शिथिला विकलैरिव ॥
पक्ष्माग्रभ्रूपुटैर्युक्ता ग्लाना ग्लानौ विधीयते[4] ॥ ४१४ ॥
॥ ४०६ ॥ ४०७ ॥ ४०८ ॥ ४०९ ॥ ४१० ॥ ४११ ॥ ४१२ ॥ ४१३ ॥ ४१४ ॥
इति ग्लाना ।

---

१ ङ. विस्मिते । २ च. °तन्नीरा । ३ घ. ङ. °घ्रं निवृत्ता च वि° । ४ ङ. °ला दृष्टिरुच्यते । इ° ।

किंचित्कुञ्चत्पुटा गूढपतत्तारा विलोकने ॥ ४१५ ॥
शनैस्तिर्यङ्निगूढं या सा जिह्मा विनियुज्यते ॥
असूयायां निगूढेऽर्थे जडतालस्ययोरपि ॥ ४१६ ॥

इति जिह्मा ।

किंचिच्चेत्कुञ्चितानि स्युः पक्ष्माग्राणि पुटावपि ॥
सम्यक्च कुञ्चिता तारा तदा दृक्कुञ्चितोच्यते ॥
अनिष्टे सूचिते तेजो दुष्प्रेक्ष्येऽक्षिण्यथासु सा ॥ ४१७ ॥

इति कुञ्चिता ।

उद्भ्रामितपुटोत्फुल्लताराऽधःसंचरन्त्यपि ॥
वितर्कितोदिता दृष्टिर्वितर्के साऽभिधीयते ॥ ४१८ ॥

इति वितर्किता ।

विलोकनालसे तारे व्यथाप्रचलितौ पुटौ ॥ ४१९ ॥
यस्याः संतप्तवद्भान्ति साऽभितप्ताऽभिधीयते ॥
निर्वेदे वेदितव्या साऽप्यभिघातोपतापयोः ॥ ४२० ॥

इत्यभितप्ता ।

या दृष्टिः पतितापाङ्गा विस्तारितपुटद्वया ॥
निमेषिणी स्तब्धतारा विषण्णा सा विषादिनी ॥ ४२१ ॥

इति विषण्णा ।

मधुरा कुञ्चितापाङ्गा सभ्रूक्षेपा स्मितान्विता ॥
मन्मथोन्मथिता दृष्टिर्ललिता ललिते मता ॥ ४२२ ॥

इति ललिता ।

किंचित्कुञ्चत्पुटापाङ्गा दृष्टिरर्धनिमेषिणी ॥
पृथक्पथे चान्यनेत्रान्मुहुस्ताराविवर्तिनी ॥
आकेकरा दुरालोके स्याद्विच्छन्दे च वस्तुनि ॥ ४२३ ॥

इत्याकेकरा ।

विकासितपुटद्वंद्वा विकासिन्यनिमेषिणी ॥
अनवस्थिततारा च विकोशा कीर्तिता बुधैः ॥ ४२४ ॥

॥ ४१५ ॥ ४१६ ॥ ४१७ ॥ ४१८ ॥ ४१९ ॥ ४२० ॥ ४२१ ॥ ४२२ ॥
॥ ४२३ ॥ ४२४ ॥

---

१ च. 'म्यग्दृक्कुञ्चि' । २ ड. 'थगर्थे चा' । ३ ड. 'द्विच्छेदे च ।

ज्ञानविज्ञानगर्वे सा स्यादमर्षोग्रदर्शने ॥ ४२५ ॥

इति विकोशा ।

या तु क्वचिदविश्रान्तमविस्रब्धं विलोकते[1] ॥

विस्तीर्णा चञ्चलोत्फुल्लतारा सा दृष्टिरुच्यते ॥

विभ्रान्ता विभ्रमे वेगे[2] संभ्रमे च भवेदसौ ॥ ४२६ ॥

इति विभ्रान्ता ।

पुटौ विस्फुरितौ स्तब्धौ यस्याः स्तः पतितौ क्रमात् ॥

सा विप्लुताऽऽर्तिदुःखादावुन्मादे चापले तथा ॥ ४२७ ॥

इति विप्लुता ।

उत्कम्पोत्फुल्लतारा स्यात्त्रासे त्रस्तोद्भ्रमत्पुटा ॥ ४२८ ॥

इति त्रस्ता ।

मदिरा त्रिविधा प्रोक्ता तरुणे मध्यमेऽधमे ॥

मदे प्रयोगमर्हन्ती तत्तल्लक्ष्मसमन्विता ॥ ४२९ ॥

तीव्रो मदोऽधमोऽत्र स्यादधमे पुरुषे स्थितः ॥

दृष्टिर्विकसितापाङ्गा क्षामीभूतविलोचना ॥

आघूर्णमानतारा स्यान्मदिरा तरुणे मदे ॥ ४३० ॥

किंचित्कुञ्चत्पुटा किंचिदनवस्थितचारिणी ॥

दृष्टिः किंचिद्भ्रमत्तारा मदिरा मध्यमे मदे ॥ ४३१ ॥

*अधोभागे[3]चरी किंचिद्घूर्णतारा निमेषिणी ॥

यैर्न्नेत्रसिध्यनुन्मेषा(?)[4] मदिरा चाधमे मदे ॥ ४३२ ॥

इति त्रिविधा मदिरा ।

प्रदर्शनार्थमित्युक्ताः षट्त्रिंशद्दृष्टयो मया ॥

अनन्ताः सन्ति संदर्भाङ्कृतारापुटकर्मणाम् ॥ ४३३ ॥

दृष्टयस्ता विरञ्चोऽपि प्रत्येकं वक्तुमक्षमः ॥

लाघवात्तत्प्रबोधार्थं ब्रूमो भ्रूप्रभृतीन्यतः ॥ ४३४ ॥

॥ ४२५ ॥ ४२६ ॥ ४२७ ॥ ४२८ ॥ ४२९ ॥ ४३० ॥ ४३१ ॥ ४३२ ॥
॥ ४३३ ॥ ४३४ ॥

इति दृष्टिप्रकरणम् ।

---

* अधोभागेत्यादिश्लोकः ख. ग. ङ. संज्ञितेषु पुस्तकेषु नास्ति ।

---

१ च. °लोकिते । २ ङ. विभ्रमावेगे । च. विषमे वे° । ३ च. °गवती किं° । ४ घ. यत्रे प्रसिद्धादुन्मे° ।

सहजा पतितोत्क्षिप्ता रेचिता कुञ्चिता तथा ॥
भ्रुकुटी[1] चतुरा चेति प्रोक्ता भ्रूः सप्तधा बुधैः ॥
स्वाभाविकी स्यात्सहजा भावेष्वकुटिलेष्वसौ ॥ ४३५ ॥

अथ भ्रूभेदाँल्लक्षयितुमाह—सहजा पतितेत्यादि ॥ ४३५ ॥

इति सहजा ।

पतिता स्यादधो याता सद्वितीयाऽथवा क्रमात् ॥
उत्क्षेपे विस्मये हर्षे रोषेऽसूयाजुगुप्सयोः ॥
हासे घ्राणे च पतिते विधीयेतामुभे भ्रुवौ ॥ ४३६ ॥

॥ ४३६ ॥

इति पतिता ।

उत्क्षिप्ता संमताऽन्वर्था क्रमेण सह चान्यथा ॥
स्त्रीणां कोपे वितर्के च दर्शने श्रवणे निजे ॥
भ्रूर्लीलाहेलयोश्चैषा[2] कार्योत्क्षिप्ता विचक्षणैः ॥ ४३७ ॥

इत्युत्क्षिप्ता ।

एकैव ललितोत्क्षिप्ता रेचिता नृत्तगोचरा ॥ ४३८ ॥

इति रेचिता ।

केवला सद्वितीया वा मृदुभङ्गा निकुञ्चिता ॥
मोट्टायिते कुट्टमिते विलासे किलकिञ्चिते ॥ ४३९ ॥

इति निकुञ्चिता ।

आमूलात्सद्वितीया[3] भ्रूरुत्क्षिप्ता भ्रुकुटी क्रुधि ४४० ॥

इति भ्रुकुटी ।

सद्वितीयाऽल्पकस्पन्दादायता मन्थरा भवेत् ॥
चतुरा रुचिरे स्पर्शे शृङ्गारे ललिते च सा ॥ ४४१ ॥

---

एकोत्क्षिप्तास्यभ्रू(प्ताभ्रु)विनियोगे—लीलाहेलयोरिति । तत्र लीला नाम योषितां पुंसां शारीरो भावविशेषः । यथाऽऽह तल्लक्षणं भावप्रकाशकारः—

"...............मनो मधुरवागङ्गचेष्टनैः ।
प्रियानुकरणं लीला सा स्यात्स्त्रीपुंसयोरपि" इति ॥

तथा हेला नाम सात्त्विको भावविशेषः । यथा तेनैवोक्तं लक्षणम्—

"स एव हावो हेला स्याल्ललिताभिनयात्मिका ।
नानाप्रकाराभिव्यक्ता शृङ्गाराकारसूचिका" इति ॥

---

१ च. भृकुटी । २ घ. ङ. °श्चैका का° । ३ च. °या तु भ्रूः क्षिप्ता ।

॥ ४३७ ॥ ४३८ ॥ ४३९ ॥ ४४० ॥ ४४१ ॥

इति चतुरा ।

इति सप्तधा भ्रूः ।

---

प्रसृतौ कुञ्चितौ स्यातामुन्मेषितनिमेषितौ ॥
विवर्तितौ च स्फुरितौ पिहितौ च विता(चा)लितौ ॥ ४४२ ॥

अथ पुटयोर्भेदाल्लँक्षयति—प्रसृतावित्यादि ॥ ४४२ ॥

समौ च नवधेत्युक्तौ पुटौ सोढलसूनुना ॥
आयतौ प्रसृतौ स्यातां वीरे हर्षे च विस्मये ॥ ४४३ ॥

इति प्रसृतौ ।

आकुञ्चितौ कुञ्चितौ स्तो रूपादौ च मनोहरे ॥

इति कुञ्चितौ ।

उन्मेषितौ तु विश्लेषात्संश्लेषात्तु निमेषितौ ॥
विवर्तितौ समुद्वृत्तौ त्रयोऽमी क्रोधगोचराः ॥ ४४४ ॥

इत्युन्मेषितनिमेषितविवर्तिताः ।

---

स्फुरितौ स्पन्दितौ स्यातां तावीर्ष्याविषयौ मतौ ॥ ४४५ ॥

इति स्फुरितौ ।

अतीव कुञ्चितौ[1] लग्नौ पिहितौ तौ दृशो रुजि ॥
सुप्तिमूर्छातिवर्षोष्णधूमवाताञ्जनार्तिषु ॥ ४४६ ॥

इति पिहितौ ।

उत्तरेणाधराघातादभिघाते विचालितौ ॥
आहुरन्ये त्वदृश्यौ तौ[2]विति विस्फारणात्पुटौ ॥

इति विचालितौ ।

समौ स्वाभाविकावेतौ स्वभावाभिनये मतौ ॥ ४४७ ॥

॥ ४४३ ॥ ४४४ ॥ ४४५ ॥ ४४६ ॥ ४४७ ॥

इति समौ ।

इति नवधा पुटौ ।

---

१ घ. ङ. अतिसंकुचितौ । २ घ. तावतिवि॰ ।

अथ तारकाभेदाँल्लक्षयितुं तद्भेदकानि कर्माणि वक्तुमाह—

कर्मभिस्तारकाभेदा यैः स्युस्तान्यधुना ब्रुवे ॥
तानि द्वेधा स्वनिष्ठानि विषयाभिमुखानि च ॥ ४४८ ॥

**कर्मभिस्तारकाभेदाः स्युः । तानि कर्माण्यधुना ब्रुव इति ।** अयमभिप्रायः । नयनगोलकमाश्रितायास्तारकाया हस्तादिवत्स्वरूपगतभेदासंभवाद्भ्रमणादिकर्मभेदादेव ताराभेदोऽवगन्तव्य इति । तानि कर्माणि स्वनिष्ठत्वेन विषयाभिमुखत्वेन च द्वेधा भवन्तीत्याह—**तानि द्वेधेति** ॥ ४४८ ॥

भ्रमणं वलनं पातश्चलनं च प्रवेशनम् ॥
विवर्तनं[1] समुद्वृत्तं निष्क्रामः प्राकृतं तथा ॥ ४४९ ॥

तत्र स्वनिष्ठान्युद्दिश्य लक्षयति—**भ्रमणमित्यादि** ॥ ४४९ ॥

स्वनिष्ठानि नवेत्याहुस्ताराकर्माणि सूरयः ॥
तारयोर्मण्डलभ्रान्तिः पुटान्तर्भ्रमणं मतम् ॥ ४५० ॥
वलनं त्र्यस्रगमनं पातस्तु स्यादधोगतिः ॥
चलनं कम्पनं प्रोक्तमथ ज्ञेयं प्रवेशनम् ॥ ४५१ ॥
प्रवेशः पुटयोरन्तःकटाक्षस्तु विवर्तनम् ॥
उद्वृतिस्तु समुद्वृत्तमन्तरा निर्गमस्तु यः ॥ ४५२ ॥
स निष्क्रामः प्राकृतं तु स्वभावस्थितिरुच्यते ॥
समुद्वृतं च वलनं भ्रमणं वीररौद्रयोः ॥ ४५३ ॥
पातस्तु करुणे कार्यश्चलनं तु भयानके ॥
प्रवेशनं[2] तु वीभत्से हास्ये तु स्याद्विवर्तनम् ॥ ४५४ ॥
शृङ्गारे स्यात्तु निष्क्रामो वीरे रौद्रे भयानके ॥
अद्भुते च प्राकृतं तु भावेनाऽऽवेश[3]भागिनि ॥ ४५४ ॥

इति नव स्वनिष्ठानि ताराकर्माणि ।

---

विषयाभिमुखान्यष्टौ ताराकर्माण्यथ ब्रुवे ॥ ३५६ ॥
॥ ४५० ॥ ४५१ ॥ ४५२ ॥ ४५३ ॥ ४५४ ॥ ४५५ ॥ ४५६ ॥

*समं साच्यनुवृत्तावलोकितानि विलोकितम् ॥
उल्लोकितालोकिते च प्रविलोकितमित्यपि ॥ ४५७ ॥

विषयाभिमुखान्युद्दिश्य लक्षयति—**समं साचीत्यादि** ॥ ४५७ ॥

---

*च संज्ञितपुस्तके त्रुटितमेतच्छ्लोकार्धम् ।

---

१ च. निवर्तनं । २ ङ. °नं सर्वा° । ३ च. °शगामिनि ।

एतानि दर्शनान्याहुर्लक्ष्यलक्ष्मविचक्षणाः ॥
सौम्यं मध्यस्थतारं च दर्शनं सममुच्यते ॥ ४५८ ॥
इति समम् ।
साच्युच्यते तिरश्चीनपक्ष्मान्तर्गततारकम् ॥
इति साचि ।
रूपनिर्वर्णनायुक्तमनुवृत्तं मतं मुनेः ॥
निर्वर्णना क्रियाकार्त्स्न्यदिदृक्षाऽन्तश्चिरस्थिरा ॥ ४५९ ॥
इत्यनुवृत्तम् ।
अधस्थदर्शनं यत्तदवलोकितमुच्यते ॥
इत्यवलोकितम् ।
पृष्ठतो दर्शनं यत्तद्विलोकितमुदाहृतम् ॥ ४६० ॥
इति विलोकितम् ।
उल्लोकितं तदूर्ध्वस्थवस्तुनो यदवेक्षणम् ॥
इत्युल्लोकितम् ।
सहसा दर्शनं यत्तदालोकितमुदीरितम् ॥ ४६१ ॥
इत्यालोकितम् ।
पार्श्वस्थदर्शनं प्रोक्तं कृतिभिः प्रविलोकितम् ॥
इति प्रविलोकितम् ।
साधारणान्यमून्याहू रसभावेषु तद्विदः ॥ ४६२ ॥

॥ ४५८ ॥ ४५९ ॥ ४६० ॥ ४६१ ॥ ४६२ ॥

इत्यष्टौ दर्शनानि ।
कुञ्चितौ कम्पितौ पूर्णौ क्षामौ स्फुल्लौ समौ तथा ॥
कपोलौ षड्विधावुक्तौ तल्लक्षणमथोच्यते ॥ ४६३ ॥

अथ कपोलयोर्भेदाल्लँक्षयितुमाह—कुञ्चितौ कम्पितौ पूर्णावित्यादि ॥ ४६३ ॥

संकोचात्कुञ्चितौ रोमाञ्चितौ शीतज्वरे भये ॥
इति कुञ्चितौ ।
स्फुरितौ कम्पितौ कार्यौ रोमहर्षेषु सूरिभिः ॥ ४६४ ॥
इति कम्पितौ ।
कपोलावुन्नतौ पूर्णौ तौ गर्वोत्साहगोचरे ॥
इति पूर्णौ ।

---

१ च. °मुदाहृतम् । २ च. शीते ज्व° ।

क्षामौ त्ववनतौ ज्ञेयौ दुःखे कार्याविमौ नटैः ॥
इति क्षामौ ।
गण्डौ विकसितौ फुल्लौ प्रहर्षे परिकीर्तितौ ॥
इति फुल्लौ ।
समौ स्वाभाविकौ भावेष्वनावेशेषु तौ मतौ ॥ ४६३ ॥

॥ ४६४ ॥ ४६५ ॥ ४६६ ॥

इति समौ ।

इति षोढा कपोललक्षणम् ।

---

स्वाभाविकी नता मन्दा विकृष्टा च विकूणिता ॥ ४६७ ॥

अथ नासाभेदाँल्लक्षयितुमाह—स्वाभाविकी नतेत्यादि ॥ ४६७ ॥

सोच्छ्वासेत्युदिता नासा षड्विधा सूरिशार्ङ्गिणा ॥
स्वाभाविकी स्यादन्वर्था भावेष्वावेशवर्जिता ॥ ४६८ ॥
इति स्वाभाविकी ।
मुहुः संश्लिष्टविश्लिष्टपुटा नासा नता मता ॥
सोच्छ्वासाभिनये मन्दविच्छिन्नरुचिगोचरे ॥ ४६९ ॥
इति नता ।
मन्दा तु मन्दनिश्वासोच्छ्वासा नासाऽभिधीयते ॥
सा चिन्तौत्सुक्ययोः शोके निर्वेदे च विधीयते ॥ ४७० ॥
इति मन्दा ।
विकृष्टाऽत्यन्तमुत्फुल्लपुटा रोषार्तिभीतिषु ॥
ऊर्ध्वश्वासे च कर्तव्या घ्रातव्ये भूरिसौरभे ॥ ४७१ ॥
इति विकृष्टा ।
विकूणिता संकुचिता हास्येऽसूयाजुगुप्सयोः ॥ ४७२ ॥
इति विकूणिता ।
आकृष्टश्वसना नासा सोच्छ्वासा सौरभे भवेत् ॥
निर्वेदादिषु भावेषु दीर्घोच्छ्वासकरेषु च ॥ ४७३ ॥

॥ ४६८ ॥ ४६९ ॥ ४७० ॥ ४७१ ॥ ४७२ ॥ ४७३ ॥

इति सोच्छ्वासा ।

इति षोढा नासिका ।

---

१ घ. °वे साऽऽवेश° ।

स्वस्थौ चलौ प्रवृद्धश्च निरस्तोल्लासितावपि ॥
विमुक्तो विस्मितः श्वासः स्खलितः प्रसृतस्तथा ॥ ४७४ ॥

अथ नासास्यभवाननिलभेदाल्लँक्षयितुमाह—स्वस्थौ चलावित्यादि ॥ ४७४ ॥

एवमुच्छ्वासनिश्वासौ नवधा कोहलोदितौ ॥
समो भ्रान्तो [1]विलीनश्चाऽऽन्दोलितः कम्पि[2]तोऽपरः ॥ ४७५ ॥
स्तम्भितोच्छ्वास[3]निश्वाससूत्कृतानि च सीत्कृतम् ॥
एवं दशविधः प्रोक्तो लक्ष्यज्ञैर्मारुतोऽपरैः ॥ ४७६ ॥
स्वस्थावुच्छ्वासनिःश्वाससंज्ञौ वायू स्वभावजौ ॥
स्वस्थक्रियासु कर्तव्यावुक्तौ निःशङ्कसूरिणा ॥ ४७७ ॥

इति स्वस्थौ ।

उष्णौ दीर्घौ सशब्दौ च तौ मुखेन कृतौ चलौ ॥
कार्यावौत्सुक्यनिर्वेदशोकचिन्तास्विमौ मतौ ॥ ४७८ ॥

इति चलौ ।

प्रवृद्धः सन्सशब्देन वदनेन विनिर्गतः ॥
निःश्वासः स्यात्प्रवृद्धाख्यः क्षयव्याध्यादिगोचरः ॥ ४७९ ॥

इति प्रवृद्धः ।

सशब्दः सन्सकृत्क्षिप्तो निरस्तः कथ्यते मरुत् ॥
दुःखान्विते [4]सरागे च शान्ते चैप विधीयते ॥ ४८० ॥

इति निरस्तः ।

चिरान्मन्दं निपीतस्तु घ्राणेनोल्लासितो मरुत् ॥
हृद्ये गन्धे विधातव्यः संदिग्धे च विचक्षणैः ॥ ४८१ ॥

इत्युल्लासितः ।

संयम्य सुचिरं मुक्तो विमुक्तः कथ्यतेऽनिलः ॥
योगे ध्याने च स प्रोक्तः प्राणायामे च सूरिभिः ॥ ४८२ ॥

इति विमुक्तः ।

चित्तस्यान्यपरत्वेन यः प्रयत्नेन वर्तते ॥
स विस्मितो विस्मये स्यादुद्भूते वाऽर्थचिन्तने ॥ ४८३ ॥

॥ ४७५ ॥ ४७६ ॥ ४७७ ॥ ४७८ ॥ ४७९ ॥ ४८० ॥ ४८१ ॥ ४८२ ॥ ४८३ ॥

इति विस्मितः ।

---

[1] च. विहीन॰ । [2] च. ॰म्पितः प॰ । [3] च. ॰सनिःश्वा॰ । [4] च. सरोगे ।

म[1]हत्त्वाद्दुःखनिष्क्रान्तः कथितः स्खलितोऽनिलः ॥
स्याद्दशम्यां दशायां स व्याधौ प्रस्खलितेषु च ॥ ४८४ ॥
इति स्खलितः ।
प्रसुप्ते प्रसृतो दीर्घः सशब्दो निर्गतो मुखात् ॥ ४८५ ॥
इति प्रसृतः ।
इति नवविधोऽनिलः ।

---

समोऽत्र स्वस्थपर्यायो भ्रान्तोऽन्तर्भ्रमणान्मरुत् ॥
अन्ये त्वन्वर्थनामानस्तत्र सूत्कृतसीत्कृते ॥ ४८६ ॥
शब्दानुकरणे वक्त्रत्याज्यग्राह्येऽनिले क्रमात् ॥
समः स्वाभाविको भ्रान्तः प्रथमे प्रियसंगमे ॥ ४८७ ॥
वि[2]लीनो मूर्छिते शैलारोहे त्वान्दोलितो मतः ॥
कम्पितः सुरते शस्त्रमोक्षादौ स्तम्भितो भवेत् ॥ ४८८ ॥
उच्छ्वासः कुसुमाघ्राणे निःश्वासोऽनुशयादिषु ॥
सूत्कृतं वेदनादौ स्याच्छी[3]ते क्लेशे तु सीत्कृतम् ॥ ४८९ ॥
नखक्षते मृगाक्षीणां निर्दयाधरचर्वणे ॥
विनियोगान्तराण्यत्र बुध्यतां लोकतो बुधाः ॥ ४९० ॥
॥ ४८४ ॥ ४८५ ॥ ४८६ ॥ ४८७ ॥ ४८८ ॥ ४८९ ॥ ४९० ॥
इति मतान्तरेण दशधा श्वसनः ।

---

विवर्तितः कम्पितश्च विसृष्टो विनिगूहितः ॥
संदष्टकः समुद्गश्चेत्यधरः षड्विधो मतः ॥ ४९१ ॥
अथाधराँल्लक्षयितुमाह—विवर्तितः कम्पितश्चेत्यादि ॥ ४९१ ॥
अन्ये[4]ऽन्यानूचुरुद्वृत्तविकास्यायतरेचितान् ॥
ओष्ठयोः संपुष्टस्तिर्यक्संकोचेन विवर्तितः ॥
अवज्ञावेदनासूयाहास्यादिषु विधीयते ॥ ४९२ ॥
इति विवर्तितः ।
व्यथायां कम्पितोऽन्वर्थो भीतौ शीते जै[5]पे रुषि ॥ ४९३ ॥
॥ ४९२ ॥ ४९३ ॥

इति कम्पितः ।

---

१ च. 'हद्दुःखविनि' । २ च. विह्वीनो । ३ ङ. 'च्छीतक्ले' । ४ च. 'न्ये तमूचु' । ५ च. जये ।

विसृष्टः स्याद्विनिष्क्रान्तो रञ्जनेऽलक्तकादिना ॥
स्त्रीणां विलासे विब्बोके शार्ङ्गदेवेन कीर्तितः ॥ ४९४ ॥

इति विसृष्टः ।

मुखान्तर्निहितः प्राणसाध्येऽर्थे विनिगूहितः ॥
रोषेर्ष्ययोश्च नारीणां बलाच्चुम्बति वल्लभे ॥ ४९५ ॥

इति विनिगूहितः ।

संदष्टकोऽधरो दन्तैर्दष्टः क्रोधे विधीयते ॥ ४९६ ॥

इति संदष्टकः ।

समुद्गस्तु भवेदोष्ठसंपुटो दधदुन्नतिम् ॥
स्यात्फूत्कारेऽनुकम्पायां चुम्बने चाभिनन्दने ॥ ४९७ ॥

इति समुद्गः ।

आस्योत्क्षिप्ततयोद्वृत्तः सोऽवज्ञापरिहासयोः ॥

इत्युद्वृत्तः ।

ईषद्वृश्योर्ध्वदशनो विकासी स स्मिते स्मृतः ॥ ४९८ ॥

इति विकासी ।

स सार्धमुत्तरोष्ठेन ततः स्यादायतः स्मिते ॥

इत्यायतः ।

पर्यन्तचलनादुक्तो विलासे रेचितोऽधरः ॥ ४९९ ॥

॥ ४९४ ॥ ४९५ ॥ ४९६ ॥ ४९७ ॥ ४९८ ॥ ४९९ ॥

इति रेचितः ।

इति दशधाऽधरः ।

---

दन्तकर्माणि वक्ष्यामो दन्तलक्षणसिद्धये ॥
कुट्टनं खण्डनं छिन्नं चुक्कितं ग्रहणं समम् ॥ ५०० ॥
दष्टं निष्कर्षणं चेति दन्तकर्माष्टकं जगुः ॥
संघर्षणं कुट्टनं स्याच्छीतरुग्भीजरासु तत् ॥ ५०१ ॥

अथ दन्तकर्माणि लक्षयितुमाह—दन्तकर्माणि वक्ष्याम इत्यादि ॥ ५०० ॥ ५०१ ॥

इति कुट्टनम् ।

---

१ च. °कादिपु । स्त्री° । २ घ. ङ. °ध्येपु वि° । ३ च. °षद्दृष्टोर्ध्व° । ४ च. °रादिपु । इ° ।

खण्डनं तु मुहुर्दन्तै[1]श्लेषविश्लेषणं मतम् ॥
जपाध्ययनसंलापभक्षणेषु भवेदिदम् ॥ ५०२ ॥
इति खण्डनम् ।
छिन्नं स्याद्गाढसंश्लेषो रोदने भीतिशीतयोः ॥
व्याधौ च वीटिकाच्छेदव्यायामादिषु कीर्तितम् ॥ ५०३ ॥
इति च्छिन्नम् ।
*दन्तपङ्क्त्योः स्थितिर्दूरे चुक्कितं जृम्भणादिषु ॥
इति चुक्कितम् ।
तृणस्य +चाङ्गुलैर्दन्ते धारणं ग्रहणं भ[2]ये ॥ ५०४ ॥
इति ग्रहणम् ।
किंचिच्छ्लेषः समं तच्च स्वभावाभिनये मतम् ॥ ५०५ ॥
इति समम् ।
अधरे दंशनं दन्तैर्दष्टं क्रोधेऽभिधीयते ॥
इति दष्टम् ।
निष्कर्षणं तु निष्कासः कार्यं मर्कटरोदने ॥ ५०६ ॥
॥ ५०२ ॥ ५०३ ॥ ५०४ ॥ ५०५ ॥ ५०६ ॥
इति निष्कर्षणम् ।
इत्यष्टौ दन्तकर्माणि ।

---

ऋज्वी सृक्कानुगा वक्रोन्नता लोलाऽवलेहिनी ॥ ५०७ ॥
जिह्वेति षड्विधा तत्र प्रसृतास्ये प्रसारिता ॥
ऋज्वी श्रमे पिपासायां श्वापदानां प्रयुज्यते ॥ ५०८ ॥
अथ जिह्वाभेदाँल्लक्षयितुमाह—ऋज्वी सृक्कानुगेत्यादि ॥ ५०७ ॥ ५०८ ॥
इति ऋज्वी ।
सृक्कानुगा लीढसृक्का प्रकोपस्वादुभक्षयोः ॥
इति सृक्कानुगा ।
व्यात्तास्यस्थोन्नताग्रा च वक्रा नृहरिरूपणे ॥ ५०९ ॥
॥ ५०९ ॥
इति वक्रा ।

---

* "दन्तपङ्क्त्योः" इत्यादि श्लोकः—ङ. पुस्तके नास्ति । + अङ्गुलैर्दन्त इति च. पुस्तकपाठः स एव समीचीनतरः ।

---

१ ङ. °न्तच्छेदवि° । २ घ. भवेत् ।

व्यात्तास्यस्थोन्नताऽन्वर्था जृम्भास्यान्तस्थवीक्षयोः ॥ ५१० ॥

इत्युन्नता ।

व्यात्ते वक्त्रे चला लोला वेतालाभिनये भवेत् ॥

इति लोला ।

दन्तोष्ठं लिहती जिह्वा लेहिनी संमता मुनेः ॥ ५११ ॥

॥ ५१० ॥ ५११ ॥

इति लेहिनी ।

इति षोढा जिह्वा ।

---

जिह्वोष्ठदन्तक्रियया चिबुकं लक्ष्यते ततः ॥

उक्तप्रायं सुखार्थं तु वक्ष्ये लक्ष्यानुसारतः ॥ ५१२ ॥

अथ चिबुकभेदाल्लँक्षयितुमाह—जिह्वोष्ठदन्तक्रिययेत्यादि ॥ ५१२ ॥

व्यादीर्णं श्वसितं वक्रं संहतं चलसंहतम् ॥

स्फुरितं चलितं लोलमेवं चिबुकमष्टधा ॥

व्यादीर्णं दूरनिष्क्रान्तं जृम्भालस्यादिषु स्मृतम् ॥ ५१३ ॥

इति व्यादीर्णम् ।

एकाङ्गुलमधःस्रस्तं श्वसितं वीक्षितेऽद्भुते ॥

इति श्वसितम् ।

वक्रं तिर्यङ्नतं तत्तु ग्रहावेशे विधीयते ॥ ५१४ ॥

इति वक्रम् ।

निश्चलं मीलितमुखं मौने संहतमिष्यते ॥

इति संहतम् ।

संलग्नौष्ठं चलं नारीचुम्बने चलसंहतम् ॥ ५१५ ॥

इति चलसंहतम् ।

कम्पितं स्फुरितं प्राहुः शीते शीतज्वरे तथा ॥

इति स्फुरितम् ।

चलितं श्लिष्टविश्लिष्टं वाक्स्तम्भे क्षोभकोपयोः ॥

इति चलितम् ।

रोमन्थे केवलावर्ते लोलं तिर्यग्गतागतम् ॥ ५१६ ॥

॥ ५१३ ॥ ५१४ ॥ ५१५ ॥ ५१६ ॥

इति लोलम् ।

इत्यष्टधा चिबुकम् ।

व्याभुग्नं भुग्नमुद्वाहि विधुतं विवृतं तथा ॥
विनिवृत्तमिति प्राज्ञाः षड्विधं वदनं जगुः ५१७ ॥

अथ वदनभेदाल्लँक्षयितुमाह—व्याभुग्नमित्यादि ॥ ५१७ ॥

किंचिदायामिवक्रं[2] च व्याभुग्नं मुखमुच्यते ॥
निर्वेदौत्सुक्यचिन्तादौ तदुक्तं पूर्वसूरिभिः ॥ १५८ ॥

इति व्याभुग्नम् ।

अधोमुखं तु भुग्नं तल्लज्जायां प्रकृतौ यतेः ॥

इति भुग्नम् ।

लीलामूत्क्षिप्तमुद्वाहि गर्वानादरतो गतौ ॥ ५१९ ॥

इत्युद्वाहि ।

वारणे नैवमित्युक्तौ विधुतं तिर्यगायतम् ॥

इति विधुतम् ।

विश्लिष्टौष्ठं तु विवृतं हास्यशोकभयादिषु[3] ॥ ५२० ॥

इति विवृतम् ।

विनिवृत्तं परावृत्तं रोषेर्ष्यासूयितेषु तत् ॥ ५२१ ॥

॥ ५१८ ॥ ५१९ ॥ ५२० ॥ ५२१ ॥

इति विनिवृत्तम् ।

इति षोढा वदनम् ।

इति द्वादश शिरोगतान्युपाङ्गानि ।

---

उत्क्षिप्ता पतितोत्क्षिप्तपतिताऽन्तर्गता तथा ॥
बहिर्गता मिथो युक्ता वियुक्ताऽङ्गुलिसंगता ॥
पार्ष्णिरित्यष्टधा पादचारी स्थानेषु(?) दृश्यते ॥ ५२२ ॥

अथ पार्ष्णिभेदानाह—उत्क्षिप्तेत्यादि ॥ ५२२ ॥

गुल्फावङ्गुष्ठसंश्लिष्टावन्तर्यातौ बहिर्गतौ ॥
मिथो युक्तौ वियुक्तौ च पञ्चधा स्थानकादिषु ॥ ५२३ ॥

गुल्फभेदानाह—गुल्फावित्यादि ॥ ५२३ ॥

संहता वियुता वक्रा वलिताः पतितास्तथा ॥ ५२४ ॥
कुञ्चन्मूलाः करेऽङ्गुल्यः प्रसृताश्चेति सप्तधा ॥
एवे पार्ष्ण्यादिभेदाः स्युः संज्ञाविज्ञानलक्षणाः ॥ ५२५ ॥

---

१ च. ॰यातवक्त्रं च । २ घ. ॰मिचक्रं । ३ च. ॰स्यरोषभ॰ ।

कराङ्गुलिभेदानाह—संहता वियुतेत्यादि ॥ १२४ ॥ १२५ ॥

अधः क्षिप्तास्तथोत्क्षिप्ताः कुञ्चिताश्च प्रसारिताः ॥
संलग्नाश्चेति चरणाङ्गुलयः पञ्चधा मताः ॥ ५२६ ॥
मुहुः पातादधः क्षिप्ता बिव्वोके किलकिञ्चिते ॥
उत्क्षिप्ता मुहुरुत्क्षेपान्नवोढायास्त्रपाभरे ॥ ५२७ ॥
संकोचात्कुञ्चिताः शीतमूर्छात्रासग्रहार्दिते ॥
*प्रसारिता ऋजुस्तब्धा स्तम्भे स्वापेऽङ्गमोटने ॥ ५२८ ॥
अङ्गुष्ठस्याप्यमी भेदा ज्ञातव्या नृत्तकोविदैः ॥
स्वाङ्गुष्ठासु मिथो लग्नाः संलग्ना घर्षणे मताः ॥ ५२९ ॥

चरणाङ्गुलिभेदाँल्लक्षयितुमाह—अधः क्षिप्ता इत्यादि ॥ १२६ ॥ १२७ ॥ १२८ ॥ ॥ १२९ ॥

पतिताग्रं चोद्धृताग्रं भूमिलग्नमथोद्धृतम् ॥
कुञ्चन्मध्यं तिरश्चीनमिति षोढा तलं विदुः ॥ ५३० ॥

चरणतलभेदानाह—पतिताग्रं चेत्यादि ॥ १३० ॥

इति पार्ष्णिगुल्फाङ्गुलितलानि करचरणोपाङ्गानि ।

---

अथोद्देशक्रमेण मुखरागं लक्षयितुमाह—

विवृणोति मनोवृत्तिं मुखरागो रसात्मिकाम् ॥
अतो रसोपयोगित्वान्मुखरागोऽभिधीयते ॥ ५३१ ॥

**विवृणोतीति** । मुखरागस्य नाट्योपयोगद्वारा नृत्तेऽप्युपयोगं दर्शयति—**रसात्मिकां मनोवृत्तिं विवृणोतीति** । रसात्मिकां शृङ्गारादिरूपाम् । अनेन मनोवृत्तिरित्यादि स्थायिस्वरूपत्वं निर्वेदादिसंचारिभावरूपत्वं चावगन्तव्यम् । तेषामपि रसेऽभ्यन्तर्भावात् । अत एवास्य मुखरागस्य नृत्तेऽप्युपयोगो द्रष्टव्यः । नृत्तस्याभिनयोपेतत्वाभावेऽपि क्वचिन्नाट्याङ्गतया रसव्यञ्जकत्वाङ्गीकारात्, क्वचित्स्वातन्त्र्येण गीतादिषु प्रयोगेऽपि गीते वाक्यार्थभूतरसव्यञ्जकत्वाच्च नृत्तेऽपि मुखरागस्योपयोगो द्रष्टव्यः । अतोऽत्र नृत्तप्रकरणे मुखरागस्य संगत्यभावो न शङ्कनीयः ॥ १३१ ॥

स्वाभाविकः प्रसन्नश्च रक्तश्यामोऽपरस्तथा ॥
चतुर्धा मुखरागोऽत्रान्वर्थः स्वाभाविको मतः ॥ ५३२ ॥

---

* एतदादि नृत्तकोविदैरित्यन्तं ङ. संज्ञितपुस्तके न विद्यते ।

---

१ ख. ग. संयुता । २ ङ. संभ्रमाः कर्मणे । घ. संभ्रमाः कर्मणे । ३ ख. ग. °व्यः । वृत्त° । ४ ख. ग. °तत्वभा° । ५ ख. ग. °योगोऽपि ।

अनाविष्टेषु भावेषु सुधीभिः स विधीयते ॥

इति स्वाभाविकः ।

प्रसन्नो निर्मलो हास्ये शृङ्गारे चाद्भुते भवेत् ॥ ५३३ ॥

इति प्रसन्नः ।

रक्तोऽरुणः स्यात्करुणे रौद्रे वीरेऽद्भुते तथा ॥

इति रक्तः ।

अन्वर्थो भवति श्यामः स बीभत्से भयानके ॥ ५३४ ॥

इति श्यामः ।

तद्भेदानुद्दिशति—स्वाभाविक इत्यादि ॥ ९३२ ॥ ९३३ ॥ ९३४ ॥

शशिनेव दिशोऽङ्गानि शोभन्ते मुखरागतः ॥ ५३५ ॥

मुखरागस्याङ्गशोभाकारित्वं सदृष्टान्तमाह—शशिनेवेति ॥ ९३५ ॥

रसभावान्तरे नेत्रमन्यदन्यत्क्षणे क्षणे ॥

यथातथोचितः कार्यो मुखरागो रसे रसे ॥ ५३६ ॥

इति चतुर्धा मुखरागः ।

---

अयं मुखरागो रसे रसे यथोचितः(त) [स्तथा] कार्य इति दृष्टिदृष्टान्तेनाऽऽह—रसभावान्तर इति ॥ ९३६ ॥

अथ भरतादिमतभेदेन करप्रचारान्दर्शयति—

उत्तानोऽधोमुखः पार्श्वगतः पाणिरिति त्रिधा ॥ ५३७ ॥

प्रचारं भरतो मेने पञ्चधा त्वपरे जगुः ॥

अग्रगोऽधस्तलश्चेति द्वौ त्रयश्च पुरोदिताः ॥ ५३८ ॥

उत्तानोऽधोमुख इत्यादिना । तेष्वप्यर्थो द्रष्टव्याः ॥ ९३७ ॥ ९३८ ॥

तत्र त्वग्रग उत्तानोऽधोमुखोऽधस्तलः करः ॥

अन्तर्भूतं वदन्भट्टस्त्रित्वमेव समादधे ॥ ५३९ ॥

उत्तानोऽधोमुखः पार्श्वगतो हस्तोऽग्रतस्तलः ॥

स्वसंमुखतलश्चोर्ध्वमुखोऽधोवदनस्तथा ॥ ५४० ॥

पराङ्मुखः संमुखश्च हस्तोऽन्यः पार्श्वतोमुखः ॥

ऊर्ध्वगोऽधोगतः पार्श्वगतो हस्तोऽग्रगोऽपरः ॥ ५४१ ॥

॥ ९३९ ॥ ९४० ॥ ९४१ ॥

---

१ च. शिरोनेत्रदशाङ्गानि । २ च. °रागतः । ३ च. °थायथो° । ४ ख. °गो रासरसे य° । ५ घ. ङ. °नोऽधस्तलः पा° । ६ च. °गोचरः ।

संमुखागत इत्येतान्प्रचारान्दश पञ्च च ॥
लक्ष्यलक्षणतत्त्वज्ञः शार्ङ्गदेवोऽभ्यभाषत ॥ ५४२ ॥

॥ १४२ ॥

इति पञ्चदश हस्तप्रचाराः ।

---

अथ करणानि लक्षयिष्यंस्तेषां सामान्यलक्षणं तावदाह—

निष्पत्तौ निरपेक्षायां करस्याभिनयाय यः ॥
क्रियाविशेषः क्रियते तद्धस्तकरणं मतम् ॥ ५४३ ॥

**निष्पत्तावित्यादिना ।** करस्य पताकादेर्हस्तस्य निष्पत्तौ तर्जनीमूलसंलग्नेत्यादि-पूर्वोक्तलक्षणवशेन तत्तत्स्वरूपसिद्धौ निरपेक्षायामावेष्टितादीनि करणान्यनपेक्ष्यैव जातायां सत्यामित्यर्थः । एवंस्थितोऽ(तेऽ)भिनयाय "एष स्वरे(स्पर्शे) चि(च)पेटे च" इत्यादिविनियोगवचनवशाद्वा युक्तितो वा संप्रदायाद्वा लोकतो वा हस्तेनार्थप्रदर्शनाय । अर्थप्रदर्शनं च क्वचिद्धस्तस्योत्तानत्वेन भवति क्वचिदधस्तलत्वेन क्वचित्पार्श्वतलत्वेनेत्येव-मादिप्रचारयोगेणोचितपदार्थप्रदर्शनायेत्यर्थः । **यः क्रियाविशेषः क्रियत इति ।** पूर्वमुत्तानहस्ताधस्तलत्वे तथाऽधस्तलस्योत्ता*नत्वेन यथोत्तानस्य पार्श्वतलत्वे तथा पार्श्व-तलस्याग्रतस्तलत्वे तथाऽग्रतस्तलस्य संमुखतलत्वे वा, एवमूर्ध्वमुखत्वादिष्वपि हस्तान्त-रकरणे मध्ये मध्ये छिद्राच्छादको यो वर्तनारूपः क्रियाविशेषः क्रियते तद्धस्तकरण-मिति सामान्यलक्षणम् ॥ १४३ ॥

आवेष्टितोद्वेष्टिते च व्यावर्तितमतः परम् ॥
परिवर्तितमित्येतच्चतुर्धा धीरसंमतम् ॥ ५४४ ॥

तस्य करणस्य विशेषान्दर्शयति—**आवेष्टितेत्यादि** ॥ १४४ ॥

तत्राऽऽवेष्टितं लक्षयति—

तर्जन्याद्यङ्गुलीनां यद्भवेदावेष्टनं क्रमात् ॥
तलसंमुखमावक्षः करोऽप्यायाति पार्श्वतः ॥
तदावेष्टितमाख्यातं करस्य करणं बुधैः ॥ ५४५ ॥

**तर्जन्याद्यङ्गुलीनामिति ।** अत्राऽऽदिशब्देन मध्यमानामिकाकनीयस्योऽङ्गुल्यो गृह्यन्ते । **यत्क्रमादावेष्टनं भवेदिति ।** ऋजुत्वेन स्थितानां तर्जन्यादीनां मध्ये प्रथमतर्जन्या वेष्टनं वक्रीकरणम् । तदनु मध्यमायास्तदन्वनामिकायास्तदनु कनीयस्या इति क्रमः । अङ्गुलीनां क्रमेण वेष्टनकाल एव करोऽपि तदङ्गुल्याश्रयः पार्श्वतः स्वकी-यात्पार्श्वे त(श्चात्त?)लसंमुखं हस्ततलमभिनेत्रभिमुखं यथा भवति तथाऽऽदौ(वक्षो?)

---

* अत्र ख. ग. पुस्तकयोरुत्तानत्वे तथेति पाठोऽयं च समीचीनः ।

वक्षःपर्यन्तमायाति सविलासः सन्नागच्छति चेत्तत्करस्य करणमावेष्टितमिति बुधैराख्यातम् ॥ ५४५ ॥

उद्वेष्टितं लक्षयति—

**यत्तु क्रमेण निर्याणमङ्गुलीनां तलाद्बहिः ॥**
**वक्षःस्थलात्करस्यापि तदुद्वेष्टितमुच्यते ॥ ५४६ ॥**

**यत्त्वित्यादि** । तलाद्बहिर्हस्ततलाद्बहिः पराचीनत्वेन तर्जन्यादीनां क्रमेण पूर्वोक्तेन यन्निर्याणं प्रादुर्भावश्च(वो व)क्रत्वेन स्थितानामङ्गुलीनां तर्जन्यादिक्रमेण ऋजुकरणमिति यावत् । तस्मिन्नेवाङ्गुलीनिर्गमनकाले । **करस्यापीति** । तदङ्गुल्याश्रयभूतस्य हस्तस्य । अपिशब्देनानुषङ्गान्निर्याणं समुच्चीयते । वक्षःस्थलात्करस्यापि यन्निर्याणमिति । तदुद्वेष्टितमुच्यत इति संबन्धः ॥ ५४६ ॥

व्यावर्तितं लक्षयति—

**आवेष्टितप्रक्रियया *कार्यमावर्तितं करे ॥**
**उद्वेष्टितेन व्याख्यातं करणं परिवर्तितम् ॥ ५४७ ॥**

**आवेष्टितप्रक्रिययेति** । प्रकृष्टा क्रिया प्रक्रिया । आवेष्टिताऽऽवृत्तिरूपेत्यर्थः । तथा(या) करे आ(व्या)वर्तितं कार्यम् । परिवर्तितं लक्षयति– **उद्वेष्टितेनेति** । **व्याख्यातमिति** । उद्धृतप्रक्रिययेत्यर्थः ॥ ५४७ ॥

व्यावर्तितपरिवर्तितयोः क्रमादावेष्टि[तोद्वेष्टि]ताभ्यां स्वरूपभेदं दर्शयति—

**किंत्वेतत्करणद्वंद्वं कनिष्ठाद्यङ्गुलीकृतम् ॥ ५४८ ॥**

**किंत्विति** । एतत्करणद्वंद्वं व्यावर्तितं परिवर्तितं च । **कनिष्ठाद्यङ्गुलीकृतमिति** । तर्जन्याद्यङ्गुलीकृतादावेष्टितात्कनिष्ठाद्यङ्गुलीकृतस्य व्यावर्तितस्य स्वरूपभेदस्तथा तर्जन्याद्यङ्गुलीकृता[दुद्वेष्टिता]त्कनिष्ठाद्यङ्गुलीकृतस्य परिवर्तितस्य च स्वरूपभेदो द्रष्टव्य इत्यर्थः । एतेषामुद्वेष्टितादीनां चतुर्णां करणानामभिनययोगदर्शनायैकं नाटकवाक्यमभिनीय दर्शयामः । यथा—"**वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः । अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः**" इति विक्रमोर्वशीये नान्दीश्लोकः । अस्याभिनयप्रकारस्तु, प्रथमं तालधरेण सकृत्तालाघातं 'तत्ताधी' इति शब्दे दीयमाने नटी वा सूत्रधारत्वेन प्रविष्टितं(प्रविष्टं) पात्रं तच्छब्दसमकालमेव मण्डलस्थानकेन सह चतुरस्रौ करौ कृत्वा गायनीभिर्वेदान्तेष्वित्यादिषु पदेषु गीयमानेषु तत्स्वैर-

---

* ख. ग. च. पुस्तकस्थः कार्यं व्यावर्तितमिति पाठः साधुः ।

---

१ ख. ग. क्रमाद्बहिः । २ ख. ग. नाट्यश्लो° । ३ ज. °त्स्वरूपप्र° ।

प्रमाणेन प्रथमं तावद्वेदपदस्यार्थं निकुञ्चितकरेणोत्तानेन पराङ्मुखेनाधोगतेनोद्वेष्टितकरणपूर्वकं सविलासमभिनयेत् । अभिनये सर्वत्र दृष्टिं हस्तानुगतां कुर्यात् । ततोऽन्तेष्वितिपदस्यार्थे सूचीमुखेनाग्रतस्तलेन पार्श्वमुखेनोर्ध्वगतेनाभिनयेत् । तदा निकुञ्चकसूचीमुखयोर्मध्यमावर्तितं करणं भवति । ततो **यमिति**पदस्यार्थे व्यावर्तितकरणपूर्वकं वामेन सूचीमुखेनाग्रतस्तलेनोर्ध्वमुखेन पार्श्वगतेनाभिनयेत् । तदानीं दक्षिणहस्तोऽपि कट्यां वा नाभिदेशे वा स्थितः कर्तव्यो भवति । अनन्तर**माहु**रिति पदस्यार्थमुद्वेष्टितकरणपूर्वकं दक्षिणेन हंसास्येनाऽऽस्यदेशे किंचित्प्रसारितेनोर्ध्वमुखेनोत्तानेनाभिनयेत् । तदानीमेव वामहस्तोऽपि कटीनाभिचरः कर्तव्यो भवति । एवं सर्वत्रासंयुतेन हस्तेनाभिनीयते (नयने ?) तदन्यः कटीनाभिचरः कर्तव्य इति वेदितव्यम् । तत **एके**तिपदस्यार्थमावेष्टितपूर्वकेण दक्षिणेन सूचीमुखेनोर्ध्वमुखेनाग्रतस्तलेनाग्रगतेनाभिनयेत् । ततः **पुरुषामिति**पदस्यार्थमुद्वेष्टितपूर्वकं दक्षिणेन पताकेनोत्तानेन पराङ्मुखेन पार्श्वगतेन स्वयमेकां भ्रमरिकां कृत्वाऽभिनयेत्* । ततः **स्थितमिति**पदस्यार्थं व्यावर्तितकरणपूर्वकं वामेन शिखरेण स्वयं संमुखतलेन पार्श्वमुखेन किंचिदधोगतेनाभिनयेत् । ततो **रोदसी** इतिपदस्यार्थमुद्वेष्टितपूर्वकं दक्षिणेन पताकेनोत्तानेनोर्ध्वमुखेनोर्ध्वगतेन दिवं दर्शयित्वा पश्चात्तेनैव चाधोमुखेनाधोगतेन भूमिं दर्शयित्वाऽभिनयेत् । ततो **यस्मिन्निति**पदस्यार्थं नामे-(पूर्वोक्त)**यमिति**पदार्थवदभिनयेत् । तत **ईश्वर** इतिपदस्यार्थमुद्वेष्टितकरणपूर्वकं दक्षिणेन चतुरेणोत्तानेनोर्ध्वमुखेनाऽऽस्यदेशात्कचित्पार्श्वगतेनाभिनयेत् । तत **इति**पदस्यार्थमावेष्टितकरणपूर्वकं दक्षिणेन मृगशीर्षेणाधस्तलेन पार्श्वमुखेन संमुखागतेनाभिनयेत् । ततोऽ**नन्यविषय** इतिपदार्थे नभोऽर्थे उ(न्नोऽर्थमु)द्वेष्टितपूर्वकं वामेन खटकामुखेन मुक्तकटकेनाभिनयेत् । तेनैव सूचीमुखरूपेण पुनरुद्वेष्टितपूर्वकमुत्तानेन पार्श्वगतेनान्यपदस्यार्थमभिनयेत् । ततो **विषय**पदस्यार्थमुद्वेष्टितपूर्वकं दक्षिणेन चतुरेणोत्तानेन पराङ्मुखेन किंचित्पार्श्वगतेनाभिनयेत् । ततः **शब्द**पदस्यार्थं व्यावर्तितपूर्वकं वामेन सूचीमुखेनाग्रतस्तलेन कर्णरन्ध्राभिमुखेनाभिनयेत् । ततो **यथार्थ**पदस्यार्थमुद्वेष्टितपूर्वकं दक्षिणेन संदंशेनोत्तानितेन किंचिदूर्ध्वं गत्वाऽधोगतेनाभिनयेत् । ततो**ऽक्षर**पदस्यार्थमावेष्टितपूर्वकं दक्षिणेन संदंशेनाग्रतस्तलेनोर्ध्वमुखेन तलेन(?) क्रियायाः पार्श्वगतेनाभिनयेत् । ततो**ऽन्तः**पदस्यार्थं व्यावर्तितपूर्वकं दक्षिणेन संदंशेन संमुखेन हृदयनिहितेनाभिनयेत् । ततो **य** इति पदस्यार्थं पूर्ववदभिनीय चेतिपदस्यार्थं तेनैव किंचित्पार्श्वप्रसारितेनाभिनयेत् । ततो **मुमुक्षुभि**रिति पदस्यार्थं व्यावर्तितपूर्वकं संदंशद्वयेनोत्तानितेन नाभिहृद्देशयोरुपर्युपरिविन्यस्तेनाभिनयेत् । ततो **नियमित**पदस्यार्थं व्यावर्ति-

---

* एतदग्रे व्याप्येतिपदग्रहणमपेक्षितं तच्च त्रुटितमिति भाति ।

---

१ ख. ग. 'मं वाचितवेद' । २ ख. ग. 'कुञ्चककरे' । ३ ख. ग. 'पूर्णे स' । ४ ख. 'मध्यव' । ग. 'मध्यविव' । ५ ख. ग. 'नाभिचरक' । ६ ख. ग. ततः शेखर' ।

तपूर्वकं वामेन शिखरेण संमुखागतेन हृदयदेशे निहितेनाभिनयेत् । ततः **प्राणादिभि-**रिति पदस्यार्थं व्यावर्तितपूर्वकेण दक्षिणेन संदंशेन स्वसंमुखतलेन पार्श्वमुखेन संमुखागतेन नासादेशे द्विस्त्रिर्वा पतितोत्पतितेनाभिनयेत् । ततो **मृग्यत** इति पदस्यार्थं तेनैवोद्वेष्टितपूर्वकेण कर्तरीमुखेण पार्श्वतलेन पराङ्मुखेन हृदयदेशे शनैर्भ्रामितेनाभिनयेत् । ततः **स** इति पदार्थं वामेन यच्छब्दार्थवदभिनयेत् । ततः **स्थाणुपद**स्यार्थं व्यावर्तितपूर्वकेण पताकद्वयेन शिरोदेशेऽञ्जलिं बद्ध्वाऽभिनयेत् । ततः **स्थिरपद**स्यार्थं परिवर्तितपूर्वकेण संदंशद्वयेनोत्तानितेन पराङ्मुखेनोरोदेशे निहितेनाभिनयेत् । ततो **भक्तिपद**स्यार्थं परिवर्तितपूर्वकेण पताका(क)द्वयेन हृदयेऽञ्जलिं बद्ध्वाऽभिनयेत् । ततो **योगपद**स्यार्थं मुमुक्षुवदभिनयेत् । किं तु वामहस्तं नाभौ पताकमुत्तानितं कुर्यात् । ततः **सुलभपद**स्यार्थं व्यावर्तितपूर्वकेण दक्षिणेन चतुरेणोत्तानेन पार्श्वमुखेन हृदयं प्रति संमुखागतेनाभिनयेत् । ततो **निःश्रेयसाये**ति पदस्यार्थं व्यावर्तितपूर्वकेणारालद्वयेनोत्तानितेन पुरोमुखेन सवलनमूर्ध्वगतेनाभिनयेत् । ततो**ऽस्त्वि**तिपदस्यार्थं दक्षिणेन परिवर्तितपूर्वकेण पताकेनोत्तानितपार्श्वमुखेन पार्श्वान्तरगतेनाभिनयेत् । ततो **व** इति पदार्थं परिवर्तितपूर्वकेण पताका(क)द्वयेनोत्तानितेन पुरोमुखेणाग्रगेणाभिनयेत् । एवं सर्वत्र हस्तान्तरालपरिपूरकत्वेन करणप्रयोगो द्रष्टव्यः । अत्र पदार्थानां हस्तैरभिनये विभक्त्यर्थनामपदं पृथगभिनयं केचिल्लक्षयन्ति । तेषां वाचिकेनैवावगम्यमानत्वेन पृथङ्मुनिनाऽनभिधानादस्माभिर्न प्रपञ्चयन्ते । एवं सर्वत्राऽऽङ्गिके प्रकृत्यर्थाभिनयेन प्रत्ययार्थोऽप्यभिनीतप्राय एव द्रष्टव्यः । विधौ हि प्रत्ययार्थस्यैव प्राधान्यात्प्रकृता(त्य)र्थानन्तरं सोऽप्यभिनेयः । निषेधेऽपि *पदार्थस्य प्राधान्यादभिनेयता । अन्यत्र सिद्धरूपेऽर्थे प्रकृत्यर्थस्यैव प्राधान्यात्स एवाभिनेयो न प्रत्ययार्थः । अयमत्र विशेषः—यत्र प्रत्ययार्थस्य प्राधान्यं तत्र पूर्वं प्रकृत्यर्थोऽभिनीयते [पश्चात्प्रत्ययार्थः] । यत्र प्रकृत्यर्थस्य प्राधान्यं तत्र प्रकृत्यर्थ एवाभिनीयते न प्रत्ययार्थ इति । एवं विधिनिषेधानुभवरूपेण हस्ताभिनयक्रिया त्रिविधेति **मुनिनो**क्तमवगन्तव्यम् ।

एवं करणा(कर)करणयोर्योगादभिनयस्थितिः(तिम्) ।<br>
असंदिग्धं मुग्धबुद्ध्यै **कल्लिनाथो**ऽभ्यभाषत ॥ ९४८ ॥

**इति चत्वारि करकरणानि ।**

---

**धूननं श्लेषविश्लेषौ क्षेपो रक्षणमोक्षणे ॥**<br>
**परिग्रहो निग्रहश्चोत्कृष्टाकृष्टिविकृष्टयः ॥ ९४९ ॥**

---

* ख. ग. पुस्तकयोः 'नार्थस्य'(नञर्थस्य?) इति पाठः स एव साधुः ।

---

१ ख. ग. प्रपद्यन्ते ।

ताडनं तोलनं छेदभेदौ स्फोटनमोटने ॥
स्याद्विसर्जनमाह्वानं तर्जनं चेति विंशतिः ॥
करकर्माणि नृत्तज्ञैरन्वर्थानि बभाषिरे ॥ ५५० ॥

अथ करकर्माण्याह—धूननमिति ॥ ५४९ ॥ ५५० ॥

इति विंशतिः करकर्माणि ॥

---

पार्श्वद्वयं पुरस्ताच्च पश्चादूर्ध्वमधः शिरः ॥ ५५१ ॥
ललाटकर्णस्कन्धोरोनाभयः कटिशीर्षके(कम्) ॥
ऊरुद्वयं च हस्तानां क्षेत्राणीति चतुर्दश[1] ॥ ५५२ ॥

अथ करक्षेत्राण्याह—पार्श्वद्वयमित्यादि ॥ ५५१ ॥ ५५२ ॥

इति हस्तक्षेत्राणि ।

---

अथ नृतकरणानि लक्षयिष्यंस्ताण्डवनृत्तप्रवर्तकमीशं प्रणमति—

करणैः करणातीतो[2]ऽनङ्गहारोऽङ्गहारकैः ॥
यः स्थाणू रोदसीरङ्गे नृत्यतीशं[3] नमामि तम् ॥ ५५३ ॥

**करणैरित्यादि ।** करणातीतः करणानि चक्षुरादीनि तान्यतीत्य वर्तेत इति स तथोक्तः । इन्द्रियाणामविषयभूत इत्यर्थः । अनङ्गहारः । अनङ्गं कामं हरतीत्यत्रार्थे उद्यमनविवक्षायां 'कर्मण्यण्' इति सामान्येऽणि कृतेऽनङ्गहार इति भवति तारहार इति यथा । स्थाणुः स्थिरो यो रोदसीरङ्गे रोदस्यावेव रङ्गस्तस्मिन्करणैर्वक्ष्यमाणैस्तलपुष्पपुटादिभिः, अङ्गहारैः स्थिरहस्तादिभिः, नृत्यति तमीशं नमामीति संबन्धः । अत्र करणातीतः करणैरिति, अनङ्गहारोऽङ्गहारैरिति स्थाणुर्नृत्यति, इति विरोधालंकारो ध्वन्यते ॥ ५५३ ॥

करणानां सामान्यलक्षणमाह—

स्यात्क्रिया करपादादेर्विलासेनात्रुटद्रसा ॥ ५५४ ॥
करणं नृत्तकरणं भीमवद्भीमसेनवत् ॥
प्रभेदान्करणस्यास्य ब्रूमहे भरतोदितान् ॥ ५५५ ॥

**स्यात्क्रियेत्यादि । करपादादेरिति ।** आदिशब्देन शिरोवक्षःपार्श्वकटीनां बाहुजङ्घादीनां च ग्रहणम् । किंविधा क्रिया विलासेनाङ्गशोभयाऽत्रुटद्रसाऽत्रुटन्नाच्छिद्यमानो रसः प्रेक्षकप्रीतिर्यस्यां सा तथोक्ता । एवं विशिष्टा करपादादेः क्रिया करणम् । तदेव नृत्तकरणं स्यात् । व्यपदेशद्वयसद्भावे दृष्टान्तमाह—**भीमवद्भीमसेनवदिति ।** संज्ञैकदेशेनापि प्रसिद्ध्या व्यपदेशो भवतीत्यर्थः ॥ ५५४ ॥ ५५५ ॥

---

१ घ. ङ. त्रयोदश । २ घ. °ण.नीतो° । ३ च. °तीशानमाश्रियम् ।

तलपुष्पपुटं लीनं वर्तितं च[1](व)लितोरु च ॥
मण्डलस्वस्तिकं वक्षःस्वस्तिकाक्षिप्तरेचिते ॥ ५५६ ॥

तद्भेदानुद्दिशति—तलपुष्पपुटमित्यादि । वक्षःस्वस्तिकाक्षिप्तरेचिते इति । वक्षःस्वस्तिकं चाऽऽक्षिप्तरेचितं चेति द्वंद्वः ॥ ५५६ ॥

स्वस्तिकान्यर्धदिक्पृष्ठाद्यानि स्वस्तिकमञ्चितम् ॥
अपविद्धं समनखोन्मत्ते स्वस्तिकरेचितम् ॥ ५५७ ॥
निकुट्टार्धनिकुट्टे च कटीछिन्नं कटीसमम् ॥
भुजंगत्रासितालातविक्षिप्ताक्षिप्तकानि च ॥ ५५८ ॥
निकुञ्चितं घूर्णितं स्यादूर्ध्वजान्वर्धरेचितम् ॥
मत्तल्लि चार्धमत्तल्लि स्याद्रेचकनिकुट्टकम् ॥ ५५९ ॥
ललितं वलितं दण्डपक्षं पादापविद्धकम् ॥
नूपुरं भ्रमरं छिन्नं भुजंगत्रस्तरेचितम् ॥ ५६० ॥
भुजंगाञ्चितकं दण्डरेचितं चतुरं ततः ॥
कटिभ्रान्तं व्यंसितं च क्रान्तं वैशाखरेचितम् ॥ ५६१ ॥

स्वस्तिकान्यर्धदिक्पृष्ठाद्यानीति । अर्धस्वस्तिकं दिक्स्वस्तिकं पृष्ठस्वस्तिकमिति त्रीणि करणानि ॥ ५५७ ॥ ५५८ ॥ ५५९ ॥ ५६० ॥ ५६१ ॥

वृश्चिकं वृश्चिकाद्ये च स्यातां कुट्टितरेचिते ॥
लतावृश्चिकमाक्षिप्तार्गले तलविलासितम् ॥ ५६२ ॥

वृश्चिकाद्ये कुट्टितरेचिते स्यातामिति। वृश्चिककुट्टितं वृश्चिकरेचितमित्यर्थः ॥५६२॥

ललाटतिलकं पार्श्वनिकुट्टं चक्रमण्डलम् ॥
उरोमण्डलमावर्तं कुञ्चितं दोलपादकम् ॥ ५६३ ॥
विवृत्तं विनिवृत्तं च पार्श्वक्रान्तं निशुम्भितम् ॥
विद्युद्भ्रान्तमति[2]क्रान्तं विक्षिप्तं च विवर्तितम् ॥ ५६४ ॥
गजक्रीडितकं गण्डसूची स्याद्गरुडप्लुतम् ॥
तलसंस्फोटितं पार्श्वजानु गृध्रावलीनकम् ॥ ५६५ ॥
सूच्यर्धसूचिनी सूचीविद्धं च हरिणप्लुतम् ॥
परिवृत्तं दण्डपादं मयूरललितं ततः ॥ ५६६ ॥
प्रेङ्खोलितं संनतं च सर्पितं करिहस्तकम् ॥
प्रसर्पितमपक्रान्तं नितम्बं स्खलिताभिधम् ॥ ५६७ ॥

॥ ५६३ ॥ ५६४ ॥ ५६५ ॥ ५६६ ॥ ५६७ ॥

---

१ ग. वलितोरु । २ च. 'मतिक्रा' ।

सिंहविक्रीडितं सिंहाकर्षितं चावहित्थकम् ॥
निवेशमेलकाक्रीडजनितोपसृतानि च ॥ ५६८ ॥
तलसंघट्टितोद्वृत्तविष्णुक्रान्तानि लोलितम् ॥
मदस्खलितसंभ्रान्तविष्कम्भोद्घट्टितानि च ॥ ५६९ ॥
शकटास्योरूद्वृत्ताख्ये वृषभक्रीडितं ततः ॥
नागापसर्पितमथो गङ्गावतरणं तथा ॥ ५७० ॥

॥ ९६८ ॥ ९६९ ॥ ९७० ॥

इत्यष्टोत्तरमुद्दिष्टं करणानां शतं मया ॥
गतिस्थितिप्रयोगाणामानन्त्यात्करणान्यपि ॥ ५७१ ॥

इति करणानामष्टोत्तरशतमुद्दिष्टमित्युक्त्या कथमियन्तीति परिच्छेद इत्याशङ्कां परिहरति— **गतिस्थितीत्यादि । गतिस्थितिप्रयोगाणामिति ।** गतयश्चालयः (श्चार्यः?) स्थितयः स्थानकानि तासां प्रयोगाः पौर्वापर्यविपर्ययाभ्यामनन्ता भवन्ति । तेषामानन्त्याद्यद्यपि करणान्यप्यनन्तानि भवन्ति तथाऽप्यङ्गहारेषु वक्ष्यमाणेषु स्थिरहस्तादिष्वियतामष्टोत्तरशतकरणानामेवोपयोगिता । उपयोगो येषामस्तीत्युपयोगीनि । उपयोगिनां भाव उपयोगिता । अङ्गहारेषूपयोगवशादष्टोत्तरशतं करणान्युद्दिष्टानीत्यर्थः ॥ ९७१ ॥

अनन्तान्यङ्गहारेषु क्रियन्तामुपयोगिता[1] ॥
अथ लक्षणमेतेषां वक्ष्ये लक्ष्यविदां मतम् ॥ ५७२ ॥

अथोद्देशक्रमेण करणानि लक्षयितुमाह— **अथ लक्षणमिति** ॥ ९७२ ॥

नर्तनादौ सकलकरणसाधारणमङ्गसंनिवेशं तावदाह—

प्रायशो नर्तनारम्भे समपादौ लताकरौ ॥
चतुरस्रं भवेदङ्गं विशेषस्त्वयमुच्यते ॥ ५७३ ॥

**प्रायश इति । विशेषस्त्वयमुच्यत इति ।** अयमिति वक्ष्यमाणतलपुष्पपुटकरणस्य संनिवेशः ॥ ९७३ ॥

तमेव विशेषमाह—

चार्या त्वधिकया पादे विनिष्क्रामति दक्षिणे ॥
व्यावर्तनात्करयुगे दक्षिणं पार्श्वमागते ॥ ५७४ ॥
परिवर्तनतो वामपार्श्वं सततमाश्रिते ॥
तत्कुचक्षेत्रसंविष्टो यस्य पुष्पपुटः करः ॥
तलपुष्पपुटं तत्स्यात्पादेऽग्रतलसंचरे ॥ ५७५ ॥

---

1 ख. ग. °गिना । अ° ।

**चार्येत्यादि** । अत्र करणाङ्गत्वेनोच्यमानानां चारीणां स्थानानां च स्वरूपं वक्ष्यमाणतल्लक्षणवशाद्विवक्षयाऽत्र करणेषु योजनीयम् ॥ ९७४ ॥ ९७५ ॥

**यद्यनन्तरमेतत्स्यात्करणं करणान्तरात् ॥ ९७६ ॥**
**तदा करक्रिया तत्तत्त्याज्यग्राह्यकरानुगा ॥**
**एतत्पुष्पाञ्जलिक्षेपे लज्जायां च नियुज्यते ॥ ९७७ ॥**

**यद्यनन्तरमिति** । [ए]तत्करणं तलपुष्पपुटाख्यं प्रथममप्रयुज्यमानं सद्यदि करणान्तरादनन्तरं स्यात्तदाऽस्य करक्रिया करयोः क्रिया—**तत्तत्त्याज्यग्राह्यकरानुगेति** । तस्मिंस्तस्मिन्करणे लक्षणवशात्त्याज्ययोर्ग्राह्ययोर्वा करयोरनुगाऽनुसारिणी कर्तव्येत्यर्थः । अयमभिप्रायः । इदमेव तलपुष्पपुटं प्रथमं प्रयुज्यते चेदुक्तलक्षणयुक्तमेव प्रयोक्तव्यम् । करणान्तरानन्तरं प्रयुज्यते चेत्तदा तदनुसारेणेति । अयं न्यायः करणान्तरेष्वप्युन्नेयः ॥ ९७६ ॥ ९७७ ॥

इति तलपुष्पपुटम् ।

**ऊर्ध्वमण्डलिनौ कृत्वा करौ वक्षःस्थितोऽञ्जलिः ॥**
**निहञ्चितं चांसकूटं यत्र ग्रीवा नता कृता ॥**
**लीनं तत्करणं योज्यं वल्लभाभ्यर्थने बुधैः ॥ ९७८ ॥**

करणानां लक्षणानि ग्रन्थत[2] एव सुबोधानि ॥ ९७८ ॥

इति लीनम् ।

**आश्लिष्टौ[3] मणिबन्धस्थस्वस्तिकाभिमुखौ[4] करौ ॥**
**कृत्वा वक्षस्येककालं व्यावृत्तपरिवर्तितौ[5] ॥ ९७९ ॥**
**उत्तानौ पातयेदूर्वोर्यत्र[6] तद्वर्तितं मतम् ॥**
**असूयायां प्रयोगः स्यात्पताकौ यदि पातयेत् ॥ ९८० ॥**
**अधोमुखनिघृष्टौ तौ क्रोधं सूचयतः करौ ॥**
**शुकतुण्डादयोऽप्यन्ये विनियोगवशादिह ॥ ९८१ ॥**

इति वर्तितम् ।

**वक्षःक्षेत्रे समं हस्तौ व्यावृत्तपरिवर्तितौ ॥ ९८२ ॥**
**विधायाऽऽक्षिप्तया चार्या संहतौ परिवर्तनात् ॥**
**तत्राऽऽनीय निधीयेते शुकतुण्डावधोमुखौ ॥ ९८३ ॥**

॥ ९७९ ॥ ९८० ॥ ९८१ ॥ ९८२ ॥ ९८३ ॥

---

१ ख. °या तत्त्वग्राह्या वन्यकरायुगा । च. °या तत्र त्याज्या ग्राह्य° । २ ख. ग. °ग्रन्थ एव । ३ च. अश्लिष्टौ । ४ च. °बन्धौ च स्व° । ५ च. व्यावर्तप° । ६ च. °दूर्ध्वे यत्र ।

बद्धा याति स्थितिर्यत्र वलितोरु तदुच्यते ॥
मुग्धस्त्रीव्रीडिते चास्य प्रयोगः शार्ङ्गिणोदितः ॥ ५८४ ॥
इति वलितोरु ।
चतुरस्रौ करौ कृत्वा विदध(ध्या?)[2]द्विच्यवां ततः ॥
उद्वेष्टितक्रियापूर्वमूर्ध्वमण्डलिनौ करौ ॥ ५८५ ॥
विधाय स्वस्तिकौ कुर्यादत्र स्थानं च मण्डलम् ॥
मण्डलस्वस्तिकं तत्स्यात्प्रसिद्धार्थावलोकने ॥ ५८६ ॥
इति मण्डलस्वस्तिकम् ।
चतुरस्रौ करौ वक्षःस्थितौ कृत्वा[3]ऽथ रेचितौ ॥
व्यावर्तितेन चाऽऽनीयाभुग्ने वक्षसि यत्र तौ ॥ ५८७ ॥
स्वस्तिकौ स्वस्तिकौ[4] पादौ तद्वक्षःस्वस्तिकं मतम् ॥
अनाभुग्नांसमेतच्च योज्यं लज्जानुतापयोः ॥ ५८८ ॥
इति वक्षःस्वस्तिकम् ।
हस्तौ हृत्क्षेत्रगौ यत्र व्यावृत्योर्ध्वं च पार्श्वयोः ॥
क्षिप्तैकं हंसपक्षं च द्रुतभ्रममधोमुखम् ॥ ५८९ ॥
वक्षः प्राप्यापरं तादृ[5]ग्भूतं निष्क्रामयेत्ततः ॥
पादावञ्चितसूच्यौ च तत्स्यादाक्षिप्तरेचितम् ॥
अनेनाभिनये त्यागपरिग्रहपरम्पराम् ॥ ५९० ॥
इत्याक्षिप्तरेचितम् ।
दक्षिणः करिहस्तः स्याद्वामस्तु खटकामुखः ॥
वक्षस्थः स्वस्तिकौ पादौ यत्रार्धस्वस्तिकं तु तत् ॥ ५९१ ॥
अ[6]न्ये करिकरस्थाने पक्षवञ्चितकं परम् ॥
पक्षप्रद्योतकं चार्धचन्द्रं कटिगतं विदुः ॥ ५९२ ॥
इत्यर्धस्वस्तिकम् ।
पार्श्वयोरग्रतः पृष्ठे स्वस्तिकौ[7]ऽत्र दिशं गतः ॥
कराङ्घ्री रेचितौ यत्र तद्दिक्स्वस्तिकमुच्यते ॥ ५९३ ॥

॥ ९८४ ॥ ९८५ ॥९८६ ॥ ९८७ ॥ ९८८ ॥ ९८९ ॥ २९० ॥ ९९१ ॥
॥ ९९२ ॥ ९९३ ॥

---

१ ख. ग. °दयद्विच्यतां त° । २ ङ. °द्विव्यवां । ३ ङ. °त्वा प्ररे° । ४ ख. ग. घ. ङ. °कौ चाङ्घ्री त° । ५ ख. ग. °दृग्भूतं नि° । ६ च. °न्ये तु करणस्था° । ७ ख. ग. घ. °कोऽत्रुटिताङ्गकः । ङ. °कोऽत्रुटितां गतः ।

तद्गीतपरिवर्तेषु विनियुक्तं पुरातनैः ॥
स्वस्तिकप्रक्रियैषा स्यात्स्वस्तिकोक्त्यन्तरेष्वपि ॥ ५९४ ॥

इति दिक्स्वस्तिकम् ।

उद्वेष्टितक्रियापूर्वं बाह्वोर्विक्षिप्यमाणयो[1]ः ॥
कृत्वा चारीमपक्रान्तां क्रियमाणेऽपवेष्टने ॥ ५९५ ॥
रेचयित्वाऽन्यचरणं सूचीस्वस्तिकमाचरेत् ॥
यत्राङ्घ्रिभ्यां कराभ्यां च तत्पृष्ठस्वस्तिकं भवेत् ॥ ५९६ ॥
एतन्निषेधराभस्यपरान्वेषणभाषणे ॥
प्रयुक्तं नाट्यतत्त्वज्ञैरन्यै[2]र्युद्धपरिक्रमे ॥ ५९७ ॥

इति पृष्ठस्वस्तिकम् ।

उद्वेष्टितेन निष्कास्य पाण्योर्व्यावर्तमानयोः ॥ ५९८ ॥
उत्प्लुत्य युगपद्यत्र कराङ्घ्रिः स्वस्तिकः कृतः ॥
तत्स्वस्तिकं प्रयोक्तव्यं बुधैः पूर्वोक्तवस्तुनोः ॥ ५९९ ॥

इति स्वस्तिकम् ।

व्यावर्तपरिवर्ताभ्यां नासादेशं गतो यदा ॥
करिहस्तोऽलपद्मत्वं धत्ते स्यादञ्चितं तदा ॥
संमुखप्रेक्षणे तच्च योज्यं स्वस्यातिकौतुकात् ॥ ६०० ॥

इत्यञ्चितम् ।

चतुरस्रकरः स्थित्वा हस्तं व्यावर्त्य दक्षिणम् ॥ ६०१ ॥
निष्क्रामयन्भजेच्चारीमाक्षिप्तामथ दक्षिणम् ॥
शुकतुण्डं करं त[3]स्यैवोरौ तु परिपातयेत् ॥ ६०२ ॥
यत्रापविद्धं तद्वामे वक्षस्थे खटकामुखे ॥
तत्कोपासूययोर्योज्यमुक्तं सोढलसूनुना ॥ ६०३ ॥

इत्यपविद्धम् ।

देहः स्वाभाविको यत्र पादौ समनखौ युतौ ॥
लताहस्तौ समनखं स्यात्प्रवेशे तदादिमे ॥ ६०४ ॥

॥ ५९४ ॥ ५९५ ॥ ५९६ ॥ ५९७ ॥ ५९८ ॥ ५९९ ॥ ६०० ॥ ६०१ ॥
॥ ६०२ ॥ ६०३ ॥ ६०४ ॥

इति समनखम् ।

---

१ च. 'वेष्टिते । रे' । २ ख. ग. 'र्युधि पराक' । ३ ख. ग. 'तस्यै चोरोरु प' ।

चार्या विद्धाश्चितपदे पर्यायाद्रेचितः करः ॥
यत्रोन्मत्तं तु तद्भवे सौभाग्यादिसमुद्भवे ॥ ६०५ ॥

इत्युन्मत्तम् ।

चतुरस्रः स्थितः कृत्वा हंसपक्षौ द्रुतभ्रमौ ॥
व्यावृत्तिपरिवृत्तिभ्यामधश्चोर्ध्वं शिरःस्थलात् ॥
आनीयाऽऽविद्धवक्रौ चेद्वक्षासि स्वस्तिकौ कृतौ ॥ ६०६ ॥
विप्रकीर्णौ ततः कार्यौ पक्षवञ्चितकौ करौ ॥
पक्षप्रद्योतकौ पश्चाचारी तद्वशगा भवेत् ॥ ६०७ ॥
अन्तेऽवहित्थकं स्थानं तदा स्वस्तिकरेचितम् ॥
नृत्ताभिनयने तच्च प्रहर्षादौ नियुज्यते ॥ ६०८ ॥

इति स्वस्तिकरेचितम् ।

मण्डलस्थानके कृत्वा चतुरस्रतया स्थितः ॥
उद्वेष्ट्य दक्षिणं हस्तं नीत्वा स्कन्धशिरस्यमुम् ॥ ६०९ ॥
पतनोत्पतनाविष्टकनिष्ठाद्यङ्गुलीद्वयम् ॥
अलपद्माकृतिं कृत्वोद्घट्टितेऽङ्घ्रौ च दक्षिणे ॥ ६१० ॥
आविद्धवक्त्रतां नीत्वा करेऽत्र चतुरस्रिते ॥
तथैव वामपाण्यङ्घ्रि यत्र स्यात्तन्निकुट्टकम् ॥
आत्मसंभावनाख्यानपरे वाक्ये नियुज्यते ॥ ६११ ॥

इति निकुट्टकम् ।

तदेवार्धनिकुट्टं स्यादेकेनाङ्गेन चेत्कृतम् ॥
अप्ररूढवचःप्रोक्ते तत्रैवार्थे नियुज्यते ॥ ६१२ ॥

इत्यर्धनिकुट्टकम् ।

पार्श्वेन भ्रमरीं कृत्वा मण्डलस्थानके स्थितः ॥
कृत्वा छिन्नां कटीमेकां बाह्वोः शिरसि पल्लवम् ॥ ६१३ ॥
करभङ्गान्तरेणैवं यत्र त्रिचतुराः कृताः ॥
आवृत्तयः कटीछिन्नं तद्विस्मयनिरूपणे ॥ ६१४ ॥

॥ ६०५ ॥ ६०६ ॥ ६०७ ॥ ६०८ ॥ ६०९ ॥ ६१० ॥ ६११ ॥ ६१२ ॥
॥ ६१३ ॥ ६१४ ॥

इति कटीछिन्नम् ।

---

१ घ. ङ. कट्यां । २ ङ. परी । ३ ङ. तत्त्वप्र' । ४ च. 'णैव यत्र त्रिचतुराकृतिः । आ' ।

आक्षिप्तामप्यपक्रान्तां चारीं कृत्वा करद्वयम् ॥
स्वस्तिकीकृत्य नाभिस्थो दक्षिणः खटकामुखः ॥ ६१५ ॥
कट्यामन्योऽर्धचन्द्रश्च कृतः पार्श्वं च तन्नतम् ॥
अन्यदुद्वाहितं यत्र वृत्तिरङ्गान्तरैस्तथा ॥ ६१६ ॥
तत्कटीसममादिष्टं वैष्णवस्थानकान्वितम् ॥
प्रयोज्यं सूत्रधारेण जर्जरस्याभिमन्त्रणे ॥ ६१७ ॥

इति कटीसमम् ।

भुजंगत्रासितां चारीं कृत्वोत्क्षिप्य च कुञ्चितम् ॥
अङ्घ्रिमूरुकटीजानुत्र्यस्रं यत्र विवर्तयेत् ॥ ६१८ ॥
व्यावृत्तिपरिवृत्तिभ्यामेको दोलाकरोऽपरः ॥
खटकाख्यस्तदन्वर्थं भुजंगत्रासितं मतम् ॥ ६१९ ॥

इति भुजंगत्रासितम् ।

चार्या(र्ये?)लाता नितम्बश्च करोऽथ चतुरस्रकः ॥
एतद्दक्षिणतो वाम ऊर्ध्वजानुस्तथैव चेत् ॥
अङ्गान्तरं तदाऽलातं नृत्ते सललिते मतम् ॥ ६२० ॥

इत्यलातम् ।

हस्ते व्यावर्तमाने तु सोऽङ्घ्रिर्विक्षिप्यते बहिः ॥
चतुरस्रः परः पाणिः पूर्वोऽथ परिवर्तने ॥ ६२१ ॥
पाणिराक्षिप्यते चाङ्घ्रिर्यत्राङ्गं चान्यदीदृशम् ॥
विक्षिप्ताक्षिप्तकं च स्या(तत्स्या)द्गतागतनिरूपणे ॥ ६२२ ॥
इमं तु नाट्यतत्त्वज्ञा विनियोगं न मन्वते ॥
वाक्यार्थाभिनयस्तत्र यत्राभिनयहस्तकाः ॥ ६२३ ॥
प्राधान्येन विधीयन्ते नृत्तमात्रपरं त्विदम् ॥
अतोऽन्तरालसंधाने गतीनां च परिक्रमे ॥ ६२४ ॥
तथा युद्धनियुद्धस्थचारीस्थानकसंक्रमे ॥
कार्ये तालानुसंधाने योज्यं करणमीदृशम् ॥ ६२५ ॥

॥ ६१५ ॥ ६१६ ॥ ६१७ ॥ ६१८ ॥ ६१९ ॥ ६२० ॥ ६२१ ॥ ६२२ ॥
॥ ६२३ ॥ ६२४ ॥ ६२५ ॥

इति विक्षिप्ताक्षिप्तकम् ।

---

१ च. तत्र त° । २ च. वृत्ति र° । ३ च. °ण दर्दुर° । ४ च. °मूर्धक° । ५ ङ. वाममूर्ध्वे° । ६ ङ. °रस्रोऽपरः पूर्वो भुजोऽथ° । ७ च. °म् । कार्ये तालानुसं° । ८ च. यथा । ९ च. °संयुते । का° ।

वृश्चिकं चरणं कृत्वा यत्रारालं शिरस्थले ॥
तद्दिकं करमाधाय नासाक्षेत्रार्जवेन तु ॥ ६२६ ॥
कृतो वक्षस्यरालोऽन्यस्तद्वदन्ति निकुञ्चितम् ॥
एतदुत्पतनौत्सुक्यवितर्कादौ प्रयुज्यते ॥ ६२७ ॥
अन्ये पताकसूच्यास्यावस्मिन्नासाग्रगौ विदुः ॥ ६२८ ॥

इति निकुञ्चितम् ।

ऊर्ध्वं व्यावर्तनेनाधः परिवर्तनतः करे ॥
पार्श्वक्षेत्राद्भ्राम्यमाणे जङ्घास्वस्तिकमाचरेत् ॥ ६२९ ॥
ततोऽपक्रान्तचारीकस्तद्दिकश्चरणो यदा ॥
वामो दोलाकरः प्रोक्तं करणं घूर्णितं तदा ॥ ६३० ॥

इति घूर्णितम् ।

कुञ्चिते चरणे चार्यां चोर्ध्वजानौ यदा करः ॥
तद्दिग्भवोऽलपद्मो वाऽरालश्चोर्ध्वमुखो भवेत् ॥ ६३१ ॥
पक्षवञ्चितकौ चोर्ध्वं स्तनसाम्यस्थजानुनः ॥
खटकाख्योऽ(स्यो)ऽपरो वक्षस्यूर्ध्वजानुस्त(नु त)दोच्यते॥६३२॥

इत्यूर्ध्वजानुः(नु) ।

मण्डले स्थानके स्थित्वा वक्षस्थः खटकामुखः ॥
सूचीमुखं चापसार्य यदा तस्यान्तिके कृतः ॥ ६३३ ॥
अङ्घ्रिरुद्घट्टितः पार्श्वे संनतं चापसारणे ॥
तदर्धरेचितं योज्यमसमञ्जसचेष्टने ॥ ६३४ ॥

इत्यर्धरेचितम् ।

गुल्फयोः स्वस्तिकं कृत्वा पादयोरपसर्पणे ॥
युगपत्करयोर्यत्रोद्वेष्टनं चापवेष्टनम् ॥
कुर्यान्मुहुर्मुहुस्तत्तु मत्तल्लि मदवेदकम् ॥ ६३५ ॥

इति मत्तल्लि ।

उपेत्याप्रसृतौ पादौ वामश्चेद्रेचितः करः ॥
कट्यामन्यस्तदा त्वर्धमत्तल्लि तरुणे मदे ॥ ६३६ ॥

॥ ६२६ ॥ ६२७ ॥ ६२८ ॥ ६२९ ॥ ६३० ॥ ६३१ ॥ ६३२ ॥ ६३३ ॥
॥ ६३४ ॥ ६३५ ॥ ६३६ ॥

इत्यर्धमत्तल्लि ।

---

१ च. °स्थलम् । तदेकं क° । २ ङ. करणं । ३ च. °कुञ्चनम् । ४ घ. छ. °रीयुक्तदि° । ५ ङ. °र्ध्वे समसा° । ६ ङ. °र्पणम् । यु° ।

रेचितो दक्षिणो हस्तः सोऽङ्घ्रिरुद्घट्टितो भवेत् ॥
यत्र दोलाकरो वामस्तद्रेचकनिकुट्टकम् ॥ ६३७ ॥
इति रेचकनिकुट्टकम् ।
नितम्बकेशबन्धादिवर्तनो दक्षिणः करः ॥ ६३८ ॥
बहुशः करिहस्तोऽन्यः पादश्चोद्घट्टितस्तथा ॥
अङ्गान्तरं चेल्ललितं तदा नृत्ते विलासिनि ॥ ६३९ ॥
इति ललितम् ।
देहक्षेत्रात्करे सूचीमुखसंज्ञेऽपसर्पति ॥
सूचीपादोऽप्यपसृतश्चारी स्याद्भ्रमरी ततः ॥
क्रमादङ्गद्वयेऽप्येवं ललिते वलितं भवेत् ॥ ६४० ॥
इति वलितम् ।
यत्रोर्ध्वजानुश्चारी स्याल्लताहस्तौ करौ कृतौ ॥ ६४१ ॥
तयोरेकं ततो न्यस्येदुपर्यूर्ध्वस्थजानुतः ॥
पुनरङ्गान्तरेणैव दण्डपक्षं तदुच्यते ॥ ६४२ ॥
इति दण्डपक्षम् ।
पराङ्मुखौ नाभितटे हस्तौ चेत्खटकामुखौ ॥
सूचीपादोऽङ्घ्रिणाऽन्येन युक्त्वाऽपक्रान्तयाऽन्वितः ॥
अङ्घ्रिरन्यस्तथैव स्यात्तदा पादापविद्धकम् ॥ ६४३ ॥
इति पादापविद्धकम् ।
विधाय भ्रमरीं चारीं ततो नूपुरपादिकाम् ॥ ६४४ ॥
पादेनैकेन तद्दिक्कं हस्तं रेचितमाचरेत् ॥
द्वितीयं तु लताहस्तं यत्र तन्नूपुरं विदुः ॥ ६४५ ॥
इति नूपुरम् ।
पादमाक्षिप्तचारीकं तदैवोद्वेष्टितं करम् ॥
त्रिकं च वलितं कृत्वा पादस्वस्तिकमाचरेत् ॥ ६४६ ॥
ततस्तद्द्वितीयाङ्गं युगपच्चोल्बणौ करौ ॥
यत्र तद्भ्रमरं योज्यं तच्चोद्धतपरिक्रमे ॥ ६४७ ॥

॥ ६३७ ॥ ६३८ ॥ ६३९ ॥ ६४० ॥ ६४१ ॥ ६४२ ॥ ६४३ ॥ ६४४ ॥ ॥ ६४५ ॥ ६४६ ॥ ६४७ ॥

इति भ्रमरम् ।

---

१ ग. °मणे रतः । च. °मरी मतः । २ च °नुनः । पु° । ३ च. युक्त्वाप° । ४ घ. °दिकम् । ६ घ. ङ. °यं तल्लता° ।

अलपद्मौ कटीपार्श्वक्षेत्रे यत्र क्रमात्करौ ॥
कटीछिन्ना च वैशाखं स्थानं तच्छिन्नमुच्यते ॥
स्यात्तालभञ्जने तच्च तथाऽङ्गप्रतिसारणे ॥ ६४८ ॥

इति च्छिन्नम् ।

भुजंगत्रासिता चारी ततो यत्र च रेचितौ ॥
हस्तौ स्तो वामपार्श्वे तद्भुजंगत्रस्तरेचितम् ॥ ६४९ ॥

इति भुजंगत्रस्तरेचितम् ।

चारी चेद्दक्षिणाङ्घ्रेः स्यात्पूर्वोक्ता दक्षिणः करः ॥
रेचितोऽन्यो लताहस्तो भुजंगाञ्चितकं तदा ॥ ६५० ॥

इति भुजंगाञ्चितम् ।

*चारी चेद्दण्डपादा स्याद्दण्डपक्षौ च हस्तकौ ॥
प्रमोदनृत्तविषयं तदा स्याद्दण्डरेचितम् ॥
प्रयोगमपरे त्वाहुरस्योद्धतपरिक्रमे ॥ ६५१ ॥

इति दण्डरेचितम् ।

वक्षःक्षेत्रस्थयोः पाण्योर्वामश्चेदलपल्लवः ॥
दक्षिणश्चतुरोऽङ्घ्रिस्तूद्धट्टितश्चतुरं तदा ॥
एतद्विस्मयसूचायां वैदूषिक्यां नियुज्यते ॥ ६५२ ॥

इति चतुरम् ।

द्रुतापसारितं वामं सूचीपादं विधाय चेत् ॥
तत्पार्श्वे दक्षिणं न्यस्येत्तत्कालं रेचयेत्कटिम् ॥ ६५३ ॥
कुर्वन्वा भ्रमरीं हस्तौ व्यावृत्तपरिवर्तितौ ॥
कृत्वाऽन्ते चतुरस्रः स्यात्कटिभ्रान्तं तदा भवेत् ॥ ६५४ ॥
अस्य तालान्तरालेषु यतीनां परिपूरणे ॥
प्रयोगमाह निःशङ्कस्तथा गतिपरिक्रमे ॥ ६५५ ॥

इति कटिभ्रान्तम् ।

एक उद्वेष्टितेनाधो विप्रकीर्णः करोऽपरः ॥
ऊर्ध्वं तादृक्परावृत्त्या वक्षःक्षेत्रगतस्ततः ॥ ६५६ ॥

॥ ६४८ ॥ ६४९ ॥ ६५० ॥ ६५१ ॥ ६५२ ॥ ६५३ ॥ ६५४ ॥ ६५५ ॥
॥ ६५६ ॥

---

* 'ख. ग.' पुस्तकयोर्न विद्यतेऽयं श्लोकः ।

---

१ च. तत्र रथा° । २ घ. °सूतायां । ३ च. °त्काले रे° ।

उत्तानो रेचितश्चैकोऽपरोऽधोमुखरेचितः ॥
आलीढं स्थानकं यत्र तद्व्यंसितमुदाहृतम् ॥
प्रयोज्यमाञ्जनेयादिमहाकपिपरिक्रमे ॥ ६५७ ॥

इति व्यंसितम् ।

चार्याऽतिक्रान्तया पादं पात्यमानं तु कुञ्चयेत् ॥
व्यावर्तितेन तत्कालं करं निष्क्रामयेत्ततः ॥ ६५८ ॥
आक्षिप्य परिवर्तेन तं कुर्यात्खटकामुखम् ॥
वक्षस्येवं द्वितीयाङ्गं यत्र तत्क्रान्तमिष्यते ॥
प्रयोगमाहुराचार्यास्तस्योद्धतपरिक्रमे ॥ ६५९ ॥

इतिक्रान्तम् ।

हस्तपादकटिग्रीवं रेचितं स्थानकं पुनः ॥
वैशाखं यत्र तज्ज्ञेयं विज्ञैर्वैशाखरेचितम् ॥ ६६० ॥

इति वैशाखरेचितम् ।

करिहस्तौ करौ पादः पृष्ठे वृश्चिकपुच्छवत् ॥
दूरसंनतपृष्ठं च यत्र तद्वृश्चिकं विदुः ॥
एतदैरावणादीनां[1] व्योमयाने नियुज्यते ॥ ६६१ ॥

इति वृश्चिकम् ।

वृश्चिकं चरणं कृत्वा बाहुशीर्षे यदा क्रमात् ॥
अलपद्मौ निकुट्येते तदा वृश्चिककुट्टितम् ॥
सविस्मये व्योमयानवाञ्छादौ विनियुज्यते ॥ ६६२ ॥

इति वृश्चिककुट्टितम् ।

यत्राङ्घ्री वृश्चिकीभूतौ स्वस्तिकौ रेचितौ करौ ॥
विच्युतौ चेत्तदाऽऽकाशयाने वृश्चिकरेचितम् ॥ ६६३ ॥

इति वृश्चिकरेचितम् ।

वृश्चिकश्चरणो यत्र वामहस्तो लताभिधः ॥
तल्लतावृश्चिकं योज्यं गगनोत्पतने[2] बुधैः ॥ ६६४ ॥

॥ ६५७ ॥ ६५८ ॥ ६५९ ॥ ६६० ॥ ६६१ ॥ ६६२ ॥ ६६३ ॥ ६६४ ॥

इति लतावृश्चिकम् ।

---

१ च. 'तद्वै रा' । २ ङ. 'गनात्पात' ।

आक्षिप्ता यत्र चारी स्यादाक्षिप्तः खटकामुखः ॥
चतुरो वा तदाक्षिप्तं विदूषकगतौ मतम् ॥ ६६५ ॥
इत्याक्षिप्तम् ।
कनिष्ठाङ्गुलिभागे चेद्वामाङ्घ्रेर्दक्षिणः स्थितः ॥ ६६६ ॥
स्तब्धजङ्घः सार्धतालद्वितयं स्यात्प्रसारितः ॥
तदैव स्तब्धबाहुः सन्वामपार्श्वेऽलपल्लवः ॥ ६६७ ॥
वामेतरः करः किंचित्प्रसृताग्रोऽर्गलं तदा ॥
परिक्रमेऽङ्गदादीनां शार्ङ्गदेवेन कीर्तितम् ॥ ६६८ ॥
इत्यर्गलम् ।
ऊर्ध्वमूर्ध्वाङ्गुलितलः पादः पार्श्वे प्रसारितः ॥ ६६९ ॥
तदग्रयुक्पताकोऽङ्गं यत्रेत्थमपरं क्रमात् ॥
सूत्रधारादिविषये तत्स्यात्तलविलासितम् ॥ ६७० ॥
इति तलविलासितम् ।
अङ्गुष्ठो वृश्चिकाङ्घ्रेश्चेल्ललाटे तिलकं लिखेत् ॥
तदा ललाटतिलकं विद्याधरगतौ मतम् ॥ ६७१ ॥
इति ललाटतिलकम् ।
पाण्योः स्वस्तिकयोरूर्ध्वमुख(खः?) पार्श्वे निकुट्टितः ॥ ६७२ ॥
एकोऽन्योधोमुखो यत्र तद्वत्पादो निकुट्टितः ॥
तत्प्रकाशनं संचाराभ्यासे पार्श्वनिकुट्टकम् ॥ ६७३ ॥
इति पार्श्वनिकुट्टकम् ।
यत्र कृत्वोड्डितां चारीं दोलाभ्यां चक्रवद्भ्रमेत् ॥ ६७४ ॥
अन्तर्नतेन गात्रेण तद्रूचुश्चक्रमण्डलम् ॥
सुराणां वरिवस्यायां तदुद्धतपरिक्रमे ॥ ६७५ ॥
इति चक्रमण्डलम् ।
चार्यौ बद्धास्थितावर्ते उरोमण्डलिनौ करौ ॥
यत्रोरोमण्डलं तत्तु शिववल्लभभाषितम् ॥ ६७६ ॥
॥ ६६५ ॥ ६६६ ॥ ६६७ ॥ ६६८ ॥ ६६९ ॥ ६७० ॥ ६७१ ॥ ६७२ ॥
॥ ६७३ ॥ ६७४ ॥ ६७५ ॥ ६७६ ॥
इत्युरोमण्डलम् ।

---

१ ङ. °द्वितीयः स्या° । २ ङ. °शनसं° । ३ ङ. कृत्वा द्रुतां ।

उद्वेष्टितेनापवेष्टे(?) [1] यत्र दोलाभिधौ करौ ॥
चारी चाषगतिस्तत्स्यादावर्तं [2] भयसर्पणे ॥ ६७७ ॥

इत्यावर्तम् ।

उत्तानो वामपार्श्वस्थोऽलपद्मो दक्षिणः करः ॥ ६७८ ॥
यत्र तत्कुञ्चितं पादे सव्येऽग्रतलसंचरे ॥
तेन देवानभिनयेदानन्दभरनिर्भरान् ॥ ६७९ ॥

इति कुञ्चितम् ।

ऊर्ध्वजानोः परं चारी दोलापादा यदा भवेत् ॥
दोलौ हस्तौ तदा प्रोक्तं दोलापादं विदांवरैः ॥ ६८० ॥

इति दोलापादम् ।

पादमाक्षिप्तया चार्याऽऽक्षिप्याऽऽक्षिप्य करावपि ॥ ६८१ ॥
व्यावृत्तपरिवृत्ताभ्यां कृत्वा भ्रमरिकौ करौ ॥
रेचितौ चेद्विवृत्तं स्यात्तच्चोद्धतपरिक्रमे ॥ ६८२ ॥

इति विवृत्तम् ।

सूच्यङ्घ्रिणा द्वितीयाङ्घ्रेः पार्ष्णितः स्वस्तिकं भवेत् ॥
व्यावृत्तिप्रत्यावृत्तिभ्यां वलयित्वैकपार्श्वतः ॥ ६८३ ॥
त्रिकं बद्धाभिधां चारीं कुर्याद्धस्तौ च रेचितौ ॥
यत्र तद्विनिवृत्तं स्यात्पूर्वोक्तविनियोगभाक् ॥ ६८४ ॥

इति विनिवृत्तम् ।

पार्श्वक्रान्ता [3] भवेच्चारी करौ पादानुगौ यदा ॥ ६८५ ॥
पार्श्वक्रान्तं तदा यद्वाऽभिनेयवशगौ करौ ॥
तद्योज्यं भीमसेनादे रौद्रप्राये परिक्रमे ॥ ६८६ ॥

इति पार्श्वक्रान्तम् ।

पार्ष्णिदेशे [4] द्वितीयाङ्घ्रेः कुञ्चितश्चरणो भवेत् ॥
समुन्नतमुरः पाणेः खटकाख्यस्य मध्यमा ॥ ६८७ ॥
यत्राङ्गुलिस्तिलकयेल्ललाटं तन्निशुम्भितम् ॥
यद्वा वृश्चिकहस्तः स्यादभिनेयो महेश्वरः ॥ ६८८ ॥

॥ ६७७ ॥ ६७८ ॥ ६७९ ॥ ६८० ॥ ६८१ ॥ ६८२ ॥ ६८३ ॥ ६८४ ॥
॥ ६८५ ॥ ६८६ ॥ ६८७ ॥ ६८८ ॥

इति निशुम्भितम् ।

---

१ ङ. 'द्वेष्टेनापवेष्टेन य' । २ ङ. लयसर्पणे । ३ ख. ग. घ. ङ. पार्श्वाका' । ४ घ. ङ. पार्ष्णिभागे ।

पृष्ठतो भ्रामितं पादं सर्वतोमण्डलंप्लुतः ॥ ६८९ ॥
भ्रामयेच्चेच्छिरः क्षेत्रे विद्युद्भ्रान्तं तदोच्यते ॥
प्रयोगमस्य च प्राहुरुद्धतानां परिक्रमे ॥ ६९० ॥
इति विद्युद्भ्रान्तम् ।
कृत्वा चारीमतिक्रान्तामङ्घ्रिमग्रे प्रसारयेत् ॥
यत्र हस्तौ प्रयोगार्हावतिक्रान्तमदो विदुः ॥ ६९१ ॥
इत्यतिक्रान्तम् ।
विद्युद्भ्रान्तादण्डपादे क्रमाच्चार्यौ विधाय चेत् ॥
उद्वेष्टितापवेष्टाभ्यामेकमार्गगतौ करौ ॥ ६९२ ॥
रेचयन्नग्रतः पृष्ठे पार्श्वयोर्विक्षिपेत्तदा ॥
विक्षिप्तमभिनेतव्यस्तेनोद्धतपरिक्रमः ॥ ६९३ ॥
इति विक्षिप्तम् ।
करं चरणमाक्षिप्य यत्र त्रिकविवर्तनम् ॥
करोऽपरो रेचितश्च तद्वदन्ति विवर्तितम् ॥ ६९४ ॥
इति विवर्तितम् ।
दोलापादा यदा चारी करिहस्तोऽस्य कर्णगः ॥
क्रियाविष्टः करोऽन्वर्थं गजक्रीडितकं तदा ॥ ६९५ ॥
इति गजक्रीडितकम् ।
सूचीपादो नतं पार्श्वं वक्षस्थः खटकामुखः ॥ ६९६ ॥
वामोऽलपल्लवो गण्डक्षेत्रे चेद्गण्डसूचितम् ॥
क्षेत्रेऽत्र केचिदिच्छन्ति सूचीपादं परे पुनः ॥ ६९७ ॥
सूचीमुखं नृत्तहस्तमन्येऽभिनयहस्तकम् ॥
करेणेनाभिनेतव्या कपोलालंकृतिस्तदा ॥ ६९८ ॥
इति गण्डसूची(चि) ।
लतारेचितकौ हस्तौ वृश्चिकाङ्घ्रिः समुन्नतम् ॥
उरो यत्र तदन्वर्थाभिधानं गरुडप्लुतम् ॥ ६९९ ॥
इति गरुडप्लुतम् ।
दण्डपादाख्यया चार्या यद्वाऽतिक्रान्तया द्रुतम् ॥ ७०० ॥

॥ ६८९ ॥ ६९० ॥ ६९१ ॥ १९२ ॥ ६९३ ॥ ६९४ ॥ ६९५ ॥ ६९६ ॥
॥ ६९७ ॥ ६९८ ॥ ६९९ ॥ ७०० ॥

---

१ च. °लत्वतः । २ ड. तदुच्य° । ३ क. °रतोऽत्राभि° ।

उत्क्षिप्य पात्यमानेऽङ्घ्रावग्रे चेत्तालिकां करौ ॥
संशब्दां[1] कुरुतोऽन्वर्थं तलसंस्फोटितं तदा ॥ ७०१ ॥

इति तलसंस्फोटितम् ।

समपादस्तु[2] पृष्ठे चेन्निहितश्चरणोऽपरः ॥ ७०२ ॥
मुष्टिहस्तः स्थितो वक्षस्यर्धचन्द्रः कटीतटे ॥
पार्श्वजानु तदा ज्ञेयं योज्यं युद्धनियुद्धयोः ॥ ७०३ ॥

इति पार्श्वजानु ।

पृष्ठेऽङ्घ्रिः प्रसृतो भूमिश्लिष्टाङ्गुष्ठौ लताकरौ ॥
यदा तदा महापक्षियुद्धे[3] गृध्रावलीनकम् ॥ ७०४ ॥

इति गृध्रावलीनकम् ।

उत्क्षिप्य कुञ्चितः पादः स्थाप्यते भूमिमस्पृशन् ॥
खटकाख्यश्च[4] तद्दिक्को हस्तो वक्षस्यथापरः ॥ ७०५ ॥
अलपद्मः शिरोदेशे तथैवाङ्गान्तरं क्रमात् ॥
यत्र तच्छार्ङ्गदेवेन गदितं सूचि विस्मये ॥ ७०६ ॥

इति सूचि ।

सूच्येवैकाङ्गरचितमर्धसूचि प्रचक्षते ॥ ७०७ ॥

इत्यर्धसूचि ।

पक्षवञ्चितको वाऽर्धचन्द्रो हस्तः कटीगतः ॥
खटकाख्योऽपरो वक्षस्यन्यपार्ष्णिस्थितोऽपरः ॥
सूच्यङ्घ्रिश्चेत्तदा सूचीविद्धं चिन्तादिगोचरम् ॥ ७०८ ॥

इति सूचीविद्धम् ।

हरिणप्लुतया चार्या दोलाखटकहस्तकम् ॥
हरिणप्लुतमाख्यातं नामोक्तविनियोगकम् ॥ ७०९ ॥

इति हरिणप्लुतम् ।

ऊर्ध्वमण्डलिनौ हस्तौ सूच्यङ्घ्रिर्यत्रवद्धया ॥
विवृत्तोऽथ भ्रमरिका परिवृत्तं तदुच्यते ॥ ७१० ॥

॥ ७०१ ॥ ७०२ ॥ ७०३ ॥ ७०४ ॥ ७०५ ॥ ७०६ ॥ ७०७ ॥ ७०८ ॥
॥ ७०९ ॥ ७१० ॥

इति परिवृत्तम् ।

---

१ ङ. सशब्दं । २ घ. ङ. 'पादोरुष्ट' । ३ ख. ग. 'क्षि बद्धौ गृ' । घ. ङ. 'क्षि बुद्धौ गृ' । ४ च. 'श्च चेदेको ह' ।

 

*चारीनूपुरपादोऽथ दण्डपादाद्द्रुतं करः ॥
दण्डवन्न्यस्यते यत्र दण्डपादं तदुच्यते ॥
सूरयो विनियुञ्जन्ति तत्साटोपपरिक्रमे ॥ ७११ ॥

इति दण्डपादम् ।

हस्तौ चेद्रेचितावूरू+ वृश्चिकाङ्घ्रिं निकुञ्च्य च ॥
भ्रमरी क्रियतेऽन्वर्थं मयूरललितं तदा ॥ ७१२ ॥

इति मयूरललितम् ।

दोलापादाख्यचारीकादङ्घ्रेरन्याङ्घ्रिणा यदा ॥
उत्प्लुत्य भ्रमरीं कुर्याद्भवेत्प्रेङ्खोलितं तदा ॥ ७१३ ॥

इति प्रेङ्खोलितम् ।

कृत्वा मृगप्लुतं यत्र कृतोऽङ्घ्रिः स्वस्तिकोऽग्रतः ॥
दोलौ हस्तौ संनतं तदधमापसृतौ भवेत् ॥ ७१४ ॥

इति संनतम् ।

अ³ञ्चितेऽपसरत्यङ्घ्रावन्यांङ्घ्रेर्नामितं शिरः ॥
तस्मिन्पार्श्वे करोऽप्येप रेचितोऽङ्गान्तरं तथा ॥
यत्र तत्सर्पितं मत्तस्योपसर्पापसर्पणे ॥ ७१५ ॥

इति सर्पितम् ।

वामश्चेत्खटको वक्षस्युद्वेष्टिततया परः ॥ ७१६ ॥
त्रिपताकः करः कर्णे तद्दिक्श्चरणोऽञ्चितः ॥
निष्क्राम्यते यदा प्रोक्तं करिहस्तं तदा बुधैः ॥ ७१७ ॥

इति करिहस्तम् ।

हस्तौ यो रेचितस्तद्दिक्पादश्चेद्भूमिघर्षणात् ॥
चलेत्पादान्तरान्मन्दं मन्दमन्यो लताकरः ॥
तदा खेचरसंचारगोचरं स्यात्प्रसर्पितम् ॥ ७१८ ॥

॥ ७११ ॥ ७१२ ॥ ७१३ ॥ ७१४ ॥ ७१५ ॥ ७१६ ॥ ७१७ ॥ ॥ ७१८ ॥

इति प्रसर्पितम् ।

---

* चारीनूपुरपाऽदोथ दण्डपादाद्द्रुतः कर इति ङ. पुस्तकपाठः साधुरिव भाति । + ऊराविति ङ. पुस्तकपाठः साधुः ।

---

१ ग. °दाद्भुतं क° । २ च. °ङ्घ्रिं नि° । ३ च. °ते प्रस° । ४ च. °न्याङ्घ्रौ नामि° ।

बद्धापक्रान्तयोश्चार्योः कृतयोर्हस्तयोः पुनः ॥
तत्तत्प्रयोगानुगयोरपक्रान्तमुदाहृतम् ॥ ७१९ ॥

इत्यपक्रान्तम् ।

अधोमुखाङ्गुली हस्तौ पताकौ चेच्छिरःस्थलम् ॥
आनीय परिवृत्तेन[1] निष्क्राम्योर्ध्वांसयोस्तयोः ॥ ७२० ॥
मिथोमुखाववस्थाप्य स्वदेहाभिमुखाङ्गुली ॥
नितम्बाख्यौ विधीयेते नितम्बं करणं तदा ॥ ७२१ ॥

इति नितम्बम् ।

दोलापादाऽङ्घ्रिगमनागमने हंसपक्षकः[2] ॥
अभ्येत्यथेत्थमन्याङ्गं यत्र[3] तत्स्खलितं मतम् ॥ ७२२ ॥

इति स्खलितम् ।

कृत्वाऽलातां पुरोऽङ्घ्रिं चेद्द्रुतं न्यस्य चपेटवत् ॥
कृतो हस्तस्तथाऽन्याङ्गं सिंहविक्रीडितं तदा ॥
एतद्रौद्रगतौ योज्यं ब्रूते श्रीकरणाग्रणीः ॥ ७२३ ॥

इति सिंहविक्रीडितम् ।

वृश्चिकोऽङ्घ्रिः पद्मकोशौ वौर्णनाभौ यदा करौ ॥ ७२४ ॥
अन्याङ्घ्रौ वृश्चिके प्राश्चौ भङ्क्त्वा तौ तादृशौ पुनः ॥
कृतौ सिंहाभिनयने सिंहाकर्षितकं तदा ॥ ७२५ ॥

इति सिंहाकर्षितम् ।

विधाय जनितां चारीं यद्यरालालपल्लवौ ॥
ललाटवक्षःक्षेत्रस्थौ हस्तावभिमुखाङ्गुली ॥ ७२६ ॥
क्रमात्कृत्वोद्वेष्टितेन व्यावृत्त्या पार्श्वगौ ततः ॥
वक्षोदेशेऽपवेष्टेन परिवृत्त्या च तादृशौ ॥ ७२७ ॥
मिथोमुखौ निधीयेते तदा स्यादवहित्थकम् ॥
गोपनप्रायवाक्यार्थाभिनये तन्नियुज्यते ॥ ७२८ ॥
अन्येऽवहित्थहस्तेन युक्तत्वादवहित्थकम् ॥
वदन्ति चिन्तादौर्बल्यप्रभृत्यभिनयक्षमम् ॥ ७२९ ॥

॥ ७१९ ॥ ७२० ॥ ७२१ ॥ ७२२ ॥ ७२३ ॥ ७२४ ॥७२५ ॥ ७२६॥
॥ ७२७ ॥ ७२८ ॥ ७२९ ॥

इत्यवहित्थकम् ।

---

१ च. °रिवर्तेन । २ च. °सपादयोः । अ° । ३ घ. ङ. यत्रादः स्ख° ।

यत्र वक्षसि निर्भुग्ने निहितौ खटकामुखौ ॥
मण्डलं स्थानकं तत्तु निवेशं गजवाहने ॥ ७३० ॥
इति निवेशम् ।
एलकाक्रीडिता चारी चेद्दोलखटकौ करौ ॥
संनतं वलितं गात्रमेलकाक्रीडितं तदा ॥
अध्रमप्रकृतिप्राणिगतिगोचरमिष्यते ॥ ७३१ ॥
इत्येलकाक्रीडितम् ।
चारी चेज्जनिता मुष्टिर्वक्षस्यन्यो लताकरः ॥
यदा तदा क्रियारम्भाभिनये जनितं भवेत् ॥ ७३२ ॥
इति जनितम् ।
आक्षिप्तां वामतश्चारीं व्यावृत्य परिवर्तितम् ॥ ७३३ ॥
करं कृत्वा नते पार्श्वे दक्षिणेऽरालतां नयेत् ॥
यत्र तत्स्यादुपसृतं विनये[1]नोपसर्पणे ॥ ७३४ ॥
इत्युपसृतम् ।
दोलापादां भजंश्चारीं संघट्टिततलौ करौ ॥
पताकौ रेचयित्वा चेद्वैष्णवे स्थानके स्थितः ॥ ७३५ ॥
कटिस्थं दक्षिणं हस्तं वामं रेचितमाचरेत् ॥
अनुकम्पाविधाने स्यात्तलसंघट्टितं तदा ॥ ७३६ ॥
इति तलसंघट्टितम् ।
यत्रापसारितानीतं हस्तपादं विधीयते ॥
गात्रमुद्वृत्तचारीकं तदुद्वृत्तं विदुर्बुधाः ॥ ८३७ ॥
इत्युद्वृत्तम् ।
कुञ्चितः प्रसरत्यङ्घ्रिरग्रे यत्रोद्गमोन्मुखः ॥
करौ च रेचितौ विष्णुक्रान्तं तत्क्रमणे हरेः ॥ ७३८ ॥
इति विष्णुक्रान्तम् ।
रेचितः पाणिरेकः स्याद्वक्षस्यन्योऽलपल्लवः ॥
लोलितं शीर्षमुभयोर्विश्रान्तं पार्श्वयोरपि ॥
वैष्णवं स्थानकं यत्र तदाहुर्लोलितं बुधाः ॥ ७४९ ॥

॥७३०॥७३१॥७३२॥७३३॥७३४॥७३५॥७३६॥७३७॥७३८॥७३९॥

इति लोलितम् ।

---

१ ङ. 'येनाप' ।

स्वस्तिकापसृतौ पादौ क्रमेण परिवाहितम् ॥ ७४० ॥
शिरो दोलौ यदा हस्तौ मदस्खलितकं तदा ॥
एतन्मध्यमदे योज्यं भाषते भववल्लभः ॥ ७४१ ॥

इति मदस्खलितम् ।

आविद्धां विदधच्चारीं व्यावृत्तपरिवर्तितम् ॥
अलपद्मकरं न्यस्येदूरुपृष्ठे यदा तदा ॥
संभ्रान्तं तत्प्रयोक्तव्यं ससंभ्रमपरिक्रमे ॥ ७४२ ॥

इति संभ्रान्तम् ।

अपेत्योपव्रजेद्वामं दक्षिणो नृत्तहस्तकः ॥ ७४३ ॥
सूचीमुखो निकुञ्च्येत साङ्घ्रिर्वामकरो यदि ॥
तद्वदङ्गान्तरं कृत्वा सूचीपादश्च दक्षिणः ॥ ७४४ ॥
हस्तोऽसावलपद्मः स्याद्वामहस्तस्तु पूर्ववत् ॥
एवं पुनः पुनर्यत्र विष्कम्भं तद्बभाषिरे ॥ ७४५ ॥

इति विष्कम्भम् ।

उद्घट्टितोऽङ्घ्रिः पार्श्वे तत्संनतं तालिकोद्यतौ ॥
हस्तौ यत्रोद्घट्टितं तदावृत्ताङ्गं प्रमोदकम् ॥ ७४६ ॥

इत्युद्घट्टितम् ।

शकटास्या भवेच्चारी प्रसार्येताङ्घ्रिणा सह ॥ ७४७ ॥
एको हस्तो द्वितीयस्तु वक्षस्थः खटकामुखः ॥
यत्र तच्छकटास्यं स्यात्तादृशे बालखेलिते ॥ ७४८ ॥

इति शकटास्यम् ।

सहोरूद्वृत्तया चार्या यत्र व्यावर्तनान्वितौ ॥
अरालखटकौ हस्तौ निदध्यादूरुपृष्ठयोः ॥
ऊरूद्वृत्तं तदीर्ष्यायां प्रार्थनाप्रेमकोपयोः ॥ ७४९ ॥

इत्यूरूद्वृत्तम् ।

अलातां विदधच्चारीं हस्तौ कुर्वीत रेचितौ ॥ ७५० ॥

॥ ७४० ॥ ७४१ ॥ ७४२ ॥ ७४३ ॥ ७४४ ॥ ७४५ ॥ ६४६ ॥ ७४७ ॥
॥ ७४८ ॥ ७४९ ॥ ७५० ॥

---

१ ख. ग. °ते शिव° । २ च. °स्येदुरु° । ३ ख. ग. °रो हृदि । ४ ङ. °टाख्या भ° । ५ ङ. °टखेलने । इ° ।

व्यावृत्त्या कुञ्चितौ कृत्वाऽलपद्मौ बाहुशीर्षयोः ॥
न्यस्येते यत्र तद्धीरा वृषभक्रीडितं जगुः ॥ ७५१ ॥
इति वृषभक्रीडितम् ।
हस्तौ चेद्रेचितौ स्यातां शिरस्तु परिवाहितम् ॥
स्वस्तिकापसृतौ पादौ तदा नागापसर्पितम् ॥
प्राहुः प्रयोगमेतस्य सूरयस्तरुणे मदे ॥ ७५२ ॥
इति नागापसर्पितम् ।
अङ्घ्रेरुत्क्षेपनिक्षेपावनु प्रोन्नतिसंनती ॥ ७५३ ॥
भजेतां त्रिपताकौ चेदेवमेव शिरस्तदा ॥
गङ्गावतरणं गङ्गावतारे शार्ङ्गिणोदितम् ॥ ७५४ ॥

॥ ७५१ ॥ ७५२ ॥ ७५३ ॥ ७५४ ॥

इति गङ्गावतरणम् ।

सकलकरणसाधारणीमितिकर्तव्यतामाह—

कर्तव्यः करणे प्रायो वामो वक्षःस्थितः करः ॥
पाणिस्तु दक्षिणस्तत्र स्यात्तत्तत्करणानुगः ॥ ७५५ ॥

कर्तव्यः करणे प्राय इति । प्राय इत्यनेन यत्र लक्षणे वामहस्तस्य पृथक्क्रिया नाभिहिता तत्रेत्यवगन्तव्यम् ॥ ७५५ ॥

इत्यष्टोत्तरशतं करणानि ।

---

अथोत्प्लुतिकरणानि लक्षयितुमाह—

अथ देश्यनुसारेण देशे देशे लसद्यशाः ॥
वदत्युत्प्लुतिपूर्वाणि करणानि हरप्रियः ॥ ७५६ ॥

अथ देश्यनुसारेणेति । एतेषां भरताद्यनुक्तत्वाच्छुद्धकरणवल्लक्षणनियमो नाऽऽद्रियत इत्यर्थः ॥ ७५६ ॥

अञ्चितं चैकचरणाञ्चितं स्याद्भैरवाञ्चितम् ॥
दण्डप्रणामाञ्चितं च कर्तर्यञ्चितकं ततः ॥ ७५७ ॥

तानुद्दिशति—अञ्चितमित्यादि ॥ ७५७ ॥

अलगं त्रीणि कूर्मोर्ध्वान्तरपूर्वालगानि च ॥
लोहडी कर्तरीलोहड्येकपादादिलोहडी ॥ ७५८ ॥

कूर्मोर्ध्वान्तरपूर्वालगानीति । कूर्मालगमूर्ध्वालगमन्तरालगमिति त्रीणि । कर्तरीलोहडीत्येकम् ॥ ७५८ ॥

ततः स्याद्दर्पसरणं शयनं जलपूर्वकम् ॥
नागबन्धं कपालाद्यं चूर्णनं नतपृष्ठकम् ॥ ७५९ ॥
स्यान्मत्स्यकरणं चाथ करस्पर्शनसंज्ञकम् ॥
एणप्लुतं ततस्तिर्यक्करणं तिर्यगञ्चितम् ॥ ७६० ॥

जलपूर्वकं शयनं जलशयनमित्येकम् । कपालाद्यं चूर्णनम् ॥ ७५९ ॥ ७६० ॥

तिर्यक्स्वस्तिकसंज्ञं च सूच्यन्तमथ कीर्तितम् ॥
बाह्यान्तश्छन्नतिरिपालगचक्रोचितादिमाः ॥ ७६१ ॥
सप्त भ्रमर्यो भ्रमरी शिरःपूर्वा दिगादिमा ॥
समपादाञ्चितं भ्रान्तपादाञ्चितमतः परम् ॥ ७६२ ॥
स्कन्धभ्रान्तं च षट्त्रिंशदिति सोढलनन्दनः ॥
संक्षिप्योत्प्लुतिपूर्वाणि करणानि समादिशत् ॥ ७६३ ॥

सूच्यन्तमित्युद्देशे स्वतन्त्रमेकम् । शिरःपूर्वा भ्रमरी शिरोभ्रमरी । दिगादिमा भ्रमरीत्यनुषङ्गः । दिग्भ्रमरीति ॥ ७६१ ॥ ७६२ ॥ ७६३ ॥

अञ्चितं समपादेन स्थित्वोत्तालोत्प्लुतो भवेत् ॥

इत्यञ्चितम् ।

एकपादाञ्चितं तत्स्यादेकपादविनिर्मितम् ॥ ७६४ ॥

एतेषां लक्षणानि स्पष्टोर्थानि ॥ ७६४ ॥

इत्येकचरणाञ्चितम् ।

ऊरुपृष्ठस्थितैकाङ्घ्रेरुत्प्लुतौ भैरवाञ्चितम् ॥

इति भैरवाञ्चितम् ।

उत्प्लुत्याञ्चितवद्यत्र निपतेद्दण्डवद्भुवि ॥
दण्डप्रणामाञ्चितं तद्वदितं नृत्तवेदिभिः ॥ ७६५ ॥

इति दण्डप्रणामाञ्चितम् ।

अञ्चितं स्वस्तिकाङ्घ्रिभ्यां कर्तर्यञ्चितमुच्यते ॥

इति कर्तर्यञ्चितम् ।

अधोमुखोत्प्लुतोऽग्रे च पतित्वा कुक्कुटासनम् ॥
बध्नीयाद्यत्र तत्प्रोक्तमलगं सूरिशार्ङ्गिणा ॥ ७६६ ॥

॥ ७६५ ॥ ७६६ ॥

**इत्यलगम् ।**

---

१ ख. ग. कपोला° । २ ख. ग. °ष्टानि ।

कूर्मासनं यद्यलगे भवेत्कूर्मालगं तदा ॥

इति कूर्मालगम् ।

ऊर्ध्वालगं तत्पतित्वा समाङ्घ्रेरूर्ध्वसंस्थितौ ॥ ७६७ ॥

इत्यूर्ध्वालगम् ।

कृतालगो निपत्योर्व्यामुत्तानोरःस्थलस्थितः ॥
पृष्ठतः श्रोणिसंस्पर्शि शिरः स्यादन्तरालगे ॥ ७६८ ॥

इत्यन्तरालगम् ।

समपादस्थितो यत्र विवर्त्य त्रिकमुत्प्लुतः ॥
तिर्यक्पाते लोहडी तल्लुण्ठितं चोच्यते बुधैः ॥ ७६९ ॥

इति लोहडी लुण्ठितं वा ।

स्वस्तिकाङ्घ्रिकृता सैव कर्तरीलोहडी मता ॥

इति कर्तरीलोहडी [कर्तरी] लुण्ठितं वा ।

एकाङ्घ्रिजा त्वेकपादलोहडी संमता सताम् ॥ ७७० ॥

इत्येकपादलोहडी, एकपादलुण्ठितं वा ।

वैष्णवे स्थानके स्थित्वा पतेत्पार्श्वेन चेद्भुवि ॥
करणं दर्पसरणं तदाह करणाधिपः ॥ ७७१ ॥

इति दर्पसरणम् ।

तदेव जलशय्याख्यमासने जलशायिवत् ॥

इति जलशयनम् ।

नागबन्धं तदेव स्यान्नागबन्धवदासने ॥ ७७२ ॥

इति नागबन्धम् ।

समपादस्थितो यत्र संस्पृश्य शिरसा भुवम् ॥
परावृत्तस्तत्कपालचूर्णनं वर्णितं बुधैः ॥ ७७३ ॥

इति कपालचूर्णनम् ।

कपालचूर्णनं कृत्वोत्तानं वक्षस्थलं ततः ॥
यत्रोक्तं नतपृष्ठं तद्बङ्कोलमपरैरदः ॥ ७७४ ॥

॥ ७६७ ॥ ७६८ ॥ ७६९ ॥ ७७० ॥ ७७१ ॥ ७७२ ॥ ७७३ ॥
॥ ७७४ ॥

इति नतपृष्ठम् ।

---

१ च. 'त्र स्पर्शते शि' । २ ख. ग. 'स्थलानतम् । य' ।

उत्प्लुत्य मध्यमावर्त्य वामपार्श्वेन मत्स्यवत् ॥
परिवर्तेत चेन्मत्स्यकरणं वर्णितं तदा ॥ ७७५ ॥

इति मत्स्यकरणम् ।

अलगं करणं कृत्वा हस्तेनाऽऽश्रित्य च क्षितिम् ॥
परिवर्तेत यत्रादः करस्पर्शनमूचिरे ॥ ७७६ ॥

इति करस्पर्शनम् ।

उत्प्लुत्यान्यतमां सूचीं खे कृत्वा भजते क्षितौ ॥
यदोत्कटासनं चोर्ध्वस्थानमेणप्लुतं तदा ॥ ७७७ ॥

इत्येणप्लुतम् ।

तिर्यगेकेन पादेन समुत्प्लुत्य निपत्य चेत् ॥
तिष्ठेत्कुञ्च्यङ्घ्रिणाऽन्येन स्यात्तिर्यक्करणं तदा ॥ ७७८ ॥

इति तिर्यक्करणम् ।

समपादात्परं तिर्यगुत्प्लुतौ तिर्यगञ्चितम् ॥

इति तिर्यगञ्चितम् ।

स्यात्तिर्यक्स्वस्तिकं कृत्वा स्वस्तिकं तिर्यगुत्प्लुतौ ॥ ७७९ ॥

इति तिर्यक्स्वस्तिकम् ।

समाद्यन्यतमां सूचीं दधते निधने यदि ॥
करणानि तदा प्राज्ञि सूच्यन्तानि प्रचक्षते ॥ ७८० ॥

इति सूच्यन्तम् ।

दक्षिणेनाङ्घ्रिणा स्थित्वा वाममङ्घ्रिं तु कुञ्चयेत् ॥
वामावर्तं भवेद्यत्र सा बाह्यभ्रमरी मता ॥ ७८१ ॥

इति बाह्यभ्रमरी ।

एतस्यास्तु विपर्यासादन्तर्भ्रमरिका भवेत् ॥

इत्यन्तर्भ्रमरी ।

त्रिविक्रमाकारधारी स्थानमास्थाय यत्र तु ॥
वामावर्तभ्रमादाहुस्तां छिन्नभ्रमरीं बुधाः ॥ ७८२ ॥

इति च्छिन्नभ्रमरी ।

तिरिपभ्रमरी तिर्यग्भ्रमेऽङ्घ्रिस्वस्तिकात्परम् ॥ ७८३ ॥

॥ ७७५ ॥ ७७६ ॥ ७७७ ॥ ७७८ ॥ ७७९ ॥ ७८० ॥ ७८१ ॥ ७८२॥
॥ ७८३ ॥

इति तिरिपभ्रमरी ।

वैष्णवस्थानके स्थित्वा यदा वामाङ्घ्रिणा स्थितः ॥
देहं भ्रामयते तिर्यगलगभ्रमरी तदा ॥ ७८४ ॥
इत्यलगभ्रमरी ।
चक्रभ्रमरिका खण्डसूच्यर्धे चक्रवद्भ्रमात् ॥
इति चक्रभ्रमरी ।
समपादानन्तरं चेत्तिरश्चीं भ्रामयेत्तनुम् ॥
उचितभ्रमरीं प्राह तदा शंकरवल्लभः ॥ ७८५ ॥
इत्युचितभ्रमरी ।
शिरसैव भुवि स्थित्वोर्ध्वीकृतौ चरणौ दधत् ॥
परिभ्रमति यत्र त्रिः सा शिरोभ्रमरी मता ॥ ७८६ ॥
इति शिरोभ्रमरी ।
प्राग्वत्सकृत्सकृद्भ्रान्त्वा[1] हस्तभ्रान्त्या धृतक्षितिः ॥
दिक्चतुष्के क्रमात्तिष्ठेद्यदा दिग्भ्रमरी तदा ॥ ७८७ ॥
इति दिग्भ्रमरी ।
समपादाश्चितं कृत्वा स्कन्धेनैकेन भूस्थितः ॥ ७८८ ॥
परिवृत्य च तिर्यक्चेत्पादावुल्लोलयेत्तदा ॥
समपादाश्चितं प्राह सूरिः श्रीकरणाग्रणीः[2] ॥ ७८९ ॥
इति समपादाश्चितम् ।
भ्रामयित्वा दक्षिणाङ्घ्रिं तदीयतलपृष्ठतः ॥
जङ्घामध्यमवष्टभ्य वामाङ्घ्रेरश्चितं[3] पदम् ॥ ७९० ॥
विधाय तिर्यक्संधाभ्यामधिष्ठाय विवृत्य च ॥
पादावुल्लोलयेत्प्रोक्तं भ्रान्तपादाश्चितं तदा ॥ ७९१ ॥
इति भ्रान्तपादाश्चितम् ।
उत्कटासनमास्थायाश्चितं कृत्वा सयुग्मतः ॥
स्थित्वा भुवि व्योम्नि कृत्वाऽङ्गान्तराणि ततो भुवम् ॥ ७९२ ॥
अवष्टभ्य कराभ्यां[4] चेद्भ्रान्त्वा भ्रान्त्वा च पूर्ववत् ॥
तिष्ठेत्प्रतिदिशं प्रोक्तं स्कन्धभ्रान्तं तदा[5] बुधैः ॥ ७९३ ॥
॥ ७८४ ॥ ७८५ ॥ ७८६ ॥ ७८७ ॥ ७८८ ॥ ७८९ ॥ ७९० ॥ ७९१ ॥
॥ ७९२ ॥ ७९३ ॥

इति स्कन्धभ्रान्तम् ।

---

१ ख. ग. °न्त्वा भ्रान्त्वा हस्तधृ° । २ ख. ग. ङ. श्रीकरणेश्वरः । ३ ख. ग. °श्चितं तदा । वि° । ङ. °श्चिते यदा । वि° । ४ च. °भ्यां च भ्रान्त्वा । ५ च. ततो ।

विद्यन्तेऽन्येऽपि भूयांसो भेदाः करणसंश्रयाः ॥
न ते श्रीशार्ङ्गिणा प्रोक्ता ग्रन्थप्रथिमभीरुणा ॥ ७९४ ॥

॥ ७९४ ॥

इति षट्त्रिंशदुत्प्लुतिकरणानि ।

---

अथ करणसमुदायरूपानङ्गहारांल्लँक्षयितुमादौ तेषां प्रयोगस्थलं फलं सनिर्वचनं स्वरूपं चाऽऽह—

**पूर्वरङ्गे प्रयोक्तव्यान्दृष्टादृष्टफलानपि ॥**
**अङ्गहारान्प्रवक्ष्यामि नामतो लक्ष्मतस्तथा ॥ ७९५ ॥**

**पूर्वरङ्ग इत्यादि ।** पूर्वरङ्गो नाम नाटकादिषु रूपकेषु प्रथमं नाटकादिवस्तुसूचकत्वेन प्रत्याहारादिभिर्द्वाविंशत्यङ्गैर्युक्तो नान्दीप्रभृतिः कविना निबद्धः संदर्भविशेषः । यथाऽऽह **भावप्रकाश**कारस्तस्य सनिरुक्तिकं लक्षणम्—

"नटो गीतेन नाट्येन नृत्तेनाभिनयेन च[2] ।
रङ्गे रामाद्यवस्थाभिरनुकार्याभिरञ्जसा ॥
रामादितादात्म्यापत्तेः प्रेक्षकान्रमयिष्यति ।
सभापतिः सभा सभ्या गायका वादका अपि ॥
नटी नटश्च मोदन्ते यत्रान्योन्यानुरञ्जनात् ।
अतो रङ्ग इति ज्ञेयः पूर्वं यस्तु प्रयुज्यते ॥
तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते" इति ।
"कलापाताः पादभागाः परिवर्ताश्च सूरिभिः ॥
पूर्वं क्रियन्ते यद्रङ्गे पूर्वरङ्गो भवेदतः" इति च ।

तस्मिन्पूर्वरङ्गे । **प्रयोक्तव्यानिति ।** तत्र द्वाविंशत्यङ्गेषु मार्गासारितादौ तथा त्रिसमानन्तरङ्ग(?)द्वाराख्येऽङ्गे ।

"देवस्तुत्याश्रयकृतं यदङ्गं यत्र दृश्यते ।
माहेश्वरैरङ्गहारैरुद्धतैस्तत्प्रयोजयेत् ॥
यत्र शृङ्गारसंबन्धं गानं स्त्रीपुरुषाश्रयम् ।
देव्या कृतैरङ्गहारैर्ललितैस्तत्प्रयोजयेत्"[3] ।

इत्यादिभरतवचनवशादङ्गहारास्तत्र प्रयोक्तव्या इत्यर्थः । सम्यक्प्रयोगो(गे) दृष्टं फल तावद्गीतश्रवणेन नृत्तदर्शनेन च जनित आनन्दः । अदृष्टं फलं तु देवताप्रीतिजनकत्वेनापूर्वसाध्यं लोकान्तरसुखम् । तदुभयमप्येतैः सिध्यतीत्युक्तम्—**दृष्टादृष्टफलानपीति ।**

---

१ ख. ग °माह । आदौ । २ ख. वा । ३ ख. °र्थः । तथा स° । ४ ख. °लं तदेव तन्नी° ।

तथाचोक्तम्—

"एवं यः पूर्वरङ्गं तु विधिना संप्रयोजयेत् ।
नाशुभं प्राप्नुयादत्र पश्चात्स्वर्गं स गच्छति" इति ॥ ७९५ ॥

**अङ्गानामुचिते देशे प्रापणं सविलासकम् ॥**
**मातृकोत्करसंपाद्यमङ्गहारोऽभिधीयते ॥ ७९६ ॥**

**अङ्गानामिति** । करचरणादीनाम् । **उचिते देश इति** । पूर्वोक्तेषु पार्श्वादित्रयोदशसु पाणिक्षेत्रादिषु यत्रोचितो देशस्तस्मिन्निति । तथा पादयोर्यस्यां चार्यां य उचितो देशस्तस्मिन्निति । एवं शिरःप्रभृतीनामप्युचितो देशो द्रष्टव्यः । तत्र हरणं हारो देशान्तरात्प्रापणमित्यर्थः । एतावत्येवाङ्गहारलक्षणेऽभिहिते लौकिकाङ्गक्रियाणामप्यङ्गहारत्वं प्रसज्येत । तद्व्यवच्छेदार्थं सविलासकमित्युक्तम् । तथाऽपि नृत्तकरणेष्वतिव्याप्तिर्भवतीति तत्परिहाराय मातृकोत्करसंपाद्यमित्युक्तम् । मातृका नाम करणद्वयनिष्पाद्या क्रिया । तथा वक्ष्यति—"**करणाभ्यां मातृका स्यात्**" इति । तासामुत्करः समूहः । तेन संपाद्यः । एवं विशिष्टमङ्गानां हरणमङ्गहार इति सनिरुक्तिकं लक्षणम् ॥ ७९६ ॥

निरुक्त्यन्तरं दर्शयति—

**यद्वा हारो हरस्यायं प्रयोगोऽङ्गैरिति स्मृतः ॥ ७९७ ॥**

**यद्वेति** । हरस्यायं हार इति प्रयोगविशेषणम् । सोऽपि प्रयोगोऽङ्गैर्निर्वर्तित इत्यङ्गैर्हारोऽङ्गहार इत्यर्थः ॥ ७९७ ॥

मातृकोत्करसंपाद्यमित्यङ्गहारलक्षणे प्रसक्ताया मातृकाया लक्षणप्रसङ्गात्करणसंघातविशेषाणां संज्ञा दर्शयति—

**करणाभ्यां मातृका स्यात्कलापः करणैस्त्रिभिः ॥**
**चतुर्भिः खण्डको ज्ञेयः संघातः पञ्चभिर्मतः ॥**
**इति संघविशेषेण संज्ञाभेदान्परे जगुः ॥ ७९८ ॥**

**करणाभ्यामित्यादि** । करणाभ्यामवयवभूताभ्याम् । मातृकेत्यवयवसंज्ञा वेदितव्या । तथा त्रिभिः करणैः संघातः ॥ ७९८ ॥

**करणन्यूनताधिक्यं तेषां मेने मुनिः स्वयम् ॥**
**द्वाभ्यां त्रिचतुराभिर्वेत्येतद्वाशब्दसूचितम् ॥ ७९९ ॥**

**करणन्यूनताधिक्यमिति** । अङ्गहारेषु करणानां न्यूनता चाऽऽधिक्यं च । क्वचिदुक्तेषु न्यूनता क्वचिदुक्तेभ्य आधिक्यमिति । तेषामङ्गहाराणां तत्कृतोऽवगन्तव्यमित्या-

---

१ ख. ग. नाश्रुतं । २ घ. °रो विधी° । च. °रो निधी° । ३ ख. ग. घ. °शेषाणां सं° । ४ ख. ग. °रणान्न्यून° । ५ ङ. °धिक्ये ते° । ६ ख. ग. °हारे तु क° ।

काङ्क्षायामाह—**वाशब्दसूचितमिति** । द्वाभ्यां त्रि(तिसृ)भिश्चतुर्भि(तसृभि)रिति मातृकाविशेषणम् ॥ ७९९ ॥

**स्थिरहस्तोऽथ पर्यस्तः सूचीविद्धोऽपराजितः ॥**
**वैशाखरेचितः पार्श्वस्वस्तिको भ्रमरोऽपरः ॥ ८०० ॥**

अथाङ्गहारानुद्दिशति—**स्थिरहस्त इत्यादि** ॥ ८०० ॥

**आक्षिप्तकः परिच्छिन्नो मदाद्विलसितस्ततः ॥**
**आलीढाच्छुरितौ पार्श्वच्छेदसंज्ञोऽपसर्पितः ॥ ८०१ ॥**

**मदाद्विलसित इति** । मदविलसित इत्यर्थः ॥ ८०१ ॥

**मत्ताक्रीडस्तथा विद्युद्भ्रान्तोऽमी षोडशोदिताः ॥**
**चतुरस्रेण मानेनाङ्गहारा मुनिसत्तमैः[1] ॥ ८०२ ॥**
**विष्कम्भापसृतौ(तो) मत्तस्खलितो गतिमण्डलः ॥**
**अपविद्धश्च विष्कम्भोद्घट्टिताक्षिप्तरेचिताः ॥ ८०३ ॥**
**रेचितोऽर्धनिकुट्टश्च वृश्चिकापसृतस्ततः ॥**
**अलातकः परावृत्तः परिवृत्तादिरेचितः ॥ ८०४ ॥**
**उद्वृत्तकश्च संभ्रान्तसंज्ञः स्वस्तिकरेचितः ॥**
**षोडशेति त्र्यस्रमाना द्वात्रिंशदुभये मताः ॥ ८०५ ॥**
**करणव्रातसंदर्भानन्त्यात्तेषामनन्तता ॥**
**द्वात्रिंशत्ते तथाऽप्युक्ताः प्राधान्यविनियोगतः ॥ ८०६ ॥**

**चतुरस्रेण मानेनेति** । चतुरस्रश्चचतुष्पुटस्तस्य मानं प्रमाणं समसंख्यकलात्मकं चतुरस्रमित्युच्यते । तेनेत्यर्थः । अतः स्थिरहस्तादीनां षोडशानामेकैकगुरु[2]कलाप्रयोज्यत्वेन वक्ष्यमाणानां समसंख्यया चतुरस्रत्वमवगन्तव्यम् । ननु सूचिविद्धादिकेषु केषुचिदङ्गहारेषु करणन्यूनताधिक्यस्य दृष्टत्वात्कथं करणानां समसंख्यत्वं कथं च तेषामङ्गहाराणां चतुरस्रत्वमिति चेदुच्यते । तत्र करणस्थाने रेचकैः[3] पूरणं कर्तव्यमिति संप्रदायो वेदितव्यः । अत एव **ग्रन्थकारेणापि—"अङ्गहाराः सरेचकाः"** इत्युद्दिशता रेचकानामङ्गहारत्वं सूचितम् । तथा गतिमण्डलादिषु त्र्यस्राङ्गहारेषु रेचकैः करणानां विषमसंख्या संपादनीयेत्यवगन्तव्यम् ॥ ८०२ ॥ ८०३ ॥ ८०४ ॥ ८०५ ॥ ८०६ ॥

अङ्गहाराङ्गाणां करणानां प्रयोगे कालप्रमाणमाह—

**एकैकं करणं कार्यं कलया गुरुरूपया ॥**
**सर्वेषामङ्गहाराणामित्याह करणाग्रणीः ॥ ८०७ ॥**

---

१ च. मुनिसंमताः । २ ख. ग. 'रुकलप्र' । ज. 'रुकालप्र' । ३ ज. रेचनैः ।

**एकैकं करणं कार्यं कलया गुरुरूपयेति ।** कलाशब्दस्य लघुपर्यायत्वेन प्रसिद्धत्वादत्र गुरुरूपयेति विशेषणम् ॥ ८०७ ॥

लीनं समनखं कृत्वा व्यंसितं चात्र विच्युतौ ॥
करौ कृत्वोज्झितालीढः प्रत्यालीढं व्रजेत्ततः ॥ ८०८ ॥

अङ्गहाराणां विशेषलक्षणानि ग्रन्थत एव सुबोधानि ॥ ८०८ ॥

निकुट्टकोरूद्वृत्ताख्यस्वस्तिकाक्षिप्तकान्यथ ॥ ८०९ ॥
नितम्बं करिहस्तं च कटीच्छिन्नमिति क्रमात् ॥
करणैः स्थिरहस्तः स्याद्दशभिः शिववल्लभः ॥८१० ॥
अङ्गहारेषु सर्वेषु प्रत्यालीढान्तमादितः ॥
प्रयोक्तव्यमिति प्राहुः केचिन्नाट्यविशारदाः ॥ ८११ ॥

इति स्थिरहस्तः ।

तलपुष्पपुटं पूर्वमपविद्धं च वर्तितम् ॥
निकुट्टकोरूद्वृत्ताख्याक्षिप्तोरोमण्डलान्यथ ॥ ८१२ ॥
नितम्बं करिहस्तं च कटीछिन्नमिति क्रमात् ॥
दशभिः करणैरेभिः प्रोक्तः पर्यस्तको बुधैः ॥ ८१३ ॥

इति पर्यस्तकः ।

अर्धसूच्यथ विक्षिप्तमावर्तं च निकुट्टकम् ॥
ऊरूद्वृत्तमथाऽऽक्षिप्तमुरोमण्डलसंज्ञकम् ॥ ८१४ ॥
करिहस्तं कटीछिन्नं नवभिः करणैरिति ॥
सूचीविद्धाभिधः प्रोक्तोऽङ्गहारो भरतादिभिः ॥ ८१५ ॥

इति सूचीविद्धः ।

दण्डपादं [1]भ्रंसितं च प्रसर्पितकसंज्ञकम् ॥
निकुट्टार्धनिकुट्टे चाऽऽक्षिप्तोरोमण्डले ततः ॥ ८१६ ॥
करिहस्तं कटीछिन्नमिति लक्ष्मापराजिते ॥
नवभिः करणैर्युक्तमुक्तं निःशङ्कसूरिणा ॥ ८१७ ॥

इत्यपराजितः ।

वैशाखरेचितं द्वाभ्यामङ्गाभ्यामथ नूपुरम् ॥ ८१८ ॥

॥ ८०९ ॥ ८१० ॥ ८११ ॥ ८१२ ॥ ८१३ ॥ ८१४ ॥ ८१५ ॥ ८१६ ॥ ॥ ८१७ ॥ ८१८ ॥

---

१ घ. ङ. व्यंसितं ।

भुजंगत्रासितोन्मत्तमण्डलस्वस्तिकान्यथ ॥
निकुट्टकोरूद्वृत्ताख्याक्षिप्तोरोमण्डलानि च ॥ ८१९ ॥
करिहस्तं कटीछिन्नमित्येकादशभिः क्रमात् ॥
करणैरङ्गहारः स्यान्नाम्ना वैशाखरेचितः ॥ ८२० ॥

इति वैशाखरेचितः ।

दिक्स्वस्तिकं ततश्चाङ्गैनैकेनार्धनिकुट्टकम् ॥
पुनर्दिक्स्वस्तिकमथान्याङ्गेनार्धनिकुट्टकम् ॥ ८२१ ॥
अपविद्धोरूद्वृत्ताख्ये तथाऽऽक्षिप्तं नितम्बकम् ॥
करिहस्तं कटीछिन्नमष्टभिः करणैरिति ॥
स्यात्पार्श्वस्वस्तिकोऽभ्यासात्त्वाद्ययोर्दशभिर्भवेत् ॥ ८२२ ॥

इति पार्श्वस्वस्तिकः ।

नूपुराक्षिप्तकच्छिन्नसूचीन्यथ नितम्बकम् ॥ ८२३ ॥
करिहस्तं च करणमुरोमण्डलकं ततः ॥
कटीछिन्नमिति प्रोक्तः करणैर्भ्रमरोऽष्टभिः ॥ ८२४ ॥

इति भ्रमरः ।

कृत्वा नूपुरविक्षिप्तालातान्याक्षिप्तकं ततः ॥
उरोमण्डलसंज्ञं च नितम्बं करिहस्तकम् ॥ ८२५ ॥
कटीछिन्नं च करणैरेभिराक्षिप्तकोऽष्टभिः ॥
विक्षिप्तालातकाक्षिप्तप्रयोगं द्विः परे जगुः ॥ ८२६ ॥

इत्याक्षिप्तकः ।

कृत्वा समनखं छिन्नं संभ्रान्तमथ वामतः ॥
भ्रमरं वामपार्श्वार्धसूच्यङ्घ्रिक्रान्तसंज्ञकम् ॥ ८२७ ॥
भुजंगत्रासितावूर्ध्वं करिहस्तं विधीयते ॥
कटीछिन्नं परिच्छिन्नो नवभिः करणैरिति ॥ ८२८ ॥

इति परिच्छिन्नः ।

मदस्खलितमत्ताल्लितलसंस्फोटितानि च ॥
बहुशश्चित्रगुम्फानि निकुट्टकमतः परम् ॥ ८२९ ॥

॥ ८१९ ॥ ८२० ॥ ८२१ ॥ ८२२ ॥ ८२३ ॥ ८२४ ॥ ८२५ ॥ ८२६ ॥
॥ ८२७ ॥ ८२८ ॥ ८२९ ॥

---

१ च. 'गं त्वप' । २ घ. ङ. वामतश्चार्ध' । ३ ङ. 'च्यतिक्रा' ।

ऊरूद्वृत्तं च करणं करिहस्तसमाह्वयम् ॥
कटीछिन्नं च सप्तेति मदाद्विलसिते जगुः ॥ ८३० ॥
करणानि त्रयाणां तु त्रिरभ्यासात्त्रयोदश ॥
अभ्यासांस्त्रिषु वाञ्छन्ति चतुष्पञ्चादिकानपि ॥ ८३१ ॥

इति मदविलसितः ।

[1]व्यंसितं सनिकुट्टं स्यान्नूपुरं वामतोऽङ्घ्रितः ॥
अन्यतोऽलातकाक्षिप्ते उरोमण्डलकं ततः ॥ ८३२ ॥
करिहस्तं कटीछिन्नमित्येभिः करणैः क्रमात् ॥
भवेदष्टभिरालीढोऽङ्गहारो मुनिसंमतः ॥ ८३३ ॥

इत्यालीढः ।

नूपुरं भ्रमरं चाथ व्यंसितालातके ततः ॥ ८३४ ॥
नितम्बं सूचिसंज्ञं च करिहस्तमतः परम् ॥
कटीछिन्नं च करणान्यष्टेत्याच्छुरिते विदुः ॥ ८३५ ॥

इत्याच्छुरितः ।

वृश्चिकाद्यं कुट्टितं स्यादूर्ध्वजानु ततः परम् ॥
आक्षिप्तस्वस्तिकं[2] कृत्वा त्रिकस्य परिवर्तनम् ॥ ८३६ ॥
उरोमण्डलसंज्ञं च नितम्बं करिहस्तकम् ॥
कटीछिन्नं च करणं पार्श्वच्छेदेऽष्टमं मतम् ॥ ८३७ ॥

इति पार्श्वच्छेदः ।

अपक्रान्तं व्यंसितस्य केवलं करयोः क्रिया ॥
करिहस्तं चार्धसूची(चि) विक्षिप्ताख्यं कटीयुतम् ॥ ८३८ ॥
छिन्नमूरूद्वृत्तसंज्ञमाक्षिप्तं करिहस्तकम् ॥
कटीछिन्नं च सप्तेति करणान्यपसर्पिते ॥
सार्धानि द्विः कटीछिन्नकरिहस्तकृतैर्नव[3] ॥ ८३९ ॥

इत्यपसर्पितः ।

भ्रमरं नूपुराख्यं च भुजंगत्रासिताभिधम् ॥ ८४० ॥
दक्षिणाङ्गेनैव कृत्वा कुर्याद्वैशाखरेचितम् ॥
आक्षिप्तच्छिन्नकरणे भ्रमरव्यंसिते ततः ॥ ८४१ ॥

॥ ८३० ॥ ८३१ ॥ ८३२ ॥ ८३३ ॥ ८३४ ॥ ८३५ ॥ ८३६ ॥ ८३७॥
॥ ८३८ ॥ ८३९ ॥ ८४० ॥ ८४१ ॥

---

१ ख. ग. घ. ङ. व्यंसितं । २ च. 'क्षिप्तं स्व' । ३ ङ. च. 'तैर्न च । इ' ।

उरोमण्डलसंज्ञं च नितम्बं करिहस्तकम् ॥
कटीछिन्नं च करणैरेभिर्द्वादशभिः क्रमात् ॥ ८४२ ॥
एकादशभिरभ्यासाद्गणैना भ्रमरस्य तु ॥
मत्ताक्रीडाभिधानः स्यादङ्गहारो हरप्रियः ॥ ८४३ ॥

इति मत्ताक्रीडः ।

वामाङ्गेनार्धसूचि स्याद्विद्युद्भ्रान्तं तु दक्षिणे ॥
पुनरङ्गविपर्यासाद्द्वयं छिन्नमतः परम् ॥ ८४४ ॥
अतिक्रान्तं वामतोऽथ लतावृश्चिकमाचरेत् ॥
कटीछिन्नं च षडिति द्वयोरभ्यासतः पुनः ॥
करणान्यष्टसंख्यानि विद्युद्भ्रान्तेऽभ्यधुर्बुधाः ॥ ८४५ ॥

इति विद्युद्भ्रान्तः ।

इति चतुरस्रमानेन षोडशाङ्गहाराः ।

---

निकुट्टकाख्यकरणं विधायार्धनिकुट्टकम् ॥
भुजंगत्रासितादूर्ध्वं भुजंगत्रस्तरेचितम् ॥ ८४६ ॥
आक्षिप्तोरोमण्डले च क्रमात्कृत्वा लताकरम् ॥
कटीछिन्नं सप्तमं तु विष्कम्भापसृते भवेत् ॥ ८४७ ॥

इति विष्कम्भापसृतः ।

मत्तल्लिगण्डसूच्याख्ये लीनं मत्तापविद्धकम् ॥
तद्वतत्वेन कर्तव्यं तलसंस्फोटितं ततः ॥ ८४८ ॥
करिहस्तं कटीछिन्नं करणानि क्रमादिति ॥
सप्ताङ्गहारे प्रोक्तानि मत्तस्खलितसंज्ञके ॥ ८४९ ॥

इति मत्तस्खलितः ।

मण्डलस्वस्तिकादूर्ध्वं निवेशोन्मत्तसंज्ञके ॥
उद्घट्टिताख्यं मत्तल्लि स्यादाक्षिप्तमतः परम् ॥ ८५० ॥

॥ ८४२ ॥ ८४३ ॥ ८४४ ॥ ८४५ ॥ ८४६ ॥ ८४७ ॥ ८४८ ॥ ८४९॥ ॥ ८५० ॥

---

१ ख. ग. घ. ङ. °णैरिश्येभिर्दश° । २ ख. ग. °भ्यासगण° । ३ ङ. °णने भ्र° । ४ ङ. च. °कुट्टाख्यं च क° । ५ घ. °माश्रितल° । ६ च. °सृतो भ° । ७ ग. घ. ङ. श्रयेत् । ८ च. °र्ध्वं नूपुरोन्म° ।

उरोमण्डलकं छिन्नं कट्यादि गतिमण्डले ॥
इत्यष्टौ करणानि स्युरिति निःशङ्कभाषितम् ॥ ८५१ ॥

इति गतिमण्डलः ।

अपविद्धं प्रथमतः सूचीविद्धमथो करौ[1] ॥
उद्वेष्टिते समं चार्या बद्धया वलयेत्त्रिकम् ॥ ८५२ ॥
ऊरूद्वृत्तं च करणमुरोमण्डलकं ततः ॥
कटीछिन्नं पञ्चमं चेदपविद्धस्तदा भवेत् ॥ ८५३ ॥

इत्यपविद्धः ।

निकुट्टकाख्यं करणं स्यान्निकुञ्चितमञ्चितम् ॥
ऊरूद्वृत्तं ततोऽप्यर्धनिकुट्टकरणं ततः ॥ ८५४ ॥
भुजंगत्रासितं हस्तोद्वेष्टने भ्रमरं ततः ॥
करिहस्तं कटीछिन्नं विष्कम्भे नवमं भवेत् ॥ ८५५ ॥

इति विष्कम्भः ।

उद्घट्टिते निकुट्टाख्यमुरोमण्डलकं ततः ॥
नितम्बं करिहस्तं स्यात्कटीछिन्नं च पञ्चमम् ॥ ८५६ ॥

इत्युद्घट्टितः ।

स्वस्तिकाद्यं रेचितं स्यात्पृष्ठस्वस्तिकसंज्ञकम् ॥
दिक्स्वस्तिकं कटीछिन्नं[3] समं घूर्णितनामकम् ॥ ८५७ ॥
भ्रमरं वृश्चिकाद्यं च रेचितं पार्श्वपूर्वकम् ॥
निकुट्टकमुरःपूर्वं मण्डलं संनतं ततः ॥ ८५८ ॥
सिंहाकर्षितकं नागापसर्पितं[4]समाह्वयम् ॥
अथ वक्षःस्वस्तिकं तु केचिदिच्छन्ति सूरयः ॥ ८५९ ॥
दण्डपक्षं च[5] करणं ललाटतिलकाह्वयम् ॥
विलासितं तलाद्यं च भवेदथ निशुम्भितम् ॥ ८६० ॥
विद्युद्भ्रान्ताभिधावूर्ध्वं गजक्रीडितकं ततः ॥
नितम्बविष्णुक्रान्ताख्योरूद्वृत्ताक्षिप्तकानि च ॥ ८६१ ॥

॥ ८५१ ॥ ८५२ ॥ ८५३ ॥ ८५४ ॥ ८५५ ॥ ८५६ ॥ ८५७ ॥ ८५८ ॥
॥ ८५९ ॥ ८६० ॥ ८६१ ॥

---

१ ग. घ. ङ. करे । २ ङ. उद्वेष्टनं । ३ ख. ग. ङ. 'टीपूर्वे स' । ४ च. 'र्पितका' । ५ ख.ग. 'तं ललाट्यं च । ङ 'तं ललाटाद्यं भ' ।

उरोमण्डलसंज्ञं च नितम्बं करिहस्तकम् ॥
वैकल्पिकं कटीछिन्नमिच्छन्त्याक्षिप्तरेचिते ॥ ८६२ ॥
पञ्चविंशतिसंख्यानि करणानि पुरातनाः ॥
नितम्बोरोमण्डलयोस्त्वावृत्त्या सप्तविंशतिः ॥ ८६३ ॥
ये वक्षःस्वस्तिकं चा(ना?)त्र कटीछिन्नं च मन्वते ॥
पञ्चविंशतिरेव स्यादावृत्तावपि तन्मते ॥ ८६४ ॥

इत्याक्षिप्तरेचितः ।

स्वस्तिकाद्यं रेचितं स्यादर्धरेचितकं ततः ॥
वक्षःस्वस्तिकमुन्मत्तसंज्ञमाक्षिप्तरेचितम् ॥ ८६५ ॥
अर्धमत्तल्लिकरणं स्याद्रेचकनिकुट्टकम् ॥
भुजंगत्रस्तपूर्वं च रेचितं नूपुरं ततः ॥ ८६६ ॥
वैशाखरेचितं कृत्वा भुजंगाञ्चितमाचरेत् ॥
दण्डरेचितकं[1] चक्रमण्डलं वृश्चिकादिमम् ॥ ८६७ ॥
रेचितं वृश्चिकादूर्ध्वं विवृत्तविनिवृत्तके ॥
विवर्तितं च गरुडप्लुतकं ललितं भवेत् ॥ ८६८ ॥
मयूराद्यं सर्पितं च स्खलिताख्यं प्रसर्पितम् ॥
तलसंघट्टितमथो वृषभक्रीडितं ततः ॥ ८६९ ॥
लोलितं षट्त्रि(द्वविं)शतिर्या करणानामितीरिता ॥
तां कृत्वा विषमैर्भागैश्चतुर्धा दिक्चतुष्टये ॥ ८७० ॥
परिवृत्त[2]प्रकारेण प्रयुज्यान्ते समाचरेत् ॥
उरोमण्डलकं यत्र कटीछिन्नं स रेचितः ॥ ८७१ ॥

इति रेचितः ।

नूपुराख्यं विवृत्तं च निकुट्टार्धनिकुट्टके ॥
अर्धरेचितकादूर्ध्वं स्याद्रेचकनिकुट्टकम् ॥ ८७२ ॥
ललिताख्यं च वैशाखरेचितं चतुरं ततः ॥
दण्डरेचितकादूर्ध्वं भवेद्वृश्चिककुट्टितम् ॥ ८७३ ॥

॥ ८६२ ॥ ८६३ ॥ ८६४ ॥ ८६५ ॥ ८६६ ॥ ८६७ ॥ ८६८ ॥ ८६९ ॥
॥ ८७० ॥ ८७१ ॥ ८७२ ॥ ८७३ ॥

---

१ घ. च. 'तं व्यंसितादू' । २ ङ. 'वृत्तिप्रयोगेण ।

निकुट्टकं पार्श्वपूर्वं संभ्रान्तोद्घट्टिते ततः ॥
उरोमण्डलकादूर्ध्वं करिहस्तसमाह्वयम् ॥
कटीछिन्नं सप्तदश भवेदर्धनिकुट्टके ॥ ८७४ ॥
इत्यर्धनिकुट्टकः ।
लतावृश्चिकमादौ स्यान्निकुञ्चितमतः परम् ॥
मत्तल्लि च नितम्बाख्यं करणं करिहस्तकम् ॥ ८७५ ॥
कटीछिन्नं स्मृतं षष्ठं वृश्चिकापसृते बुधैः ॥
अत्र स्थाने नितम्बस्य भ्रमरं केचिदूचिरे ॥ ८७६ ॥
इति वृश्चिकापसृतः ।
स्वस्तिकं व्यंसितं तु द्विरलाताख्योर्ध्वजानुनी ॥
निकुञ्चितार्धसूच्याख्यविक्षिप्तोद्वृत्तकान्यथ ॥ ८७७ ॥
आक्षिप्तं करिहस्तं स्यात्कटीछिन्नमलातके ॥
एकादश स्युः करणान्येकं द्विर्व्यंसितेऽधिकम् ॥ ८७८ ॥
इत्यलातकः ।
दक्षिणाङ्गेन जनितं शकटास्यमलातकम् ॥ ८७९ ॥
भ्रमरं चाथ गण्डस्थनिकुट्टितकरान्वितम् ॥
करिहस्तं कटीछिन्नं करणानि क्रमादिति ॥ ८८० ॥
परावृत्ते षडुक्तानि श्रीमत्सोढलसूनुना ॥
नमनोन्नमनं तज्ज्ञैरङ्गस्योक्तं निकुट्टकम् ॥ ८८१ ॥
इति परावृत्तः ।
नितम्बं करणं कृत्वा कुर्यात्स्वस्तिकरेचितम् ॥ ८८२ ॥
विक्षिप्ताक्षिप्तकमथो लतावृश्चिकसंज्ञकम् ॥
उन्मत्तं करिहस्तं च भुजंगत्रासितं ततः ॥ ८८३ ॥
आक्षिप्तकं नितम्बं च नितम्बान्तान्यमून्यथ ॥
नव भ्रमरकाख्येण परिवृत्तं समाचरेत् ॥ ८८४ ॥
दिगन्तरमुखे[4] कृत्वा व्यावृत्य परयोर्दिशोः ॥
करिहस्तकटीछिन्ने कुर्यादाद्यदिशि स्थितः ॥ ८८५ ॥

॥ ८७४ ॥ ८७५ ॥ ८७६ ॥ ८७७ ॥ ८७८ ॥ ८७९ ॥ ८८० ॥ ८८१ ॥
॥ ८८२ ॥ ८८३ ॥ ८८४ ॥ ८८५ ॥

---

१ ङ. 'तम्बं स्याद्भ्रम'। २ख. ग. घ. 'सिताधि' । ३ च.' क्षिप्तं करिहस्तं च नितम्बाद्यान्य'।
४ घ. 'खे स्थित्वेत्यावर्त्यापरयो' ।

यत्र तं प्राहुराचार्याः परिवृत्तकरेचितम् ॥
परिवृत्तविधिश्चायं त्यक्त्वाऽन्त्यं करणद्वयम् ॥ ८८६ ॥
सर्वेषामङ्गहाराणां शार्ङ्गदेवेन सूरिणा ॥
भट्टाभिनयगुप्तादिमतज्ञेन निगद्यते ॥ ८८७ ॥

इति परिवृत्तकरेचितः ।

नूपुरात्करणादूर्ध्वं भुजंगाञ्चितमाचरेत् ॥
गृध्रावलीनकं द्वे च विक्षिप्ते पृथगङ्गजे ॥ ८८८ ॥
उद्वृत्तमध्येर सूच्याख्यं नितम्बमथ वृश्चिकम् ॥
लतापूर्वं कटीछिन्नं नवभिः करणैरिति ॥
उद्वृत्तको द्विर्विक्षिप्तोद्वृत्ताख्यमधिकं द्वयम् ॥ ८८९ ॥

इत्युद्वृत्तकः ।

विक्षिप्तमञ्चितं गण्डसूची(चि) सर्वान्तिमं ततः ॥
अर्धसूचि ततो दण्डपादं वामाङ्गसाधितम् ॥ ८९० ॥
चतुरं भ्रमरं चाथ नूपुराक्षिप्तनामके ॥
अर्धस्वस्तिकसंज्ञं च नितम्बं करिहस्तकम् ॥ ८९१ ॥
उरोमण्डलसंज्ञं च कटीछिन्नमिति क्रमात् ॥
करणैः[2] पञ्चदशभिः संभ्रान्तमभणन्बुधाः ॥ ८९२ ॥

इति संभ्रान्तः ।

वैशाखरेचितादूर्ध्वं वृश्चिकं द्विरिदं द्वयम् ॥
निकुट्टकाभिधादूर्ध्वं क्रमावाप्तलताकरम् ॥ ८९३ ॥
कटीछिन्नं चतुर्थं चेत्तदा स्वस्तिकरेचितम् ॥
ज्ञेयमाद्यद्वयाभ्यासादधिकं करणद्वयम् ॥ ८९४ ॥

॥ ८८६ ॥ ८८७ ॥ ८८८ ॥ ८८९ ॥ ९९० ॥ ८९१ ॥ ८९२ ॥ ८९३ ॥
॥ ८९४ ॥

इति स्वस्तिकरेचितः ।

इति त्र्यस्रमानेन षोडशाङ्गहाराः ।

---

मृदङ्गैर्गोमुखैर्भम्भाभेरीपटहडिण्डिमैः ॥ ८९५ ॥
पणवैर्दर्दुराद्यैश्च वाद्यैस्तालयानुगैः ॥
वर्धमानासारितेषु पाणिकागीतकादिषु ॥ ८९६ ॥

---

१ ङ. °वृत्तिवि° । २ ख. ग. °णैः सप्तद° ।

पूर्वरङ्गस्य चाङ्गेषु धीरैरुत्थापनादिषु ॥
अङ्गहाराः प्रयोक्तव्याः श्रेयः परमभीप्सुभिः ॥ ८९७ ॥
विनियोगोऽङ्गहारेषु करणानामितीरितः ॥
आहुः पृथक्प्रयोगेऽपि करणानां महत्फलम् ॥ ८९८ ॥

पूर्वरङ्गाङ्गेषु केषुचिद्यथोचितमङ्गहाराः सवाद्यं प्रयोक्तव्या इत्याह—**मृदङ्गैरित्यादि** ॥ ८९५ ॥ ८९६ ॥ ८९७ ॥ ८९८ ॥

इति द्वात्रिंशदङ्गहारलक्षणम् ।

---

रेचकानथ वक्ष्यामश्चतुरो भरतोदितान् ॥
पादयोः करयोः कट्या ग्रीवायाश्च भवन्ति ते ॥ ८९९ ॥

अङ्गहारोपयोगिनो रेचकाल्लँक्षयितुमाह—**रेचकानथेत्यादि** ॥ ८९९ ॥

तत्र पादरेचकं लक्षयति—

पार्ष्ण्यङ्गुष्ठाग्रयोरन्तर्बहिश्च सततं गतिः ॥
नमनोन्नमनोपेता प्रोच्यते पादरेचकः ॥ ९०० ॥

**पार्ष्ण्यङ्गुष्ठाग्रयोरित्यादि । नमनोन्नमनोपेताऽन्तर्बहिश्च सततं गतिरिति ।** यदा पार्ष्णेर्नमनोपेताऽन्तर्गतिस्तदा पार्ष्णेरुन्नमनोपेता बहिर्गतिर्भवतीति द्रष्टव्यम् ॥ ९०० ॥

कररेचकं लक्षयति—

परितो भ्रमणं तूर्णं हस्तयोर्हंसपक्षयोः ॥ ९०१ ॥
यत्पर्यायेण रचितं स भवेत्कररेचकः ॥
विरलप्रसृताङ्गुष्ठाङ्गुलेस्तिर्यग्भ्रमेण चे ॥ ९०२ ॥

**परितो भ्रमणमित्यादि** । हंसपक्षयोर्हस्तयोः पर्यायेण रचितं तूर्णं परितो यद्भ्रमणमन्तर्बहिश्चेत्यर्थः । वामदक्षिणहस्तयोरेकस्मिन्हंसपक्षेऽन्तर्भ्रमणं कुर्वति तदन्यो बहिर्भ्रमणं करोति । एवं पर्यायेण क्रियते चेत्स कररेचको भवेत् ॥ ९०१ ॥ ९०२ ॥

कटीरेचकं लक्षयति—

*सर्वतो भ्रमणं कट्याः कटिरेचकमूचिरे ॥
ग्रीवाया विधुतभ्रान्तिः कथ्यते कण्ठरेचकः ॥
अङ्गहाराङ्गमप्येते जनयन्ति पृक्फलम् ॥ ९०३ ॥

---

* इदं श्लोकार्धमादर्शपुस्तकेषु 'ग्रीवाया' इत्यादिश्लोकार्धानन्तरं वर्तते तथाऽपि टीकानुसारेण प्रथमं गृहीतमत्रास्माभिः ।

---

१ ख. ग. °रङ्गेषु । २ ङ. वा । ३ च. °मध्ये तु ज° ।

**सर्वतो भ्रमणमिति** । तत्तु भ्रमरीभेदेष्वनुगतं द्रष्टव्यम् । कण्ठरेचकं लक्षयति—**ग्रीवाया इति** ॥ ९०३ ॥

**इति रेचकलक्षणम् ।**

अथ चारीणां सामान्यलक्षणमाह—

**विचित्रमङ्घ्रिजङ्घोरुकटीकर्म समं कृतम् ॥**
**चारी स्यात्करणे ङीषि चरेरिञ्प्रत्ययान्ततः ॥ ९०४ ॥**

**विचित्रमित्यादि** । *समं कृतं विचित्रमङ्घ्रिजङ्घोरुकटीकर्म चारी स्यादित्येतावत्युच्यमाने प्रत्येकमङ्घ्र्यादिकृतानां कर्मणामपि चारीत्वप्रतीतिः स्यात् । अत उक्तं समं कृतमिति । समं सह युगपदिति यावत् । एकस्मिन्कालेऽङ्घ्र्यादिभिः कृतमित्यर्थः । एवमपि लौकिके कर्मण्यतिव्याप्तिः स्यादित्युक्तं विचित्रमिति । वैचित्र्युत्पादनं नर्तन एव क्रियत इति न कुत्राप्यतिव्याप्तिः । चारीशब्दस्य व्युत्पत्तिं दर्शयति—**करणे ङीषि चरेरिञ्प्रत्ययान्तत इति** । चर गतिभक्षणयोरित्येतस्माद्गत्यर्थे वर्तमानाच्चार्यतेऽनयेति करणार्थे विवक्षित इञ्का(वपा)दिभ्य इत्यौणादिक इतिवार्तिकेनेञ्प्रत्यये सति 'चारि' इति स्थिते "कृदिकारादक्तिनो वा ङीष्वक्तव्यः" इति पक्षे ङीषि कृते चारीति रूपं सिद्धम् ॥ ९०४ ॥

चारीप्रयोग इतिकर्तव्यतामाह—

**हस्तो वाऽभिनये गत्यां चरणो यो यदेप्सितः ॥**
**तत्संपत्त्युचिता चारी कार्या तदुचिता परा ॥ ९०५ ॥**

**हस्तो वेत्यादि** । अत्र वाशब्द उपमाने । अभिनये हस्तो वा हस्त इव । गत्यां गत्यनुकारे यदा यश्चरणोऽञ्चितादिषु पादभेदेष्वीप्सितो व्यापारयितुमिष्टः । तत्संपत्त्युचिता । तस्य चरणस्य संपत्तिः स्वरूपनिष्पत्तिः । तस्या उचिता । समादिचरणसंपादनयोग्येत्यर्थः । चारी, अङ्घ्रिजङ्घोरुकटीक्रिया कार्या कर्तव्या । परा तदितरा पादादिक्रिया तदुचिता प्रथमचार्युचिता कार्या । द्वितीया चारी प्रथमचार्यनुसारिणी कर्तव्येत्यर्थः ॥ ९०५ ॥

**एवमन्योन्यनियमात्सैव व्यायाम उच्यते ॥**
**चारी च करणं खण्डो मण्डलं चेति तद्भिदाः ॥ ९०६ ॥**

**एवमन्योन्यनियमादिति** । द्वितीयादिचार्यनुसारेण तृतीयादयश्चार्यः कृताश्चेदित्यर्थः । सैव चार्येव । सेति जातिपरतयैकवचनम् । व्यायाम इत्युच्यते । तस्य व्यायामस्य भेदानाह—**चारी चेत्यादि** । तद्भिदा व्यायामभेदाः ॥ ९०६ ॥

---

* एतदादि पदत्रयमधिकम् ।

---

१ ख. ग. °पि पक्षे चा°। २ ख. ग. इञ्जका° । ज. इण्वादि° । ३ घ. च. °द्भिदा ॥९०६॥

क्रमेण तेषां स्वरूपमाह—

तत्रैकपादनिष्पाद्या चारी चार्येव कीर्तिता ॥
पादद्वयेन करणं तन्नृत्तकरणात्पृथक् ॥ १०७ ॥
करणैः स्यात्त्रिभिः खण्डो मण्डलं खण्डकैस्त्रिभिः ॥
चतुर्भिर्वा क्रमात्ताले त्र्यस्रे च चतुरस्रके ॥ १०८ ॥

**तत्रेत्यादि** । एकपादनिष्पाद्या वामेन (*वाम)दक्षिणेन वैकेन पादेन निर्वर्तितव्या (निर्वर्तयितव्या) । अत्र प्राधान्यात्पादग्रहणम् । पादादिनेत्यर्थः । चार्येव पूर्वोक्ता चार्येव चारी कीर्तिता । व्यायामभेदत्वेनोक्ता चारीति कथिता । पादद्वयेन निष्पाद्या चार्येव करणं व्यायामभेदत्वेनोक्तं करणं भवति । अत्र तलपुष्पपुटादिभिः सांकर्यशङ्कां परिहरति—**तन्नृत्तकरणात्पृथगिति** । करपादादिक्रियात्मकं नृत्तकरणम् । केवलपादादिक्रियात्मिका चारीति भेदोऽवगन्तव्य इत्यभिप्रायः । तैस्त्रिभिः करणैर्निष्पाद्या चार्येव खण्डो व्यायामभेदत्वेनोक्तः खण्डो भवेत् । तैस्त्रिभिः खण्डैस्त्र्यस्रे ताले चतुर्भिरेव खण्डकैश्चतुरस्रे ताले चेति क्रमाद्विषयव्यवस्थाया विकल्पो द्रष्टव्यः । एवं [च] त्र्यस्रे ताले चच्चत्पुटे त्रिभिः खण्डकैश्चतुरस्रे ताले चच्चत्पुटे चतुर्भिः खण्डकैर्वा क्रमान्निष्पाद्या चार्येव व्यायामभेदो मण्डलमित्युच्यत इति योजनीयम् ॥ १०७ ॥ १०८ ॥

भौमी चाऽऽकाशिकीत्येषा द्वेधा भौम्योऽत्र षोडश ॥
समपादा स्थितावर्ता शकटास्या च विच्यवा[२] ॥ १०९ ॥
अध्यर्धिका चापगतिरेलकाक्रीडिता तथा ॥
समोसरितमत्तल्ली मत्तल्ल्युत्सन्दिताऽङ्घ्रितो[३] ॥ ११० ॥
स्यन्दिताऽपस्यन्दिताख्या[४] बद्धा च जनिताभिधा ॥
ऊरूद्वृत्तेत्यथ ब्रूमः षोडशाऽऽकाशिकीरिमाः ॥ १११ ॥

**भौमीत्यादि** । एषेत्येकपादनिष्पाद्या प्रकृता चारी निर्दिश्यते । एषा चारी भौमी भूमिसंबन्धिन्याकाशिक्याकाशसंबन्धिनी चेति द्विधा । अत्राऽऽसु मध्ये भौम्यश्चार्यः षोडश । ता उद्दिशति—**समपादेत्यादि** ॥ १०९ ॥ ११० ॥ १११ ॥

अथाऽऽकाशिकीरुद्दिशति—

अतिक्रान्ताऽप्यपक्रान्ता पार्श्वक्रान्ता मृगप्लुता ॥
ऊर्ध्वजानुरलाता च सूची नूपुरपादिका ॥ ११२ ॥

---

* एतच्चिह्नान्तर्गतमधिकम् ।

---

१ ख. °वस्थया क° । ग. °वस्थाया क° । २ ङ. विच्युता । ३ ङ. °ल्युत्सण्डिताऽ° । ४ ङ. °ता । स्पन्दितापस्पन्दि° ।

दोलापादा दण्डपादा विद्युद्भ्रान्ता भ्रमर्यपि ॥
भुजंगत्रासिताऽऽक्षिप्ता विद्धोद्वृत्तेति कीर्तिताः ॥ ९१३ ॥
भरताभिमताश्चार्यो द्वात्रिंशन्मिलितास्तु ताः ॥
देशीप्रसिद्धाः सन्त्यन्यास्ताः संप्रत्यभिदध्महे ॥ ९१४ ॥

अतिक्रान्तेत्यादि । एवं द्वेधा मार्गचार्यो द्वात्रिंशत् ॥ ९१२ ॥ ९१३ ॥ ॥ ९१४ ॥

रथचक्रा परावृत्ततला नूपुरविद्धिका ॥ ९१५ ॥
तिर्यङ्मुखा मराला च करिहस्ता कुलीरिका ॥
विश्लिष्टा कातारा पार्ष्णिरेचिता[1]ऽप्यूरुताडिता ॥ ९१६ ॥
ऊरुवेणी तलोद्वृत्ता हरिणत्रासिका परा ॥
अर्धमण्डलिका[2] तिर्यक्कुञ्चिता च मदालसा ॥ ९१७ ॥
संचारितोत्कुञ्चिता च स्तम्भक्रीडनिका ततः ॥
चारी लङ्घितजङ्घाख्या स्फुरिता[3]ऽप्यपकुञ्चिता ॥९१८ ॥
अपि संघट्टिता खुत्ता[4] स्वस्तिका तलदर्शिनी ॥
पुराट्यर्धपुराटी च सरिका स्फुरिका[5] ततः ॥ ९१९ ॥
निकुट्ट(ट्टि)[6] का लताक्षेपा[7]ऽप्युडुस्खलितिका[8] परा ॥
समस्खलितिका भौम्यः पञ्चत्रिंशदितीरिताः ॥ ९२० ॥

अथ देशीचारीषु भौमीरुद्दिशति—रथचक्रेत्यादि ॥ ९१५ ॥ ९१६ ॥९१७॥ ॥ ९१८ ॥ ९१९ ॥ ९२० ॥

विद्युद्भ्रान्ता पुरःक्षेपा विक्षेपा हरिणप्लुता ॥
अपक्षेपा च डमरी दण्डपादाङ्घ्रिताडिता ॥ ९२१ ॥
जङ्घालङ्घनिकाऽलाता जङ्घावर्ता च वेष्टनम् ॥
उद्वेष्टनमथोत्क्षेपः पृष्ठोत्क्षेपश्च सूचिका ॥ ९२२ ॥
विद्धा प्रावृत्त(त)मुल्लोल[9] इत्यत्रैकोनविंशतिः ॥
व्योमगाः स्युरुभयास्तु चतुष्पञ्चाशदूचिरे ॥ ९२३ ॥

आकाशिकीरुद्दिशति—विद्युद्भ्रान्तेत्यादि। एता अप्युभयाश्चतुष्पञ्चाशत् ॥९२१॥ ॥ ९२२ ॥ ९२३ ॥

---

१ ङ. 'सिता प' । २ च. 'रिता कुञ्चि' । ३ ख. ग. ङ. 'ताऽप्युप' । ४ ङ. स्तुत्ता । ५ च. स्फुरिता । ६ ख. ग. घ. ङ. निकुट्टको । ७ घ. ङ. लताक्षेपोऽप्युडु' । च. लताक्षेपोऽप्यु' । ८ ख. ग. 'पाऽप्युडु' । ९ ख. ग. घ. च. 'मुल्लाल ।

**मार्गदेशीगताश्चार्यः षडशीतिरिमा मताः ॥**
**लक्षणानि क्रमात्तासां चारीणामभिदध्महे ॥ ९२४ ॥**

सर्वासां प्रत्येकं लक्षणान्यभिधातुमाह—**लक्षणानीति** ॥ ९२४ ॥

तत्र समपादां लक्षयति—

**निरन्तरौ समनखौ पादौ कृत्वा स्थितो यदा ॥ ९२५ ॥**
**[1]स्थानेन समपादेन समपादा तदोदिता ॥**
**प्रचारयोग्यतामात्राच्चारी स्थानेऽप्यसौ मता ॥ ९२६ ॥**

**निरन्तरावित्यादि** । यदा (*प्रथमं) पादौ निरन्तरौ परस्परं श्लिष्टौ । समनखौ समा नखा ययोस्तौ । समाग्रपार्ष्णिभागावित्यर्थः । प्रथमं तादृशौ कृत्वा समपादेन स्थानेन स्थित[2]श्चेत् । पादयोर्वितस्त्यन्तरस्थित्या समपादं नाम स्थानकं वक्ष्यते । तत्र वितस्तिर्नाम देशाश्रयः परिमाणविशेषो द्वादशाङ्गुलात्मकः । यथोक्तं—वितस्तिर्द्वादशाङ्गुल इति । तेन समपादस्थानकेन यदा स्थितो भवति तदा समपादा नाम चार्युदिता । अत्र स्थित इति पुंलिङ्गनिर्देशो नर्तकपरत्वे नर्तक्या अप्युपलक्षणं द्रष्टव्यम् । अत्र कृत्वा स्थित इति क्रियाद्वयश्रवणात्पूर्वं पादयोर्नैरन्तर्यक्रियाऽनन्तरं समपादस्थानस्थितिक्रियेति पौर्वापर्यं द्रष्टव्यम् । **प्रचारेत्यादि** । (+यद्यपि) समपादाया गतिरूपताभावेऽपि प्रचारयोग्यतामात्रात्प्रचारस्य गतेर्योग्यतामात्राच्चारीत्युपचर्यत इत्यर्थः । वस्तुतस्तु स्थाने स्थानकेऽप्यसौ समपादा मता । रूपद्वयमप्यस्यां संभवतीत्यर्थः ॥ ९२५ ॥ ९२६ ॥

**इति समपादा ।**

अथ स्थितावर्तां लक्षयति—

**चरणान्तरपार्श्वं चेद्गत्वाऽग्रतलसंचरः ॥**
**अन्तर्जानुः स्वस्तिकत्वं प्राप्तः पादस्तथेतरः ॥**
**विश्लिष्य पार्श्वं संनीतः स्थितावर्ता तदोच्यते ॥ ९२७ ॥**

**चरणान्तरेत्यादि** । अग्रतलसंचरः पादः । चरणान्तरपार्श्वम् । अग्रतलसंचाराद-न्यश्चरणश्चरणान्तरम् । तस्य पार्श्वं बहिर्भागप्रदेशं गत्वाऽन्तर्जानुः स्वस्तिकत्वं प्राप्तश्चेदिति । अनेन चरणान्तरस्य पार्ष्णिभागेन गमनं गम्यपार्श्वदेशावधिश्च गम्यते । **तथेतर इति** । इतरः स्थितः पादः । **तथेति** । अग्रतलसंचरी भूत्वेत्यर्थः । विश्लिष्य स्वस्तिकं कृत्वा । **पार्श्वं नीत इति** । चरणान्तराङ्गुल्यग्रभा[3]गेण स्वकीयं पार्श्वं नीतश्चेत् । तदा स्थि[4]तावर्ता नाम चारी भवेत् ॥ ९२७ ॥

**इति स्थितावर्ता ।**

---

* इदं पदमधिकम् । + इदं पदमधिकम् ।

---

१ ख. ग. च. स्थिरौ य° । घ. स्थितौ य° । २ ख. ग °तयोश्चे° । ३ ङ. °भावेन स्व° । ४ ख. ग. °ता वर्तमाना चा° ।

यत्र धृत्वा पूर्वकायं पादोऽग्रतलसंचरः ॥ ९२८ ॥
प्रसार्योद्राहितमुरः शकटास्या तदा भवेत् ॥
आस्यं क्षेप्यं हि शकटं चारीमेनामुपाश्रितैः ॥ ९२९ ॥

शकटास्यायाम्—आस्यं क्षेप्यमिति। क्षेप्यमित्यास्यमित्यस्य *प्रतिपदम्। अनेनास्या अन्वर्थता दर्शिता भवति। एवं सर्वत्र चारीणां प्रायेणान्वर्थता द्रष्टव्या ॥९२८॥९२९॥

इति शकटास्या।

विच्युत्य समपादायाः पादौ यदि तेलाग्रतः ॥
निकुट्टयेतां धरणीमुच्यते विच्यवा तदा ॥ ९३० ॥

इति विच्यवा।

दक्षिणाङ्घ्रेः पार्ष्णिदेशे वामः पादो निधीयते ॥
दक्षिणस्त्वपसृत्य स्वे पार्श्वे त्र्यस्रतया स्थितः ॥ ९३१ ॥
सार्धतालान्तरत्वेन दक्षिणोऽप्येवमेव चेत् ॥
वामपार्ष्णौ स च त्र्यस्रो भवेदध्यर्धिका तदा ॥ ९३२ ॥

इत्यध्यर्धिका।

तालमात्रं पुरः सृत्वा द्वितालं पृष्ठतो गते ॥
दक्षिणेऽङ्घ्रौ समं पादौ किंचिदुत्प्लुतिपूर्वकम् ॥ ९३३ ॥
उपसृत्यापसर्पेतामपसृत्योपसर्पतः ॥
यत्र सत्रासगत्यादौ सैषा चाषगतिर्मता ॥ ९३४ ॥

इति चाषगतिः।

किंचिदुत्प्लुत्य चरणौ यत्राग्रतलसंचरौ ॥
पर्यायशो निपततः सैलकाक्रीडिता मता ॥ ९३५ ॥

॥ ९२९ ॥ ९३० ॥ ९३१ ॥ ९३२ ॥ ९३३ ॥ ९३४ ॥ ९३५ ॥

इत्येलकाक्रीडिता।

अभ्यन्तरेऽङ्घ्रेरन्यस्य पादेऽग्रतलसंचरे ॥
सजङ्घास्वस्तिकेऽथान्यपादेऽग्रतलसंचरे ॥ ९३६ ॥

सा(स)मोसरितमत्तल्लीति संज्ञायां समप्रसृतेत्यत्र समोसरितेति प्राकृतपदं मुनिना प्रयुक्तं द्रष्टव्यम्। मत्तचेष्टितत्वान्मत्तल्लीति संज्ञा द्रष्टव्या ॥ ९३६ ॥

---

* प्रतिशब्दः पर्याय इत्यर्थः।

---

१ घ. ङ. यत्रोद्धृत्ता पूर्वकायं यदाऽग्रतलसंचरम्। २ ङ. तदायतः। ३ ङ. विच्युता। ४ ङ. विच्युता। ५ ग. घ. °ताली पृ°। ६ च. समौ। ७ ग. घ. °सृप्याप°।

कृतेऽङ्घ्र्योर्घूर्णतोर्यत्रापसृतिश्चोपसर्पणम् ॥
समोसरितमत्तल्ली सा भवेन्मध्यमे मदे ॥ ९३७ ॥
इति समोसरितमत्तल्ली ।
भूमिश्लिष्टाखिलतलौ जङ्घास्वस्तिकसंयुतौ ॥ ९३८ ॥
अर्धत्र्यस्रौ यदा पादौ घूर्णन्तौ वोपसर्पतः ॥
यद्वाऽपसर्पतः सा स्यान्मत्तल्ली तरुणे मदे ॥ ९३९ ॥
इति मत्तल्ली ।
कनिष्ठाङ्गुलिभागेनाङ्गुष्ठभागेन च क्रमात् ॥
रेचकस्यानुकारेण शनैरङ्घ्रिर्गतागतम् ॥ ९४० ॥
कुरुते यत्र सा चारी बुधैरुत्सन्दितोदिता ॥
रेचितं नृत्तहस्तं च केचिदत्र प्रचक्षते ॥ ९४१ ॥
इत्युत्सन्दिता ।
समाङ्घ्रेरग्रपृष्ठाभ्यामन्योऽग्रतलसंचरः ॥
निघृष्टश्चरणो यत्र क्रमात्तामड्डितां विदुः ॥ ९४२ ॥
इत्यड्डिता ।
निषण्णोरुः समो वामो दक्षिणोऽङ्घ्रिः प्रसारितः ॥
पञ्चतालान्तरं तिर्यग्यस्यां सा स्यन्दिता मता ॥ ९४३ ॥
इति स्यन्दिता ।
अङ्घ्रिचारविपर्यासात्सैवापस्यन्दिता मता ॥ ९४४ ॥
इत्यपस्यन्दिता ।
ऊरुद्वयस्य वलनं जङ्घास्वस्तिकसंयुतम् ॥
भङ्क्त्वा वा स्वस्तिकं पादतलाग्रे मण्डलभ्रमम् ॥
कृत्वा पार्श्वे गते स्वं स्वं यत्र बद्धेति सा मता ॥ ९४५ ॥
॥ ९३७ ॥ ९३८ ॥ ९३९ ॥ ९४० ॥ ९४१ ॥ ९४२ ॥ ९४३ ॥ ९४४ ॥
॥ ९४५ ॥

इति बद्धा ।
चारी सा जनिता यस्यां पादोऽग्रतलसंचरः ॥ ९४६ ॥
मुष्टिर्वक्षसि हस्तोऽन्यो यथाशोभं प्रवर्तते ॥
अङ्घ्रिक्रिया प्रधानं स्यादितिकर्तव्यतेतरा ॥ ९४७ ॥
इति जनिता ।

---

१ ग. ङ. °स्य चल° ।

पार्ष्णिः पादस्य चेदग्रतलसंचरसंज्ञितः ॥
अन्याङ्घ्रिपृष्ठाभिमुखी विपर्यासोऽथवा भवेत् ॥ ९४८ ॥
अभ्यन्यजङ्घं वलिता जङ्घा चेन्नतजानुका ॥
ऊरूद्वृत्ता तदा चारी लज्जेर्ष्यादौ नियुज्यते ॥ ९४९ ॥

जनितायां मुष्टिर्वक्षसीत्युक्तं तल्लक्षणत्वेन न ग्राह्यमित्याह—**अङ्घ्रिक्रियेति** । अन्यथा चारीकरणयोः सांकर्यं स्यादिति भावः । एवमन्यत्रापि चारीषु करव्यापारवचने[1] द्रष्टव्यम् ॥ ९४६ ॥ ९४७ ॥ ९४८ ॥ ९४९ ॥

इत्यूरूद्वृत्ता ।

भौमचारीणां साधारणविनियोगमाह—

नियुद्धे चाङ्गहारेषु नाट्ये चैताः प्रतिष्ठिताः ॥
अनादिवेदमूलेन नाट्यवेदेन कीर्तिताः ॥ ९५० ॥

**नियुद्धे चेत्यादि** । नियुद्धं मुष्टियुद्धम् । अङ्गहार इत्यने(पदे)न नृत्तं गृह्यते । नाट्ये चेत्यत्र चकारेण नृत्यमपि गृह्यत इत्यवगन्तव्यम् । नियुद्धादिषु यथोचितं भौम्यश्चार्यः प्रयोक्तव्या इत्यर्थः । एतासां मार्गत्वं दर्शयति—**अनादिवेदमूलेनेति** । अनादयो वेदा ऋग्वेदादयश्चत्वारः ॥ ९५० ॥

इति षोडश भौमचार्यः ।

---

अथाऽऽकाशिक्यः ।

गुल्फक्षेत्रेऽन्यपादस्योद्धृत्याङ्घ्रिं[2] कुञ्चितं पुरः ॥
किंचित्प्रसार्य चाऽऽक्षिप्य यथाप्रकृति लोकवत् ॥ ९५१ ॥

अथाऽऽकाशिकीनां लक्षणानि ग्रन्थत एव सुबोधानि ॥ ९५१ ॥

चतुस्तालाद्यन्तरेण ततोऽग्रेण निपातयेत् ॥
यत्र चारीमतिक्रान्तां निःशङ्कस्तामकीर्तयत् ॥ ९५२ ॥

इत्यतिक्रान्ता ।

बद्धां विधाय चारीं चेदुद्धृत्याङ्घ्रिं च कुञ्चितम् ॥
पार्श्वे विनिक्षिपेच्चारीमपक्रान्तां तदाऽऽदिशेत् ॥ ९५३ ॥

इत्यपक्रान्ता ।

नीत्वोपरि स्वपार्श्वेन कुञ्चितं चरणं ततः ॥
पार्ष्ण्या चेत्पातयेद्भूमौ पार्श्वक्रान्ता तदोच्यते ॥ ९५४ ॥

॥ ९५२ ॥ ९५३ ॥ ९५४ ॥

---

१ ख. ग. 'करणव्या' । २ क. 'स्योद्धृत्या' ।

सा पार्श्वदण्डपादेति प्रसिद्धा लोकवर्त्मनि ॥ ९५५ ॥
अन्योरुक्षेत्रपर्यन्तमुत्क्षिप्य चरणं ततः ॥
उद्घट्टितं भुवि न्यस्येदस्यामित्यपरे जगुः ॥ ९५६ ॥

इति पार्श्वक्रान्ता ।

कुञ्चितं पादमुत्क्षिप्योत्प्लुत्य भूमौ निपात्य तम् ॥
अन्याञ्चिताङ्घ्रिजङ्घां च पश्चाद्देशे क्षिपेद्यदा ॥
तदा मृगप्लुता ज्ञेया सा विदूषककर्तृका ॥ ९५७ ॥

इति मृगप्लुता ।

कुञ्चितोत्क्षिप्तपादस्य जानुस्तनसमं यदा ॥
न्यस्य स्तब्धीकृतोऽन्योऽङ्घ्रिरूर्ध्वजानुस्तदा भवेत् ॥ ९५८ ॥

इत्यूर्ध्वजानुः ।

पृष्ठप्रसारिताङ्घ्रेश्चेदन्योर्वभिमुखं तलम् ॥
कृत्वा पार्ष्णिः स्वपार्श्वे क्ष्मान्यस्ताऽलाता तदोदिता ॥ ९५९ ॥

इत्यलाता ।

उत्क्षिप्य कुञ्चितं पादं जङ्घामस्य प्रसार्य च ॥ ९६० ॥
जान्वन्तां वोरुपर्यन्तामग्रयोगे[1] नतं भुवि ॥
चरणं पातयेद्यस्यां सा सूचीति निगद्यते ॥ ९६१ ॥

इति सूची ।

पश्चान्नीत्वाऽञ्चितं पादं तस्य पार्ष्ण्या स्फिजं स्पृशेत् ॥
तं ततोऽञ्चितजङ्घं च भूमावग्रतलेन चेत् ॥
विपातयेत्तदा चारी प्रोक्ता नूपुरपादिका ॥ ९६२ ॥

इति नूपुरपादिका ।

पादं कुञ्चितमुद्धृत्य दोलयित्वा च पार्श्वयोः ॥
न्यस्येत्पार्ष्ण्या स्वपार्श्वे चेद्दोलापादा तदोच्यते ॥ ९६३ ॥

इति दोलापादा ।

नूपुरश्चरणोऽन्यस्य पार्ष्णिदेशे विधाय चेत् ॥ ९६४ ॥

॥ ९५५ ॥ ९५६ ॥ ९५७ ॥ ९५८ ॥ ९५९ ॥ ९६० ॥ ९६१ ॥ ९६२ ॥
॥ ९६३ ॥ ९६४ ॥

---

१ ग. °योगन° ।

स्वदेहक्षेत्राभिमुखं जान्वग्रत्वेन[1] वेगतः ॥
अग्रे प्रसार्यते चारी दण्डपादा तदोदिता ॥ ९६५ ॥
इति दण्डपादा ।
पृष्ठतो वलितः स्पृष्ट्वा शिरो भ्रान्त्वा च सर्वतः ॥
प्रसृतश्चरणो यत्र विद्युद्भ्रान्ता भवेदसौ ॥ ९६६ ॥
इति विद्युद्भ्रान्ता ।
अतिक्रान्तागतं पादं त्र्यस्रस्योरोविवर्तनम् ॥
कृत्वा पादान्तरतल[2]भ्रमेण भ्राम्यते तनुः ॥
यत्र सा भ्रमरी चारी शार्ङ्गदेवेन कीर्तिता ॥ ९६७ ॥
इति भ्रमरी ।
अन्योरुमूलक्षेत्रान्तं पादमुत्क्षिप्य कुञ्चितम् ॥
नितम्बाभिमुखी पार्ष्णिः कुर्याज्जानु स्वपार्श्वगम् ॥ ९६८ ॥
यत्रोत्तानं पादतलं कटीजानुविवर्तनात् ॥
भुजंगत्रासिता सा स्याद्भुजंगत्राससूचिका ॥ ९६९ ॥
इति भुजंगत्रासिता ।
तालत्रयान्तरोत्क्षिप्तं कुञ्चितं पादमानयेत् ॥ ९७० ॥
पार्श्वान्तरं ततो जङ्घां स्वस्तिकीकृत्य पातयेत् ॥
धरण्यां पार्ष्णिभागेन यत्राऽऽक्षिप्तामम्ं विदुः ॥ ९७१ ॥
इत्याक्षिप्ता ।
विश्लिष्टजङ्घयोः कृत्वा स्वस्तिकं तस्य कुञ्चितः ॥
पादः प्रसारितो वक्रः स्वपार्श्वस्थोऽथ पात्यते ॥
पार्ष्ण्या पार्ष्ण्यन्तरक्षेत्रे यत्राऽऽविद्धा भवत्यसौ ॥ ९७२ ॥
इत्याविद्धा ।
आविद्धापादमन्योरुप्रदेशस्था[3]स्तुपार्ष्णिकम् ॥ ९७३ ॥
कृत्वोत्प्लुत्य भ्रमरकं दत्त्वा यत्र निपातयेत् ॥
तथाऽन्यं पादमुद्धृत्य सोद्वृत्ताशेषरूपिणी ॥ ९७४ ॥

॥ ९६५ ॥ ९६६ ॥ ९६७ ॥ ९६८ ॥ ९६९ ॥ ९७० ॥ ९७१ ॥ ९७२ ॥ ॥ ९७३ ॥ ९७४ ॥

इत्युद्वृत्ता ।
इति षोडशाऽऽकाशिक्यश्चार्यः ।

---

१ च. °न्वग्रं तेन । २ च. °तलं क्रमे° । ३ ख. ग. °शस्थास्युपा° । ङ. °शस्थं स्वपा° ।

**ललिताङ्गक्रियासाध्याश्चार्यो युद्धनियुद्धयोः ॥**
**नृत्ते नाट्ये गतौ चैताः प्रयोक्तव्या मनीषिभिः ॥ ९७५ ॥**

आकाशिकीनामपि साधारणं विनियोगं दर्शयति—**युद्धनियुद्धयोरित्यादि ।** ललिताङ्गक्रियासाध्या इति तासां द्विविधानामपि स्वरूपकथनम्। अत्र गताविति नाट्यात्पृथगुपादानाद्धस्ताभिनयवर्जितं गमनमात्रानुकरणं गम्यते ॥ ९७५ ॥

हस्ताभिनयचार्योर्गुणप्रधानं (न)भावं विषयव्यवस्थया दर्शयति—

**प्रधानं यो यदा यत्र हस्तः पादोऽथवा भवेत् ॥**
**सोऽग्रे तदनुगोऽन्यः स्यात्साम्ये तु समकालता ॥ ९७६ ॥**

**प्रधानमित्यादि ।** यत्र नाट्ये वा नृत्ते वा यदा नाट्येऽर्थवशाद्गत्यनुकरणावसरे नृत्ते वा प्रयोगवशाद्धस्तक्रियावसरे यो हस्तः पादो वा प्रधानं भवेत् । **सोऽग्र इति ।** **स** हस्तः पादो वाऽग्रे प्रथमं प्रयोक्तव्य इत्यर्थः । अन्यः प्रथमप्रयुक्तादन्यस्तदनुगस्तस्य प्रथमप्रयुक्तस्यानुगोऽनुसारी भवेत् । **साम्ये त्विति ।** नाट्ये वा नृत्ते वा हस्तपादयोः समप्राधान्ये विषयभूत इत्यर्थः । समकालता हस्तपादयोरेककालता हस्तपादयोरेककालप्रयोज्यत्वमित्यर्थः ॥ ९७६ ॥

**यतः पादस्ततो हस्तो यतो हस्तस्ततस्त्रिकः ॥**
**चरणानुचराण्याहुरङ्गोपाङ्गानि सूरयः ॥ ९७७ ॥**
**एवं चारीप्रधानत्वे स्यादङ्गविनियोजनम् ॥**
**प्राधान्ये हस्तकानां तु हस्तमङ्गान्युपासते ॥ ९७८ ॥**

हस्तपादयोरेकतरप्राधान्ये तदितरेषामङ्गभूतानां प्रवृत्तिनियममाह—**यतः पाद इत्यादि** ॥ ९७७ ॥ ९७८ ॥

करक्षेत्राणां त्रयोदशानामुक्तत्वेऽपि तेषु कट्या एव प्राधान्यं दर्शयितुं सदृष्टान्तमाह—

**चारं चारं यथा चार्यां चरणः श्रयते महीम् ॥**
**कारं कारं करस्तद्वद्विश्राम्यति कटीतटे ॥ ९७९ ॥**

**चारं चारमिति ।** चरणश्चार्यां चारं चारं चरित्वा चरित्वा यथा महीं श्रयते । तत्र स्थानान्तरस्यानुक्तत्वादसंभवाच्चेति भावः। तद्वत्तथा करः कारं कारं कृत्वा कृत्वा कटीतटे विश्राम्यतीति । पार्श्वद्वयादिषूक्तेषु स्थानान्तरेषु सत्स्वपि कटीतटे विश्राम्यतीति वचनं प्राचुर्याभिप्रायेणेति मन्तव्यम् ॥ ९७९ ॥

---

१ ख. ग. °वस्थाया ।

तत्र कट्याश्रयणे नाट्यनृत्तयोर्व्यवस्थया हस्तनियममाह—

अर्धचन्द्रः करो नाट्ये संश्रयेत कटीतटम् ॥
पक्षवञ्चितको नृत्ये पक्षप्रद्योतकोऽथवा ॥ ९८० ॥

अर्धचन्द्र इत्यादि । एतासामपि मार्गत्वं नाट्यवेदोक्तत्वेनेति पूर्वोक्तमनुसंधेयम् ॥ ९८० ॥

इति द्वात्रिंशच्चारीलक्षणम् ।

---

चतुरस्रं समाश्रित्य संलग्नौ चेत्प्रसर्पतः ॥
पुरतः पृष्ठतो वाऽङ्घ्री रथचक्रा तदोच्यते ॥ ९८१ ॥

इति रथचक्रा ।

पश्चादुत्तानिततलश्चरणः प्रसृतो बहिः ॥
यस्यां परावृत्ततला शार्ङ्गदेवेन सोदिता ॥ ९८२ ॥

इति परावृत्ततला ।

स्थित्वा स्वस्तिकबन्धेन पार्ष्ण्योः प्रपदयोस्तथा ॥
रेचितौ चरणौ यत्र सोक्ता नूपुरविद्धिका ॥ ९८३ ॥

इति नूपुरविद्धा ।

वर्धमाने स्थितौ स्थाने वामदक्षिणतो यदा ॥
सरतोद्रुतमानेन पादौ तिर्यङ्मुखा तदा ॥ ९८४ ॥

अथ देशीचारि(री)षु प्रथमोद्दिष्टायां रथचक्रायां चतुरस्रं समाश्रित्य *भूलग्नौ चेदित्युक्तम् । अत्र चतुरस्रशब्देन वक्ष्यमाणदेशीस्थानकमुच्यते । न तु वैष्णवस्थानकोक्ताङ्गसंनिवेशविशेषः । प्रसिद्धाप्रसिद्धयोः प्रसिद्धस्यैव ग्राह्यत्वात् । देशीत्वसंबन्धाच्च । पादयोर्भूलग्नत्वेन प्रसर्पणमेव लोके निःसरणमित्युच्यते । परावृत्ततलादीनां लक्षणानि तु ग्रन्थत एव सुबोधानि । तत्र तत्रोक्तस्थानकानां लक्षणं तत्तल्लक्षणादवगन्तव्यम् । रथचक्रादीनां पञ्चत्रिंशच्चारीणां भौमीत्वं प्रायेण भूतलसंबन्धावपादाये(नपायादि)त्यवगन्तव्यम् ॥ ९८१ ॥ ९८२ ॥ ९८३ ॥ ९८४ ॥

इति तिर्यङ्मुखा ।

---

* अत्र सर्वेष्वपि मूलादर्शपुस्तकेषु 'संलग्नौ' इति पाठो वर्तते । तदनुरोधेनायमेतदनुसारेण स वाऽन्यथा कल्पनीयः ।

---

१ ख. ग. ङ. घ. पक्षप्रद्योतको नृत्ये पक्षवञ्चितकोऽथवा । २ च. नूपुरविद्धिका ।

नन्द्यावर्तस्थितौ पादौ पार्ष्णिपादाग्ररेचितौ ॥
पुरः प्रसारितौ यस्यां सा मरालाऽभिधीयते ॥ ९८५ ॥
इति मराला[1] ।
संहतस्थानके स्थित्वा पार्श्वाभ्यां घर्षतः क्षितिम् ॥
चरणौ यत्र सा चारी करिहस्ता प्रकीर्तिता ॥ ९८६ ॥
इति करिहस्ता ।
नन्द्यावर्तस्थयोरङ्घ्र्योस्तिर्यक्सृत्वा कुलीरिका ॥
इति कुलीरिका ।
पार्ष्णिविद्धस्थितौ पादौ चेद्विश्लिष्योपसर्पतः ॥
यद्वाऽपसर्पतः प्रोक्ता सा विश्लिष्टाभिधा बुधैः ॥ ९८७ ॥
इति विश्लिष्टा ।
नन्द्यावर्तस्थपादाभ्यां पश्चात्सृत्वा तु कातरा ॥
इति कातरा ।
पार्ष्णिपार्श्वगते स्थाने स्थित्वा चेद्रेचिता कृता ॥
पार्ष्णिस्तदोदिता चारी निष्णातैः पार्ष्णिरेचिता ॥ ९८८ ॥
इति पार्ष्णिरेचिता ।
एकपादे स्थितः स्थाने भूस्थेन चरणेन चेत् ॥
ऊरुं ताडयति प्रोक्ता तदा चार्यूरुताडिता ॥ ९८९ ॥
इत्यूरुताडिता ।
ऊरुस्थस्वस्तिकाकारावङ्घ्री सं[3]घर्षतो भुवम् ॥
पार्श्वाभ्यां यत्र तामाहुरूरु[2]वेणीं मनीषिणः ॥ ९९० ॥
इत्यूरुवेणी ।
अङ्गुलीपृष्ठभागेन पुरतः सरतो द्रुतम् ॥
प्रपदे यत्र सा चारी तलोद्वृत्ता मता सताम् ॥ ९९१ ॥
इति तलोद्वृत्ता ।
कुञ्चिते स्वस्तिकीकृत्य वलितान्ते तले यदा ॥
अङ्घ्र्योरुत्प्लुत्य निपतेद्धरिणत्रा[4]सिका तदा ॥ ९९२ ॥
॥ ९८५ ॥ ९८६ ॥ ९८७ ॥ ९८८ ॥ ९८९ ॥ ९९० ॥ ९९१ ॥ ९९२ ॥
इति हरिणत्रा[5]सिका ।

---

१ ख. °ला । हसंतिस्था° । २ घ. च. ऊरू । ३ घ. संकर्षतो । च. संचरतो । ४ च. °सिता त° । ५ च. °सिता । भू° ।

भूमिघृष्ट्या बहिर्नीतावावर्तेते शनैः क्रमात् ॥
चरणौ यत्र तामाहुरर्धमण्डलिकां बुधाः ॥ ९९३ ॥

इत्यर्धमण्डलिका ।

यत्राऽऽकुञ्च्य तिरश्चीनं चरणं प्रक्षिपेन्मुहुः ॥
तां तिर्यक्कुञ्चितां चारीमाह श्रीकरणेश्वरः ॥ ९९४ ॥

इति तिर्यक्कुञ्चिता ।

ईतस्ततश्च[1] चरणौ स्थापयेत [2]विसंस्थुलौ ॥
मत्तवद्यत्र तामाहुश्चारीं धीरा मदालसाम् ॥ ९९५ ॥

इति मदालसा ।

आकुञ्चितोऽङ्घ्रिरुत्क्षिप्योत्क्षिप्यान्येनाङ्घ्रिणा यदा ॥
युज्यतेऽन्यस्तु संसर्पेत्तिर्यक्संचारिता तदा ॥ ९९६ ॥

इति तिर्यक्सं(इति सं)चारिता ।

उत्क्षिप्य कुञ्चितौ पादौ न्यस्येदेकैकमग्रतः ॥
यस्यां सोत्कुञ्चिता चारी प्रोक्ता सोढलसूनुना ॥ ९९७ ॥

इत्युत्कुञ्चिता ।

तिर्यक्प्रसारितैकाङ्घ्रि पार्श्वमन्यत्तलेन चेत् ॥
मुहुः संयोजयेदुक्ता स्तम्भक्रीडनिका तदा ॥ ९९८ ॥

इति स्तम्भक्रीडनिका ।

स्थानेऽङ्घ्रिः खण्डसूच्याख्ये तिष्ठन्नाकृष्य वेगतः ॥
लङ्घ्यतेऽन्याङ्घ्रिणा यत्र सोक्ता लङ्घितजङ्घिका ॥ ९९९ ॥

इति लङ्घितजङ्घिका ।

[3]स्फुरिताऽग्रे सृतौ वेगाद्भूस्पृशो[4]ः पादपार्श्वयोः ॥

इति स्फुरिता ।

क्रमादाकुञ्चिताङ्घ्रिभ्यां पश्चाद्गत्याऽपकुञ्चिता ॥ १००० ॥

इत्यपकुञ्चिता ।

स्थाने विषमसूच्याख्ये स्थित्वोत्प्लुत्य पतन्भुवि ॥
अङ्घ्री संघट्टयेद्यत्र सोक्ता संघट्टिताभिधा ॥ १००१ ॥

॥ ९९३ ॥ ९९४ ॥ ९९५ ॥ ९९६ ॥ ९९७ ॥ ९९८ ॥९९९॥ १००० ॥
॥ १००१ ॥

इति संघट्टिता ।

---

१ ख. ग. घ. ङ. इतश्चेत°। २ च. विसंस्थितौ । ३ च. कुञ्चिताग्रे । ४ ङ. °शोः पार्श्वयोर्यदि । इ° ।

धरण्यां चरणाग्रेण घातः खुत्ता निगद्यते ॥

इति खुत्ता ।

चरणः स्वस्तिकाकारकारितः स्वस्तिका[1] भवेत् ॥ १००२ ॥

इति स्वस्तिका[2] ।

यत्राङ्घ्री संहतस्थाने स्थित्वा तिर्यक्पृथक्कृतौ ॥

स्पृशतो बाह्यपार्श्वाभ्यां भुवं सा तलदर्शिनी ॥ १००३ ॥

इति तलदर्शिनी ।

निकुट्टनं[3] मिथोऽङ्घ्रिभ्यामुद्धृताभ्यां पुराटिका ॥

इति पुराटिका ।

उद्धृतेन निकुट्टेन चरणेन निकुट्टनम् ॥

उद्धृतस्यान्यपादस्य यत्र साऽर्धपुराटिका ॥ १००४ ॥

इत्यर्धपुराटिका ।

चरणोऽग्रे सरत्येको यत्र सा सैरिका[4] मता ॥ १००५ ॥

इति सैरिका[5] ।

पुरःसरणमङ्घ्रिभ्यां समाभ्यां स्फुरिका भवेत् ॥

इति स्फुरिका ।

स्थितिस्तु चरणाग्रेण कुञ्चितेन निकुट्टिका[6] ॥ १००६ ॥

इति निकुट्टिका ।

पश्चादन्यस्य पुरस्तं च प्रसार्य चरणं यदि ॥

निकुट्टयेद्ध्रुवं तेन लताक्षेपस्त(पा त?)दोदितः(ता?)॥ १००७ ॥

इति लताक्षेपः(पा?) ।

स्खलिते चरणे तिर्यगड्ड(गुडु?)स्खालितिका भवेत् ॥ १००८ ॥

इत्यड्ड(त्युडु?)स्खलितिका ।

पुरतः पृष्ठतस्तिर्यक्चरणौ युगपद्यदा ॥

स्खलतः[8] प्रोच्यते चारी समस्खलितिका तदा ॥ १००९ ॥

॥१००२॥१००३॥१००४॥१००५॥१००६॥१००७॥ १००८॥ १००९॥

इति समस्खलितिका ।

इति पञ्चत्रिंशद्भौमचार्यः ।

---

१ ख. ग. घ. ङ. स्वस्तिको । २ ख. ग. घ. ङ. स्वस्तिकः । ३ ग. 'कुट्टनान्मिथोऽ'। घ. ङ. 'कुट्टना मि' । ४ ख. ग. सारिका । ५ ख. ग. सारिका । ६ ख. ग. घ. निकुट्टकः । ङ. निकुट्टका । ७ ख. ग. निकुट्टकम् । घ. निकुट्टकः । ८ ग. 'स्खलति' ।

यस्यां पुरोऽङ्घ्रिमुत्क्षिप्य ललाटस्योपरि द्रुतम् ॥
भ्रामयित्वा भुवि न्यस्येद्विद्युद्भ्रान्ताममूं विदुः ॥ १०१० ॥

विद्युद्भ्रान्तादीनामेक(को)[न]विंशतिचारीणामाकाशिकीत्वमाकाशे व्यापारप्राचुर्यादित्यवगन्तव्यम् ॥ १०१० ॥

इति विद्युद्भ्रान्ता ।

अङ्घ्रिं कुञ्चितमुत्क्षिप्य पुरो विस्तार्य वेगतः ॥
विन्यसेदवनौ यत्र पुरःक्षेपा भवेदसौ ॥ १०११ ॥

इति पुरःक्षेपा ।

पुरो गगनभागे चेत्प्रसार्य चरणं मुहुः ॥
आकुञ्चयेत्तदा चारी विक्षेपा शार्ङ्गिणोदिता ॥ १०१२ ॥

इति विक्षेपा ।

नतोऽङ्घ्रेरुत्प्लुत्याभीक्ष्णं निपाताद्धरिणप्लुता ॥ १०१३ ॥

इति हरिणप्लुता ।

बाह्यपार्श्वेन यत्रोरोः पृष्ठं स्पृष्ट्वेतरत्पदम् ॥
नितम्बनिकटं याति साऽपक्षेपा प्रकीर्तिता ॥ १०१४ ॥

इत्यपक्षेपा ।

डमर्याकुञ्चितस्याङ्घ्रेर्वामदक्षिणतो भ्रमात् ॥

इति डमरी ।

यत्र स्वस्तिकमावर्त्य प्रोत्क्षिपेत्तिर्यगूर्ध्वतः ॥
चरणौ दण्डपादौ सा चारी निःशङ्ककीर्तिता ॥ १०१५ ॥

इति दण्डपादा ।

विस्तार्याङ्घ्री प्लुतं कृत्वा गगने ताडयेन्मिथः ॥
यदा पादतलद्वंद्वं तदा चार्यङ्घ्रिताडिता ॥ १०१६ ॥

इत्यङ्घ्रिताडिता ।

किंचिदाकुञ्चितं पादमङ्घ्रिणाऽन्येन लङ्घयेत् ॥
गगने चेत्तदा चारी जङ्घालङ्घनिका मता ॥ १०१७ ॥

॥ १०११ ॥ १०१२ ॥ १०१३ ॥ १०१४ ॥ १०१५ ॥१०१६॥१०१७॥

इति जङ्घालङ्घनिका ।

---

१ ख. ग. अङ्घ्रिमाश्वि° । घ. ङ. अङ्घ्रिकुक्षि° । २ च. °ताङ्घ्रिरुत्प्लुतोऽभी° । ३ च. °दास्या चा° । ४ च. गगने ।

अलाताऽङ्घ्रौ पृष्ठगते शीघ्रमन्याङ्घ्रिलङ्घिते ॥ १०१८ ॥

इत्यलाता ।

तलमन्तर्भ्रमस्याङ्घ्रेर्जानुपृष्ठे क्षिपेद्यदि ॥
बहिर्भ्रमस्य तत्पार्श्वे जङ्घावर्ता तदा भवेत् ॥ १०१९ ॥

इति जङ्घावर्ता ।

अङ्घ्रिणैकेन चेदन्यं वेष्टयेद्वेष्टनं तदा ॥
तदेव वलनं केचिदवदन्नृत्तकोविदाः ॥ १०२० ॥

इति वेष्टनम् ।

उद्वेष्टनं वेष्टयित्वा पृष्ठतोऽङ्घ्रौ प्रसारिते ॥ १०२१ ॥

इत्युद्वेष्टनम् ।

आकुञ्चितस्य पादस्य पुरतः पृष्ठतस्तथा ॥
उत्क्षेपो जानुपर्यन्तमुत्क्षेपः कथ्यते बुधैः ॥ १०२२ ॥

इत्युत्क्षेपः ।

स चेत्पृष्ठत एव स्यात्पृष्ठोत्क्षेपममुं विदुः ॥

इति पृष्ठोत्क्षेपः ।

ऊरौ[1] पार्श्वेन विन्यस्य पदं यत्र प्रसारयेत् ॥
तीक्ष्णाग्रीकृत्य तामाह सूचीं श्रीकण्ठवल्लभः ॥ १०२३ ॥

इति सूची ।

पादयोः स्वस्तिकेऽस्यैकः[2] किंचिदान्दोलितः पुरः ॥
कुञ्चितश्चरणो यत्र सा विद्धा बोधिता बुधैः ॥ १०२४ ॥

इति विद्धा ।

ललिता वलिता[3] मूर्तिरुद्वृत्तश्चरणो भवेत् ॥
यत्र तत्प्रावृतं ज्ञेयं मकरध्वजजीवनम् ॥ १०२५ ॥

इति प्रावृतम् ।

॥ १०१८ ॥ १०१९ ॥ १०२० ॥ १०२१ ॥ १०२२ ॥ १०२३ ॥
॥ १०२४ ॥ १०२५ ॥

उल्लोलः[4] स्याच्चरणयोः क्रमेणोल्लालनाद्दिवि ॥ १०२६ ॥

इत्युल्लोलः ।

---

१ ख. ग. उरो । घ. ङ. ऊरू । २ च. 'स्तिकस्यैकं किंचि' । ३ ख. ग. चलिता । ४ घ. उल्लालः ।

एतासां चतुष्पञ्चाशच्चारीणां देशीत्वं भरतानुक्तत्वे सति कोहलाद्युक्तत्वाद्द्रष्टव्यम्। लोके मधुपसंज्ञकाश्चारीविशेषा देशीचारीष्वेवान्तर्भूता मन्तव्याः। ता अप्यत्र व्याख्याने कोहलोक्ताः प्रदर्श्यन्ते। **यथा**—

"अथ पादनिकुट्टाख्यचारीणां लक्षणं ब्रुवे। पादकुट्टनचारी तु लोके मधुपसंज्ञिका। तस्याश्च बहवो भेदा दिङ्मात्रं चोच्यते मया। सव्यापसव्यचलनं पादचारीषु चोच्यते। निकुट्टनं तु पादेन ताडनं स्यान्महीतले। उद्देशः क्रियतेऽत्यर्थश्चारीणां स्वोचितो मतः। पुरःपश्चात्सरा चारी तथा पश्चात्पुरःसरा। त्रिकोणचारी पश्चाच्च तथैकपदकुट्टिता। क्रमपादनिकुट्टा च पार्श्वद्वयचरी तथा। चारी डमरुकुट्टाख्या डमरुद्वयकुट्टिता। पुरःक्षेपनिकुट्टा च पश्चात्क्षेपनिकुट्टिता। पार्श्वक्षेपनिकुट्टा च चतुष्कोणाख्यकुट्टिता। मध्यस्थापनकुट्टा च तिरश्चीनाख्यकुट्टिता। चारी च पृष्ठलुंठिता पुरस्ताल्लुंठिता तथा। अनुलोमविलोमा च प्रतिलोमानुलोमिका। समपादनिकुट्टा च चक्रकुट्टनिका ततः। मध्यचक्रा ततो मध्यलुठिता वक्त्रकुट्टिता। पञ्चविंशतिसंख्याश्च कीर्तिता ह्यर्थयोगतः। एवमन्याश्च कर्तव्याश्चार्यश्चान्वर्थलक्षणाः। पादशिक्षासु कर्तव्याः कर्तव्याः पात्रनर्तनैः। निकुट्य च तलेनाऽऽदौ पुरः पश्चान्निधीयते। पादश्चाङ्गुलिपृष्ठेन स्वस्थाने चापि कुट्टितः। पुरःपश्चात्सरा नाम साऽन्वर्था परिकीर्तिता।

**इति पुरःपश्चात्सरा ( १ )**

सैव पश्चात्पुरःक्षेपात्प्रोक्ता पश्चात्पुरःसरा।

**इति पश्चात्पुरःसरा ( २ )**

निवेशिताभिधः पादः स्थापितोऽङ्गुलिपृष्ठतः। निकुट्टितः पुरस्ताच्च पार्श्वे पृष्ठे निवेशितः। चरणाङ्गुलिपृष्ठेन पुनः स्थाने च कुट्टितः। त्रिकोणचारी सोद्दिष्टा चारी चान्वर्थसंज्ञिता।

**इति त्रिकोणचारी ( ३ )**

कुट्टितश्च स्वपार्श्वे च स्थापितोऽङ्गुलिपृष्ठतः। पुनर्निकुट्टितस्थाने सा चैकपदकुट्टिता।

**इत्येकपदकुट्टिता ( ४ )**

एवं पादद्वयकृता सा पादद्वयकुट्टिता।

**इति पादद्वयकुट्टिता* ( ५ )**

कुट्टितः प्रथमं पादः स्थितश्चाङ्गुलिपृष्ठतः। अन्यस्ततः कुट्टितश्चेत्पादस्थितिनिकुट्टिता।

**इति पादस्थितिनिकुट्टिता ( ६ )**

---

* इयमग्रिमा चोद्देशेऽनुक्तेति तत्र किंचित्त्रुटितं स्यादिति भाति।

---

१ ख. ग. °के मुडुपसं°। २ ख. ग. °के मुडुप°। ३ ख. ग. °व्यवल°। ४ ख. म. स्वोचिते। ५ ख. ग. लुलिता। ६ ख. ग. °ल्लुलिता। ७ ख. ग. °ध्यवक्रस्ततो। ८ ख. ग. °ता चक्रकु°। ९ ख. ग. °र्तव्या पारन°।

पादद्वयकृता सैव क्रमपादनिकुट्टिता ।

इति क्रमपादनिकुट्टिता ( ७ )

कुट्टितोऽङ्गुलिपृष्ठे च स्थितः पादोऽपरः स्थितः । स्वस्तिकस्थापितः पूर्वः स्वपार्श्वे स्थलकुट्टितः । एवं पादद्वयेनापि सा पार्श्वद्वयचारिणी ।

इति पार्श्वद्वयचारिणी ( ८ )

कुट्टितश्चरणः पूर्वं लुठितोऽङ्गुलिपृष्ठतः । पश्चान्निकुट्टितस्थाने भवेड्डमरुकुट्टिता ।

इति डमरुकुट्टिता ( ९ )

पादद्वयकृता सा चेड्डमरुद्वयकुट्टिता ।

इति डमरुद्वयकुट्टिता ( १० )

कुट्टितश्चरणः पूर्वं पुरतोऽङ्गुलिपृष्ठतः । स्थापितः कुट्टितस्थाने पुरःक्षेपनिकुट्टिता ।

इति पुरःक्षेपनिकुट्टिता ( ११ )

पश्चात्क्षेपाच्च सा प्रोक्ता पश्चात्क्षेपनिकुट्टिता ।

इति पश्चात्क्षेपनिकुट्टिता ( १२ )

पार्श्वतश्च पुनः क्षेपात्पार्श्वक्षेपाख्यकुट्टिता ।

इति पार्श्वक्षेपाख्यकुट्टिता ( १३ )

कुट्टितश्चरणः पूर्वं पुरः पश्चान्निवेशितः । अन्नभावात्पुनश्चापि पुरः पश्चात्तदन्यथा । कुट्टितश्च ततः स्थाने चतुष्कोणाख्यकुट्टिता ।

इति चतुष्कोणकुट्टिता ( १४ )

कुट्टितः प्रथमं[1] पादः पुरः पश्चान्निवेशितः । मध्ये निवेशितश्चायं पुनस्तत्रैव कुट्टितः। मध्यस्थापनकुट्टाख्या चारी चान्वर्थलक्षणा ।

इति मध्यस्थापनकुट्टा[2] ( १५ )

कुट्टितश्चरणः पूर्वं स्वपार्श्वेऽप्यन्यपार्श्वके । निक्षिप्तश्चापि मध्ये च तत्रापि च निकुट्टितः । सा तिरश्चीनकुट्टाख्या प्रोक्ता सौ[3]ऽर्थप्रचारिका ।

इति तिरश्चीनकुट्टिता ( १६ )

कुट्टितश्चरणः पृष्ठे लुठितोऽङ्गुलिपृष्ठतः । पुनश्च कुट्टितस्थाने सा पृष्ठलुठिताभिधा ।

इति पृष्ठलुठिता ( १७ )

पुरस्ताच्च कृता सैव पुरस्ताल्लुठिताभिधा ।

इति पुरस्ताल्लुठिता ( १८ )

---

१ ख. ग. °थमः पा° । २ ख. ग. 'क्षिप्य स्थाप्य म' । ३ ख. ग. साऽर्धप्र° ।

त्रिकोणचारी या चारी त्वनुलोमविलोमगा । स्वस्थाने स्थापितपदा ततस्तत्रापि कुट्टिता । साऽनुलोमविलोमाख्या चारीयं परिकीर्तिता ।

इत्यनुलोमविलोमा ( १९ )

विपरीतप्रचारा सा प्रतिलोमानुलोमिका ।

इति प्रतिलोमानुलोमिका ( २० )

निकुट्टितौ समौ पादौ स्थितौ चाङ्गुलिपृष्ठयोः । समपादनिकुट्टा च कीर्तिताऽन्वर्थलक्षणा ।

इति समपादनिकुट्टिता ( २१ )

कुट्टितं चरणं पश्चाद्भ्रामयित्वा च विन्यसेत् । कुट्टयेच्च ततः स्थाने चक्रकुट्टनिका मता ।

इति चक्रकुट्टनिका ( २२ )

कुट्टयित्वा च विन्यस्य भ्रामयित्वा न्यसेत्ततः । निकुट्टयेत्ततः स्थाने मध्यचक्रा प्रकीर्तिता ।

इति मध्यचक्रा ( २३ )

कुट्टयित्वा च विन्यस्य लुठितश्च निकुट्टितः । सा मध्यलुठिता चेति कीर्तिताऽन्वर्थ नामिका ।

इति मध्यलुठिता ( २४ )

कुट्टयित्वा च विन्यस्य भ्रामितो लुठितस्ततः । कुट्टितश्च पुनः स्थाने वक्त्रकुट्टनिकाभिधा ।

इति वक्त्रकुट्टनिका ( २५ )

एवं प्रकीर्तिताश्चार्यः पञ्चविंशतिसंख्यया ।

एवमन्याश्च विज्ञेयाश्चार्यो बुद्ध्या मनीषिभिः'' इति ॥

प्रसङ्गान्मुडु(न्मधु)पसंज्ञाश्चार्यो दर्शिताः । प्रकृतमनुसरामः ॥ १०२६ ॥

इत्येकोनविंशतिराकाशिका(क्य)श्चार्यः ।

इत्युभय्यश्चतुष्पञ्चाशद्देशीचार्यः ।

इति षडशीतिर्मार्गदेशीचार्यः ।

---

**स्थानं स्थितिर्गतिश्चारी स्थानमाद्यन्तयोर्गतेः ॥**
**स्थित्वा गच्छति गत्वा च तिष्ठतीत्यविनाकृताः ॥**
**चार्यः स्थानेन ताभ्योऽतोऽनन्तरं स्थानमुच्यते ॥ १०२७ ॥**

अथ चारीणामनन्तरं स्थानकानां लक्षणे संगतिं दर्शयितुमाह—**स्थानं स्थितिरित्यादि** । स्थीयतेऽस्मिन्निति व्युत्पत्त्याऽधिकरणसाधनत्वं मा विज्ञायी[ते]ति स्थानशब्दस्य भावसाधनतां दर्शयति—**स्थानं स्थितिरिति** । चर्यतेऽनयेति व्युत्पत्त्या गतिरेव चारीशब्देनोच्यत इत्याह—**गतिश्चारीति** । तच्च स्थानं गतेरादावन्ते च नियमेन भवतीत्याह—**स्थानमाद्यन्तयोर्गतेरिति** । अमुमेवार्थं लोकसंमत्या द्रढयति—

---

१ ग. ङ. 'छन्तीत्य' ।

**स्थित्वा गच्छति गत्वा च तिष्ठतीति** । तत्र स्थित्वा गच्छतीति स्थितेरादिभावनियमो दर्शितः । गत्वा च तिष्ठतीति स्थितेरन्तभावनियमश्च । अत्र धूमाग्न्योरिव व्याप्तिनियमो द्रष्टव्यः । ततो गतिरेव स्थानेन व्याप्ता । न तु स्थानं गत्येति । यथाऽग्निना धूमो व्याप्तः । नतु धूमेनाग्निरितिवत् । **इतीत्यादि** । इत्युक्तप्रकारेण चार्यः स्थानेनाविनाकृता व्याप्ताः । यतोऽत इत्यध्याहर्तव्यम् । ताभ्यश्चारीभ्योऽनन्तरमव्यवधानेन स्थानकमुच्यत इति संगतिप्रदर्शनम् ॥ १०२७ ॥

स्थानकानां सामान्यलक्षणमाह—

**संनिवेशविशेषोऽङ्गे निश्चलः स्थानमुच्यते ॥ १०२८ ॥**

**संनिवेशविशेष इत्यादि** । निश्चलश्चलनरहितः । अङ्गे शरीरे संनिवेशविशेषः । अत्र विशेषशब्देन बुद्धिपूर्वं कृत इत्यवगन्तव्यम् । तेन लौकिकादङ्गसंनिवेशाद्व्यावृत्तिर्द्रष्टव्या ॥ १०२८ ॥

**वैष्णवं समपादं च वैशाखं मण्डलं तथा ॥**
**आलीढप्रत्यालिढे च स्थानानीति नरेषु षट् ॥ १०२९ ॥**

तद्भेदानुद्दिशति—**वैष्णवमित्यादि** ॥ १०२९ ॥

**अथ स्थानानि वक्ष्यामस्त्रीणि स्त्रीणां मुनेर्मतात् ॥**
**आयताख्यावहित्थाश्वक्रान्तान्यन्यचतुष्टयम् ॥ १०३० ॥**
**अथापि चेति वदता मुनिना सूचितं ब्रुवे ॥**
**गतागतं च वलितं मोटितं विनिवर्तितम् ॥ १०३१ ॥**
**अथ देशीस्थानकानां त्रयोविंशतिरुच्यते ॥**
**स्वस्तिकं वर्धमानाख्यं नन्द्यावर्तं च संहतम् ॥ १०३२ ॥**
**समपादं चैकपादं पृष्ठोत्तानतलं तथा ॥**
**चतुरस्रं पार्ष्णिविद्धं पार्ष्णिपार्श्वगतं तथा ॥ १०३३ ॥**
**एकपार्श्वगतं च स्यादेकजानुनताभिधम् ॥**
**परावृत्ताह्वयं सूचि समादि विषमाद्यपि ॥ १०३४ ॥**
**खण्डसूचि ततो ब्राह्मं वैष्णवं शैवगारुडे ॥**
**कूर्मासनं नागबन्धं वृषभासनमित्यपि ॥ १०३५ ॥**
**स्वस्थं मदालसं क्रान्तं स्याद्विष्कम्भितमुत्कटम् ॥**
**स्रस्तालसं जानुगतं मुक्तजानु विमुक्तकम् ॥ १०३६ ॥**

॥ १०३०॥ १०३१ ॥ १०३२ ॥ १०३३ ॥ १०३४ ॥ १०३५ ॥ १०३६ ॥

---

१ च. 'नुगता' । २ ख. ग. श्रुतालसं । घ. प्रश्रालसं । च. स्वस्थालसं ।

उपविष्टस्थानकानि नवेति भरतोऽभ्यधात् ॥
सममाकुञ्चितं स्थानं प्रसारितविवर्तिते ॥ १०३७ ॥
उद्वाहितं नतं चेति सुप्तस्थानानि सन्ति षट् ॥
इति स्थानानि षट्पुंसां स्त्रीणां सप्तापराण्यपि ॥ १०३८ ॥
त्रयोविंशतिरुक्तानि नव स्थानानि चाऽऽसने ॥
सुप्तस्थानानि षट्तानि सर्वाणि मिलितानि तु ॥ १०३९ ॥

॥ १०३७ ॥ १०३८ ॥ १०३९ ॥

एकपञ्चाशदाचष्ट निःशङ्कः करणाग्रणीः ॥
सर्वेषां वच्मि लक्ष्मैषामिदानीं तद्विदां मतम् ॥ १०४० ॥

वैष्णवादिष्वेकपञ्चाशत्स्थानकेषु मध्ये स्वस्तिकादीनि त्रयोविंशतिः स्थानकानि देशीस्थानकानि । देशीमार्गविवेकश्च चार्युक्तप्रकारेण द्रष्टव्यः ॥ १०४० ॥

एकः समस्थितः पादस्त्र्यस्रः पक्षस्थितोऽपरः ॥ १०४१ ॥
सार्धद्वितालान्तरालो[1] जङ्घा किंचिन्नता भवेत् ॥
सौष्ठवं यत्र तज्ज्ञेयं वैष्णवं विष्णुदैवतम् ॥ १०४२ ॥
प्रकृतिस्थस्य संलापे नानाकार्यान्तरान्विते ॥
प्रयोज्यं तन्मुनिः प्राह नृभिरुत्तममध्यमैः ॥ १०४३ ॥
विष्णुवेषधरेणैव नटेनेत्यपरे जगुः ॥
सूत्रधारादिना नाट्यस्थितिकर्त्रेति चापरे ॥ १०४४ ॥

तत्र वैष्णवस्थानकस्य लक्षणम्—एकः समस्थित इत्यादि ॥ १०४१ ॥ ॥ १०४२ ॥ १०४३ ॥ १०४४ ॥

पक्षस्थितोऽसौ चरणो यः पार्श्वाभिमुखाङ्गुलिः ॥
[2]त्र्यस्रः स एव किंचिच्चेत्पुरोदेशाभिमुख्यभाक् ॥ १०४५ ॥

तत्र पक्षस्थितस्य पादस्य लक्षणमाह—यः पार्श्वाभिमुखाङ्गुलिरिति । त्र्यस्रस्य लक्षणमाह—त्र्यस्रः स एवेति । पक्षस्थित एव किंचित्पुरोदेशाभिमुख्यभाक्चेत्त्र्यस्रो भवति ॥ १०४५ ॥

अत्र तालशब्देन रेखाशास्त्राश्रयः परिमाणभेद उच्यते । तस्य तालस्य लक्षणमाह—

अङ्गुष्ठमध्यमाङ्गुल्यौ ये हस्तस्य प्रसारिते ॥
तदग्रयोरन्तरालं तालमाहुर्मनीषिणः ॥ १०४६ ॥

अङ्गुष्ठमध्यमाङ्गुल्यावित्यादि । इदमेवाथ परिमाणम्—"तालान्तरौ तदा स्याता-

---

१ च. 'राले ज' । २ च. अतः ।

मताल्खटकामुखौ" इत्यादिषु द्रष्टव्यम् । न तु प्रसिद्धं कालपरिमाणं तद्व्यञ्जको घनवाद्यभेदो वा ॥ १०४६ ॥

सौष्ठवस्य लक्षणमाह—

कटी जानुसमा यत्र कूर्परांसशिरःसमम् ॥
उरः समुन्नतं सन्नं गात्रं तत्सौष्ठवं भवेत् ॥ १०४७ ॥

**कटीजानुसमेत्यादि । कूर्परांसशिर इति ।** कूर्परौ चांसौ च शिरश्चेति प्राण्यङ्गत्वादेकवद्भावः । तानि कूर्परादीनि सौष्ठवे मिथः समानि कर्तव्यानि भवन्ति ॥ १०४७ ॥

सन्नं स्वस्थानविश्रान्तं निषण्णं त्वचलस्थितीति[1] ॥ १०४८ ॥

प्रसङ्गात्सन्ननिषण्णशब्दयोरर्थमाह—**सन्नं स्वस्थानविश्रान्तं निषण्णं त्वचलस्थितीति** ॥ १०४८ ॥

चलपादमनत्युच्चमचञ्चलमकुब्जकम् ॥ १०४९ ॥
सौष्ठवेऽङ्गं भवेत्तच्च कार्यमुत्तममध्यमैः ॥
एतच्च वैष्णवं स्थानं चतुरस्रस्य जीवनम् ॥ १०५० ॥

सौष्ठवे शरीरस्य स्थितिविशेषमाह—**चलपादमित्यादि** ॥ १०४९॥ १०५० ॥

वैष्णवं स्थानकं यत्र कटीनाभिचरौ करौ ॥
पृथक्समुन्नतं वक्षश्चतुरस्रं तदुच्यते ॥ १०५१ ॥

चतुरस्रस्य जीवनमित्येतेन प्रसक्तस्य चतुरस्रस्य लक्षणमाह—**वैष्णवं स्थानकं यत्रेत्यादि** ॥ १०५१ ॥

इति वैष्णवम् ।

प्रधानं सौष्ठवं पादावेकतालान्तरौ समौ ॥ १०५२ ॥
यत्र तत्समपादं स्याच्चतुराननदैवतम् ॥
एतच्च विप्रदत्ताशीःस्वीकारेऽथ निरीक्षणे ॥ १०५३ ॥
मध्यमानां विहंगानां कन्यावरकुतूहले ॥
लिङ्गिव्रति[3]विमानस्थस्यन्दनस्थेषु चेष्यते ॥ १०५४ ॥

अतः परं समपादादीनि स्थानकानि ग्रन्थ एव व्यक्तलक्षणानि ॥ १०५२ ॥ ॥ १०५३ ॥ १०५४ ॥

इति समपादम् ।

भूमेरूर्ध्वनिषण्णौ चेत्सार्धतालत्रयान्तरे ॥
नभस्यूरू चरणयोस्तावदेवान्तरं भुवि ॥ १०५५ ॥

॥ १०५५ ॥

---

१ च °ननिष्क्रान्तं । २ ख. ग. घ. च. °स्थितिः ॥ १०४८ ॥ ३ ख. ग. ङ. लिङ्गव्रतवि° ।

त्र्यस्रपक्षस्थयोः स्थानं वैशाखं कथितं तदा ॥
विशाखदैवतं तच्च स्थूलपक्षीक्षणे भवेत् ॥
युद्धादौ मेरणेऽश्वानां वेगादाने[1] च वाहने ॥ १०५६ ॥

इति वैशाखम् ।

पक्षस्थौ चरणौ त्र्यस्रावेकतालान्तरौ भुवि ॥
कटीजानुसमौ व्योम्नि सार्धतालद्वयान्तरे ॥ १०५७ ॥
ऊरू यत्र निषण्णौ तन्मण्डलं शक्रदैवतम् ॥
धनुर्वज्रादिशस्त्राणां प्रयोगे गजवाहने ॥ १०५८ ॥
वीक्षणे गरुडादीनामिदं मुनिरुपादिशत् ॥
चतुस्तालान्तरौ पादौ मण्डलेऽन्ये प्रचक्षते ॥ १०५९ ॥

इति मण्डलम् ।

वामो यत्र निषण्णोरुरम्बरे पूर्वमानतः ॥
दक्षिणश्चरणश्चाग्रे पञ्चतालं प्रसारितः ॥ १०६० ॥
त्र्यस्रौ द्वावपि तद्विद्यादालीढं रुद्रदैवतम् ॥
ईर्ष्याक्रोधकृतो जल्पः कार्यस्तेनोत्तरोत्तरः ॥ १०६१ ॥
वीररौद्रकृतं मल्लसंघर्षास्फोटनादिकम् ॥
तथा संधाय शस्त्राणि प्रत्यालीढं समाश्रयेत् ॥ १०६२ ॥

इत्यालीढम् ।

आलीढाङ्गविपर्यासात्प्रत्यालीढमुदीरितम्[2] ॥
आलीढकृतसंधानशस्त्रमेतेन मोक्षयेत् ॥
रुद्रं च दैवतं तत्र भाषते शंभुवल्लभः ॥ १०६३ ॥

इति प्रत्यालीढम् ।

एषामाद्यानि चत्वारि दृश्यन्ते नाट्यनृत्तयोः ॥
प्रयोगस्त्वन्त्ययोस्तज्ज्ञैरिष्टो नाट्यैकगोचरः ॥ १०६४ ॥

॥ १०५६ ॥ १०५७ ॥ १०५८ ॥ १०५९ ॥ १०६० ॥ १०६१ ॥
॥ १०६२ ॥ १०६३ ॥ १०६४ ॥

अन्ये पञ्चविधेऽप्याहुर्नर्तने स्थानकानि षट् ॥ १०६५ ॥

तत्र पुरुषकर्तृकाणां षण्णां स्थानकानां साधारणविनियोगप्रदर्शनावसरे पञ्चविधे

---

१ ख. ग. वेगदा° । ङ. वेददा° । २ च. 'संधानं प्रत्यालीढेन मो' ।

नर्तन इत्युक्तम् । तत्र नाट्यनृत्यलास्यताण्डव(नृत्त)भेदेन नर्तनस्य पूर्वोक्तं पञ्चविधत्वमनुसंधेयम् ॥ १०६५ ॥

इति षट्पुरुषस्थानकानि ।

---

वामस्तालान्तरत्र्यस्रो दक्षिणश्चरणः समः ॥
प्रसन्नं वदनं वक्षः समुन्नतमनुन्नता ॥ १०६६ ॥
कटीनितम्बगो हस्तो दक्षिणोऽन्यो लताकरः ॥
यत्राऽऽयतं तदाख्यातं कमला चात्र देवता ॥ १०६७ ॥
स्थानं चिकीर्षितासु स्यात्क्षतासु च गतिष्विदम् ॥
आभाषणे च कर्तव्ये[1] सखीप्रियतमादिभिः ॥ १०६८ ॥
रङ्गावतरणारम्भे पुष्पाञ्जलिविसर्जने ॥
अमर्षे चाभिलाषेर्ष्याप्रभवेऽङ्गुलिमोटने ॥ १०६९ ॥
तर्जने प्रतिषेधे च कार्यं मौनावलम्बने[2] ॥
गर्वगाम्भीर्यमौने स्यादावाहनविसर्जने* ॥ १०७० ॥
पूर्वरङ्गे स्त्रीभिरेव[3] प्रयोज्यं केचिदूचिरे ॥
नरो नार्योऽथवा कुर्युः[4] प्रवेशे स्थानकं स्त्रियाः ॥ १०७१ ॥
स्थानं यथाभिनेयं स्यात्प्रविष्टेष्विति चापरे ॥
आयतानन्तरं कार्या[5] रङ्गावतरणादयः[6] ॥ १०७२ ॥
हस्तपादप्रचारस्तु तेषु ज्ञेयो यथोचितम् ॥
भट्टाभिनवगुप्तस्य मतमेतदुदीरितम् ॥ १०७३ ॥

इत्यायतम् ।

अवहित्थं तदेव स्याद्विपर्यासेन पादयोः ॥
चिन्तावितर्कयोस्तोषे संलापे च निसर्गजे ॥ १०७४ ॥
विस्मये भूरिसौभाग्यगर्वजे स्वाङ्गवीक्षणे ॥
लीलाविलासलावण्यवरमार्गविलोकने ॥ १०७५ ॥

॥ १०६६ ॥ १०६७ ॥ १०६८ ॥ १०६९ ॥ १०७० ॥ १०७१ ॥ १०७२ ॥ १०७३ ॥ १०७४ ॥ १०७५ ॥

---

* अस्मादग्रे ख. ग. घ. ङ. पुस्तकेषु समनन्तरगतं " रङ्गावतरणारम्भे पुष्पाञ्जलिविसर्जने " इति श्लोकार्धं पुनरुपात्तं दृश्यते ।

---

१ ङ. कर्तव्यं । २ च. मालावलम्बिते । ३ च. °रेतत्प्रयो° । ४ ङ. नार्यथवा कुर्यात्प्रवे° । ५ च. कार्यं र° । ६ च. °णादिकम् । ह° ।

कार्यं दौर्गमिदं स्थानमवहित्थस्य सूचकम् ॥ १०७६ ॥

अवहित्थस्थानकविनियोगे—अवहित्थस्य सूचकमित्युक्तम् । तत्रावहित्थं नामेङ्गिताकारगोपनात्मकः संचारिभावः । तस्येत्यर्थः ॥ १०७६ ॥

इत्यवहित्थम् ।

समस्यैकस्य पादस्य पार्ष्णिदेशगतोऽपरः ॥
सूचीपादः स्वपार्श्वे वा समस्तालान्तरे स्थितः ॥ १०७७ ॥
यत्राश्वारोहणारम्भे तदश्वक्रान्तमुच्यते ॥
स्खलिते विगलद्वस्त्रधारणे गोप्यगोपने ॥ १०७८ ॥
प्रसूनस्तवकादाने तरुशाखावलम्बने ॥
नैसर्गिके च संलापे विभ्रमे ललिते तथा ॥
प्रयोक्तव्यमिदं स्थानं भारती चात्र देवता ॥ १०७९ ॥

इत्यश्वक्रान्तम् ।

गत्युन्मुखी च यत्रैकं पदमुद्धृत्य नर्तकी ॥
उदास्ते तद्गतिस्थित्योर्निरोधात्स्याद्गतागतम् ॥ १०८० ॥

इति गतागतम् ।

शरीरमीषद्वलितं पादो वलितदिग्भवः ॥
कनिष्ठाश्लिष्टभूरन्यो भूलग्नाङ्गुष्ठको यदा ॥
तदा वलितमाख्यातं साभिलाषविलोकने ॥ १०८१ ॥

इति वलितम् ।

एकः समोऽङ्घ्रिरन्यस्तु कुञ्चितोऽर्धतलाङ्गुलिः ॥
अग्रे यदोर्ध्वगौ हस्तौ कर्कटौ मोटितं तदा ॥
कामावस्थासु सर्वासु विनियोगोऽस्य कीर्तितः ॥ १०८२ ॥

इति मोटितम् ।

पृष्ठतोऽङ्गपरावृत्त्या तदेव विनिवर्तितम् ॥ १०८३ ॥

इति विनिवर्तितम् ।

इति सप्त स्त्रीस्थानकानि ।

---

स्वस्तिको हंसकस्थाने चरणौ कुञ्चितौ यदा ॥
मिथः श्लिष्टकनिष्ठौ च तदाहुः स्वस्तिकं बुधाः ॥ १०८४ ॥

॥१०७७॥१०७८॥१०७९॥१०८०॥१०८१॥१०८२॥१०८३॥१०८४॥

इति स्वस्तिकम् ।

---

१ ख. ग. आयतस्था° । २ ख. ग. समताला° । घ. समास्ताला° । ३ ख. ग. °स्तिकौ संहतौ स्था° ।

वर्धमाने तु चरणौ तिर्यञ्चौ पार्ष्णिसंगतौ ॥ १०८५ ॥

इति वर्धमानम् ।

अस्यैव चेच्चरणयोरन्तरं स्यात्षडङ्गुलम् ॥
वितस्तिमात्रमथवा नन्द्यावर्तं तदोदितम् ॥ १०८६ ॥

इति नन्द्यावर्तम् ।

देहः स्वाभाविकोऽङ्गुष्ठौ पादयोश्चेन्मिथो युतौ ॥
गुल्फौ च संहतं तत्स्यात्पुष्पाञ्जलिविसर्जने ॥ १०८७ ॥

इति संहतम् ।

वपुः स्वाभाविकं पादौ वितस्त्यन्तरितावृजू ॥
यत्र तत्समपादाख्यं शार्ङ्गदेवः समादिशत् ॥ १०८८ ॥

इति समपादम् ।

समस्यो[1]ङ्घ्रेर्जानुमूर्ध्वं(?) बाह्यपार्श्वे यदीतरः ॥
बाह्यपार्श्वेन लग्नोऽङ्घ्रिरेकपादं तदोच्यते ॥ १०८९ ॥

इत्येकपादम् ।

मूलग्नाङ्गुलिपृष्ठोऽङ्घ्रिः पश्चादेकोऽपरः पुरः ॥
समो यत्र तदादिष्टं पृष्ठोत्तानतलं बुधैः ॥ १०९० ॥

इति पृष्ठोत्तानतलम् ।

नन्द्यावर्तस्य चेद[3]ङ्घ्र्योर्भवेदष्टादशाङ्गुलम् ॥
अन्तरं चतुरैः स्थानं चतुरस्रं तदोदितम् ॥ १०९१ ॥

इति चतुरस्रम् ।

पार्ष्णिरङ्गुष्ठसंश्लिष्टा पार्ष्णिविद्धे विधीयते ॥

इति पार्ष्णिविद्धम् ।

पार्ष्णिपार्श्वगते पार्ष्णिरन्तः पार्श्वान्तरस्थितः ॥ १०९२ ॥

इति पार्ष्णिपार्श्वगतम् ।

समस्याङ्घ्रेः पुरः किंचिदपरश्चरणो यदा ॥
स्याद्बाह्यपार्श्वगस्तिर्यगेकपार्श्वगतं तदा ॥ १०९३ ॥

॥ १०८५ ॥ १०८६ ॥ १०८७ ॥ १०८८ ॥ १०८९ ॥ १०९० ॥
॥ १०९१ ॥ १०९२ ॥ १०९३ ॥

इत्येकपार्श्वगतम् ।

---

१ ङ. °स्याङ्घ्रिर्जानुमूर्द्धा या° । २ ख. ग. °मूरू बा° । ३ ङ. °दङ्घ्रिर्भवे° ।

एकः समोऽङ्घ्रिरन्यश्चेदन्तरे चतुरङ्गुले ॥
तिर्यक्कुञ्चितजानुः स्यादेकजानु्नतं तदा ॥ १०९४ ॥

॥ १०९४ ॥

इत्येकजानुनतम् ।

परावृत्ते समे स्यातां पार्ष्ण्याऽङ्गुष्ठकनिष्ठिके ॥

इति परावृत्तम् ।

पार्ष्णिजङ्घोरुसंलग्नधरणी चरणौ यदा ॥
तिर्यक्प्रसारितौ स्यातां समसूचि तदोच्यते ॥ १०९५ ॥

परावृत्तस्य स्थानकस्य लक्षणे—अङ्गुष्ठकनिष्ठिके पार्ष्ण्या समे स्यातामित्युच्यते । तस्यायमर्थोऽवगन्तव्यः । द्वयोः पादयोरेकस्याङ्गुष्ठ इतरस्य कनिष्ठिका चेत्यङ्गुष्ठकनिष्ठिकेति द्वंद्वं ते—पार्ष्ण्या समे स्यातामिति । वामाङ्गुष्ठो दक्षिणपार्ष्ण्या समः । दक्षिणकनिष्ठिका वामपार्ष्ण्या समा । यद्वा दक्षिणाङ्गुष्ठो वामपार्ष्ण्या समः । वामकनिष्ठिका दक्षिणपार्ष्ण्या समेति । अत्र समत्वमेकदेशस्थितत्वमवगन्तव्यम् । अन्यथैकपादस्याङ्गुष्ठकनिष्ठयोस्तदीयपार्ष्ण्या समत्वं न संभवति । एवं पादान्तरपार्ष्ण्या समत्वं तूक्तप्रकारेण संभवति । पादान्तरपार्ष्णिपश्चाद्भागस्थित्या समत्वे विवक्षिते त्वङ्गुष्ठकनिष्ठिकाग्रहणमनर्थकं स्यात् । पादग्रहणेनैव गतार्थत्वादिति ॥ १०९५ ॥

इति समसूचि ।

सूचीपादौ पृथग्यत्र पुरः पश्चात्प्रसारितौ ॥ १०९६ ॥
युगपद्वदितं तज्ज्ञैः स्थानं विषमसूचि तत् ॥
भूलग्नजानुगुल्फौ तौ चरणौ केचिदूचिरे ॥ १०९७ ॥

इति विषमसूचि ।

एकोऽङ्घ्रिः कुञ्चितोऽन्यस्तु भूसंलग्नोरुपार्ष्णिकः ॥
तिर्यक्प्रसारितो यत्र खण्डसूचि तदोच्यते ॥ १०९८ ॥

इति खण्डसूचि ।

एकः समोऽङ्घ्रिरन्यश्चेत्कुञ्चितीकृत्य पृष्ठतः ॥
जानुसंधिसमत्वेनोत्क्षिप्तो ब्राह्मं तदुच्यते ॥ १०९९ ॥

॥ १०९६ ॥ १०९७ ॥ १०९८ ॥ १०९९ ॥

इति ब्राह्मम् ।

---

१ घ. °नुगतं । २ ङ. पार्ष्ण्यङ्गु° ।

सममेकं विधायाङ्घ्रिमन्यश्चेत्कुञ्चितो मनाक् ॥
पुरः प्रसारितस्तिर्यक्पदं स्याद्वैष्णवं तदा ॥ ११०० ॥

इति वैष्णवम् ।

अङ्घ्रेः समस्य वामस्य जानुशीर्षसमोऽपरः ॥
उद्धृतः कुञ्चिताकारो यत्र शैवं तदुच्यते ॥ ११०१ ॥

इति शैवम् ।

आकुञ्चितः पुरो वामः पश्चादन्यस्तु जानुना ॥
भुवं गतौ यदा पादौ गारुडं गदितं तदा ॥ ११०२ ॥

इति गारुडम् ।

दक्षिणश्चरणो जानुबाह्यगुल्फमिलत्क्षितिः ॥
वामः समो भवेद्यत्र कूर्मासनमदो विदुः ११०३ ॥

इति कूर्मासनम् ।

यदोपविश्य वामोरोः पृष्ठे न्यस्यति दक्षिणाम् ॥
जङ्घां तदा नागबन्धमभ्यधात्करणाग्रणीः ॥ ११०४ ॥

इति नागबन्धम् ।

वियुते संयुते वा चेज्जानुनी संस्थिते क्षितौ ॥
वृषभासनमाख्यातं सौष्ठवाधिष्ठितं तदा ॥ ११०५ ॥

इति वृषभासनम् ।

इति त्रयोविंशतिर्देशीस्थानानि ।

---

विस्तारिताञ्चितावङ्घ्री यत्रोरः किंचिदुन्नतम् ॥
करावूरुकटिन्यस्तौ स्वस्थं स्थानं तदुच्यते ॥ ११०६ ॥

इति स्वस्थम् ।

एकः प्रसारितः किंचिदन्योऽङ्घ्रिस्त्वासनाश्रितः ॥
शिरःपार्श्वगतं यत्र तन्मदालसमिष्यते ॥
मदे विपदि निर्वेदेऽथौत्सुक्ये विरहे भवेत् ॥ ११०७ ॥

॥ ११०० ॥ ११०१ ॥ ११०२ ॥ ११०३ ॥ ११०४ ॥ ११०५ ॥ १००६ ॥
॥ ११०७ ॥

इति मदालसम् ।

---

१ ङ. भुवि । २ घ. ङ. °र्यक्पदः स्या° । च. °र्यक्पादः स्था° । ३ च. °र्षगतोऽप° । ४ ख. ग. घ. ङ. शैवमुशन्ति तत् । इ° । ५ ख. ग. घ. °मोरौ पृ° । ६ ख. ग. घ. ङ. °रणाधिपः । इ° ।

हस्तौ चिबुकविन्यस्तौ बाहुशीर्षश्रितं शिरः ॥
ईषच्छाष्पे च नयने यत्र क्रान्तमदो मतम् ॥
निर्जिते निगृहीते च शोकग्लाने भवेदिदम् ॥ ११०८ ॥

इति क्रान्तम् ।

ऊरुविस्तारितौ बाहू पादौ विस्तारिताञ्चितौ ॥ ११०९ ॥
यदा निमीलिते नेत्रे विष्कम्भं भणितं तदा ॥
योगे ध्याने भवेदेतत्स्वभावेन भटासने ॥ १११० ॥

इति विष्कम्भितम् ।

समासनैसमं स्पृष्टभूतलं चरणौ समौ ॥
यदा तदोत्कटं योगध्यानसंध्याजपादिषु ॥ ११११ ॥

इत्युत्कटम् ।

हस्तौ स्रस्तौ विमुक्तौ च शरीरमलसं यदा ॥
लोचने मन्थराकारधरे स्रस्तालसं तदा ॥
हानिग्लानिमदव्याधिमूर्छाभीतिषु तद्भवेत् ॥ १११२ ॥

इति स्रस्तालसम् ।

जानुभ्यां भूमिसंस्थाभ्यां स्थानं जानुगतं मतम् ॥ १११३ ॥
होमे देवार्चने दीनयाचने मृगदर्शने ॥
कुँसत्त्वत्रासने चेदं भवेत्क्रुद्धप्रसादने ॥ १११४ ॥

इति जानुगतम् ।

उत्कटस्यैव जान्वेकं धरापृष्ठमधिष्ठितम् ॥
यत्रैतन्मुक्तजानु स्यान्मानिनीनां प्रसादने ॥
हवने सज्जनानां च सान्त्वने साधुकर्तृके ॥ १११५ ॥

इति मुक्तजानु ।

विमुक्तं भूमपतनं हावक्रन्दादिषु स्मृतम् ॥

॥ ११०८ ॥ ११०९ ॥ १११० ॥ ११११ ॥ १११२ ॥ १११३ ॥
॥ १११४ ॥ १११५ ॥

इति विमुक्तम् ।

इति नवोपविष्टस्थानकानि ।

---

१ ङ. °र्पस्थितं । च. °र्षगतं । २ ङ. ऊरू वि° । ३ ङ. °ममसंस्पृ° । ४ ग. कुशपत्रा° ।

सुप्तमुत्तानवक्त्रं च स्रस्तमुक्तकरं समम् ॥ १११६ ॥

इति समम् ।

आकुञ्चिताङ्गमाविद्धजान्वाकुञ्चितमुच्यते ॥
प्रयोगस्तस्य शीतार्ताभिनये शार्ङ्गिणोदितः ॥ १११७ ॥

इत्याकुञ्चितम् ।

उपधाय भुजामेकां यत्प्रसारितजानुकम् ॥
सुप्तं प्रसारितं स्थानं सुखसुप्ते तदिष्यते ॥ १११८ ॥

इति प्रसारितम् ।

विवर्तितमधोवक्त्रं सुप्तं शस्त्रक्षतादिषु ॥ १११९ ॥

इति विवर्तितम् ।

स्कन्धन्यस्तशिरः सुप्तं कूर्पराधिष्ठितक्षिति ॥
यत्तदुद्वाहितं प्रोक्तं लीलयाऽवस्थितौ प्रभोः ॥ ११२० ॥

इत्युद्वाहितम् ।

ईषत्प्रसृतजङ्घं यत्सुप्तं स्रस्तकरद्वयम् ।
तन्नतं स्थानकं खेदश्रमालस्यादिषु स्मृतम् ॥ ११२१ ॥

॥ १११६ ॥ १११७ ॥ १११८ ॥ १११९ ॥ ११२० ॥ ११२१ ॥

इति नतम् ।

इति षट्सुप्तस्थानकानि[1] ।

इत्येकपञ्चाशत्स्थानप्रकरणम् ।

---

वाङ्मनःकायजा चेष्टा पुरुषार्थोपयोगिनी ॥
वृत्तिः सा भारती सात्त्वत्यारभट्यथ कैशिकी ॥ ११२२ ॥
चतुर्विधेति विज्ञेया[2] तासामुत्पत्तिरुच्यते ॥
ऋग्वेदाद्भारती जाता यजुर्वेदात्तु सात्त्वती ॥
अथर्वणादारभटी सामवेदात्तु कैशिकी ॥ ११२३ ॥

अथोद्देशक्रमेण वृत्तीर्लक्षयितुं तासां सामान्यलक्षणमाह—**वाङ्मनःकायजेत्यादि** । वाङ्मनःकायेभ्यो जायत इति तथोक्ता । पुरुषार्थोपयोगिनी । अत्र पुरुषार्थशब्देन धर्मार्थकामा गृह्यन्ते । न मोक्षः । तं प्रत्यासामुपयोगाभावात् । तेषु धर्मादिषूपयोगोऽस्या अस्तीति पुरुषार्थोपयोगिनीत्युक्तम् । चेष्टा व्यापारो वृत्तिरुच्यते । सा वृत्तिर्भारतीत्या-

---

१ घ. °नकानि । २ च. °ति विज्ञाता ता° ।

दिभेदेन चतुर्विधेति विज्ञेयेति संबन्धः । तासां (*नाट्यवेदोपयोगादि) ऋगादिवेदेभ्य उत्पत्तिं दर्शयति—**तासामिति** ॥ ११२२ ॥ ११२३ ॥

तत्र च भारतीं वृत्तिं लक्षयति—

**वृत्तिः संस्कृतवाक्यैकप्रधाना भरैतर्नृभिः ॥**
**प्रयुज्यमाना वाग्वृत्तिः प्राधान्याद्भारती मता ॥ ११२४ ॥**

**वृत्तिः संस्कृतेत्यादि** । संस्कृतवाक्यमेव प्रधानं यस्याः सा तथोक्ता । अत्र वाग्व्यापारस्यैकस्य प्राधान्यम् । मनःकायव्यापारयोस्त्वप्राधान्यमित्यर्थः । अत एव वाग्वृत्तिरित्युच्यते । भरतैर्नृभिः प्राधान्यात्प्रयुज्यमानेति भारतीशब्दस्य व्युत्पत्तिर्दर्शिता । नाटकार्थाभिनेतारः सूत्रधारादयो भरता इत्युच्यन्ते ॥ ११२४ ॥

सात्त्वत्या निरुक्तिपूर्वकं लक्षणमाह—

**सत्त्वप्रकाशकं यत्स्यात्तद्युक्तं सत्त्वमुच्यते ॥**
**मनस्तत्प्रभवा हर्षशौर्यत्यागास्तु सात्त्वताः ॥ ११२५ ॥**
**तत्प्रधाना सात्त्वती स्याद्वीररौद्राद्भुतोत्कटा ॥**
**हीना शृङ्गारनिर्वेदकरुणैरुद्धताश्रयात् ॥ ११२६ ॥**

**सत्त्वप्रकाशकं यत्स्यादित्यादि** । एतेनास्या मनोव्यापारप्रधानत्वं दर्शितं भवति ॥ ११२५ ॥ ११२६ ॥

अथाऽऽरभट्या लक्षणं सनिरुक्तिकमाह—

**[2]आरादुत्साहिनो ये स्युर्भटास्तत्कायसंभवा ॥**
**भवेदारभटी वृत्ती रौद्रादावुद्धते रसे ॥**
**मायेन्द्रजालबहुला चित्रयुद्धप्रवर्धिनी ॥ ११२७ ॥**

**आरादित्यादि** । तत्कायसंभवा तेषां भटानां शरीरसंभवेत्यनेन चाऽऽरभट्याः कायव्यापारप्रधानत्वं दर्शितम् ॥ ११२७ ॥

अथ कैशिक्या लक्षणमाह—

**वागङ्गाभरणानां या सौकुमार्येण निर्मिता ॥**
**उल्लसद्गीतनृत्ताढ्या शृङ्गाररसनिर्भरा ॥ ११२८ ॥**
**निःशङ्कः कैशिकीं ब्रूते तां सौन्दर्यैकजीविताम् ॥**
**सौन्दर्यसौकुमार्याभ्यां रौद्रादावप्यसौ भवेत् ॥ ११२९ ॥**

**वागङ्गाभरणानामित्यादि** । एतेन कैशिक्यां वाङ्मनःकायव्यापाराणां समप्राधा-

---

* एतच्चिह्नान्तर्गतमधिकमिव भाति ।

---

१ घ. 'तपाठ्यैक' । च. 'त पाठैक' । २ ख. ग. आर उत्सा' । ङ. भरा उत्सा' । घ. अरादुत्सा' ।

न्यमुक्तं भवति । अत्र कैशिकीशब्दो रूढो द्रष्टव्यः । यद्वा केशानां समूहः कैशिकम् । कैशिकवन्मृदुत्वात्सुमनोभिर्विचित्रत्वाच्च कैशिकीयोगोऽपि द्रष्टव्यः ॥ ११२८ ॥ ११२९ ॥

आमुखं च प्रहसनं तथा वीथी प्ररोचना ॥
अंशाः स्युरिति चत्वारो ये भारत्या मुनेर्मताः ॥ ११३० ॥
उद्घात्यकावलगिते कथोद्घातः प्रवर्तकम् ॥
प्रयोगातिशयश्चेति भेदाः पञ्चाऽऽमुखस्य ये ॥ ११३१ ॥
उत्थापकाभिधो[1] भेदः सात्त्वत्याः परिवर्तकः ॥
संलापकश्चतुर्थस्तु यः संघात्यकसंज्ञकः[2] ॥ ११३२ ॥
संक्षिप्तकं चावपातः स्याद्वस्तूत्थापनं तथा ॥
संफेटश्चाऽऽरभट्यां[3] यदिति भेदचतुष्टयम् ॥ ११३३ ॥
कैशिक्यां यन्मतं नर्म नर्मस्फुञ्जस्तथाऽपरः ॥
नर्मस्फोटो नर्मगर्भश्चेति भेदचतुष्टयम् ॥ ११३४ ॥
परिचित्ताक्षेपकं[4] च परोपालम्भकं तथा ॥
रोपेर्ष्यासूचकं[5] चेति नर्मभेदास्त्रयश्च ये ॥ ११३५ ॥

अथ भारत्यादीनामवान्तरभेदान्परिगणयति—**आमुखं चेत्यादिना** ॥ ११३० ॥ ॥ ११३१ ॥ ११३२ ॥ ११३३ ॥ ११३४ ॥ ११३५ ॥

तेषां लक्षणानभिधाने हेतुमाह—

**सोदाहरणलक्ष्माणस्तेऽमी नाटकगोचराः ॥**
**विस्तरत्रस्तचित्तेन निःशङ्केन न तेनिरे ॥ ११३६ ॥**

**सोदाहरणेत्यादिना** । नाटकगोचरास्तेऽमी वृत्तिभेदा विस्तरतस्त्रस्तचित्तेन निःशङ्केन सोदाहरणलक्ष्माणो न तेनिर इति संबन्धः । तेषां नाटकगोचरत्वेन नृत्ते नातीवोपयोगादि(ग इ)ति भावः ॥ ११३६ ॥

तर्हि नृत्तप्रकरणे वृत्त(त्ति)कथनं कथमित्यत आह—

**काव्यं गीतं तथा नृत्तं वृत्तिहीनं न शोभते ॥**
**अतो वृत्तीर्विजानीयादेता भरतभाषिताः ॥ ११३७ ॥**

**काव्यं गीतमित्यादि । वृत्तिहीनं न शोभत इति ।** यद्यपि वृत्तिहीनत्वेन काव्यादीनां न स्वरूपनिष्पत्तिस्तथाऽपि निष्पन्नस्य नृत्तादेः शोभातिशयाधानहेतुत्वेन वृत्तीनामप्युपयोगो विद्यत इत्यत्र प्रकरणे तत्कार्यमिति भावः ॥ ११३७ ॥

**इति वृत्तिलक्षणम् ।**

---

१ च. उत्थापकानाभिते च क° । २ ख. ग. परिकीर्तितः । ३ ख. ग. संघल्येक° । ४ च. संस्फोट° । ५ च. °रिचिन्ताक्षे° । ६ ख. ग. °सूचनं चे° ।

युद्धे परात्मशस्त्राणां *क्रमाद्रक्षणपातने ॥
विधातुमुचिता गात्रवर्तना न्याय उच्यते ॥ ११३८ ॥

अथ वृत्त्यनुषक्तान्सविचारान्न्यायाँल्लक्षयितुं न्यायसामान्यलक्षणं तावदाह—**युद्ध इत्यादि**। परात्मशस्त्राणां क्रमाद्रक्षणपातने इति। परशस्त्राणां रक्षणं नाम शत्रुप्रहरणानि यथा स्वदेहे न निपतन्ति तथा फलकादिना स्वदेहसंरक्षणमित्यर्थः। आत्मशस्त्रपातनं नाम शत्रुशरीरे स्वप्रहरणानि यथा फलकादिनिवारणं शमयित्वा निपतन्ति तथा स्वहस्तलाघवादिना शत्रु(तेषां)पातनम्। ते विधातुमुचिता नाट्योचितेत्यर्थः। गात्रवर्तना न्याय उच्यत इति संबन्धः ॥ ११३८ ॥

भारतः सात्त्वतो वार्षगण्यः कैशिकसंज्ञकः ॥ ११३९ ॥
भेदास्तस्येति चत्वारः क्रमाद्वृत्तिचतुष्टये ॥
तेषां लक्षणसिद्ध्यर्थं प्रविचारान्ब्रुवेऽधुना ॥ ११४० ॥

क्रमाद्वृत्तिचतुष्टय इति। भारत्यां भारतः। सात्त्वत्यां सात्त्वतः। आरभट्यां वार्षगण्यः। वृषगणो नाम कश्चिद्भटवरः। तत्संबन्धादयं व्यपदेशो द्रष्टव्यः। कैशिक्यां कैशिक इति क्रमः ॥ ११३९ ॥ ११४० ॥

प्रविचाराणां समानं स्वरूपमाह—

याः प्रकृष्टा विचित्राश्च गतयस्ते परिक्रमाः ॥
त एव प्रविचाराः स्युः शस्त्रमोक्षणगोचराः ॥ ११४१ ॥

याः प्रकृष्टा इत्यादि। शस्त्रमोक्षणगोचरा इति। (+यद्यपि) स्वदेहरक्षणे कर्तव्येऽपि प्रविचाराणां शस्त्रमोक्षणप्रवणत्वमेवेत्यर्थः ॥ ११४१ ॥

फलकं वामहस्तेन खड्गं दक्षिणपाणिना ॥
गृहीत्वाऽपसृतौ कृत्वा करावाक्षिप्य तौ ततः ॥ ११४२ ॥
फलकभ्रामणं कृत्वा पार्श्वयोरुभयोरथ ॥
परितः शिरसः शस्त्रं भ्रामयित्वा तु खड्गिनम् ॥ ११४३ ॥
करं शिरःकपोलान्तरुद्वेष्ट्य मणिबन्धतः ॥
फलकस्याप्युपशिरः परिभ्रमणमाचरेत् ॥ ११४४ ॥
विधिरेष सकृत्कार्यो शस्त्रपातश्च भारते ॥
सात्त्वतेऽप्येवमेव स्याच्छस्त्रभ्रान्तिस्तु पृष्ठतः ॥ ११४५ ॥
कर्तव्यः शस्त्रपातस्तु पादयोरिह तद्विदा ॥
प्रविचारः सात्त्वतवद्वार्षगण्ये विधीयते ॥ ११४६ ॥

---

* क्रमाद्रक्षणपातन इति टीकाकारादृतः पाठः। + एतच्चिह्नान्तर्गतमधिकमिव भाति।

---

१ च. °र्तनान्न्याय। २ च. °त्वतश्चाऽऽरभटः कै°।

पृष्ठतः फलकस्यापि भ्रामणं स्यादिहाधिकम् ॥
स्कन्धे वक्षसि वा शस्त्रहस्तस्योद्वेष्टनं तथा ॥ ११४७ ॥
प्रहारपातनं चात्र वक्षस्थलगतं मतम् ॥
कैशिके स्याद्भारतवच्छस्त्रपातस्तु मूर्धनि ॥ ११४८ ॥

सप्रविचाराणां भारत्या(ता?)दीनां पृथक्स्वरूपमाह—**फलकं वामहस्तेत्यादिना** ॥ ११४२ ॥ ११४३ ॥ ११४४ ॥ ११४५ ॥ ११४६ ॥ ११४७ ॥११४८॥

नर्तने न्यायोपयोगमाह—

शक्तिकुन्तादिशस्त्राणि धनुर्वज्रादिकान्यपि ॥
न्यायेष्वेषु प्रयुञ्जीत सौष्ठवेन समन्वितः ॥ ११४९ ॥
प्रविचारा न शोभन्ते सौष्ठवेन विना कृताः ॥
संज्ञामात्रेण कर्तव्यः प्रहारो न तु वास्तवः ॥ ११५० ॥
मायेन्द्रजालैरथवा प्रहारमिव दर्शयेत् ॥
एते न्यायाः प्रयोक्तव्याश्चारीभिः शस्त्रमोक्षणे[1] ॥ ११५१ ॥

इति न्यायलक्षणम् ।

**शक्तिकुन्तेत्यादि । प्रहारमिवेति ।** यथा वास्तवः प्रहारो न भवति तथा कुर्यादित्यर्थः ॥ ११४९ ॥ ११५० ॥ ११५१ ॥

उद्देशक्रमेण मण्डलानि लक्षयिष्यन्पूर्वं चारीणां लक्षणावसरे प्रसङ्गादुक्तं तत्सामान्यलक्षणमनुस्मारयति—

चारीचयविशेषैः[2] प्राङ्मण्डलं प्रतिपादितम् ॥
तद्भेदानधुना धीमान्वक्ति[3] श्रीकरणाग्रणीः ॥ ११५२ ॥

**चारीचयविशेषः प्राङ्मण्डलं प्रतिपादितमिति । चारीचयविशेष इति ।** मण्डलखण्डैस्त्रिभिश्चतुर्भिर्वेति पूर्वोक्तमित्यर्थः ॥ ११५२ ॥

भ्रमरास्कन्दितावर्तशकटास्यानि चाड्डितम् ॥
समोसरितमध्यर्धमेलकाक्रीडितं ततः ॥ ११५३ ॥
पिष्टकुट्टं चापगतं भौमानीति दशावदन् ॥
अतिक्रान्तं दण्डपादं क्रान्तं ललितसंचरम् ॥ ११५४ ॥
सूचीविद्धं वामविद्धं विचित्रं विहृतं ततः ॥
अलातं ललितं चेति व्योमजानि दशाब्रुवन् ॥ ११५५ ॥
भौमाकाशिकचारीणां प्राचुर्यान्मण्डलान्यपि ॥
भौमान्याकाशिकानीति व्यपदेशं प्रपेदिरे ॥ ११५६ ॥

---

१ च. °क्षणैः । इ° । २ ख. ग. च. °षः स्यान्मण्ड° । ३ च. °मान्प्राह श्री° ।

एतेषां विनियोगश्च विज्ञेयः शस्त्रमोक्षणे ॥
नभोभवानां प्राधान्यं बोध्यं युद्धपरिक्रमे ॥ ११५७ ॥

तद्भेदान्दर्शयति—भ्रमरास्कन्दितेत्यादि ॥ ११५३ ॥ ११५४ ॥ ११५५ ॥
॥ ११५६ ॥ ११५७ ॥

चारीनाम्नाऽत्र चरणं वक्ष्ये चारीविवक्षया ॥
चारीणां न्यूनताधिक्यं न दूषयति मण्डलम् ॥ ११५८ ॥

चारीणां न्यूनताधिक्यं न दूषयति मण्डलमिति । चतुरस्रत्र्यस्रमानमितेष्वङ्ग-हारेषु करणानां न्यूनताधिक्यमिव चतुरस्रत्र्यस्रमानमितेषु मण्डलेषु चारीणां न्यूनता-धिक्यं मण्डलं न दूषयति । तत्राङ्गहारेषु यथा रेचकैः पूरणं कृतं तथाऽत्रापि मण्ड-लेषु पादरेचकैश्चारीसंख्यापूरणे कृते सति चतुरस्रत्र्यस्रत्वयोः संभवाददोष इति भावः ॥ ११५८ ॥

दक्षिणो जनितो वामः स्यन्दितो दक्षिणः[1] पुनः ॥
शकटास्यस्तथा[2] वामः पादोऽपस्यन्दितोऽथवा ॥ ११५९ ॥
दक्षिणो भ्रमरो वामः स्यन्दितोऽङ्घ्रिरथेतरः ॥
शकटास्यश्चापगतिर्वामोऽन्यो भ्रमरो भवेत् ॥
वामान्ते स्यन्दितो यत्र तदूचे भ्रमरं बुधैः ॥ ११६० ॥

मण्डलानां लक्षणानि ग्रन्थत एव सुबोधानि ॥ ११५९ ॥ ११६० ॥

इति भ्रमरम् ।

दक्षिणो भ्रमरो वामोऽड्डितोऽथ भ्रमरः स चेत् ॥
दक्षिणः शकटास्यत्वं गत्वोरूद्वृत्ततां[3] गतः ॥ ११६१ ॥
वामो वाऽध्यर्धिकीभूय भ्रमरो दक्षिणः पुनः ॥
स्यन्दितः शकटास्यस्तु वामस्तेनैव भूतलम् ॥
स्फुटमास्फोटितं धीरैस्तदास्कन्दितमिष्यते ॥ ११६२ ॥

इत्यास्कन्दितम् ।

दक्षिणो जनितो वामः स्थितावर्तस्ततः परम् ॥
शकटास्यो भवेत्पश्चादेलकाक्रीडिताह्वयः ॥ ११६३ ॥
ऊरूद्वृत्तोऽड्डितश्चारीं जनितामाश्रितस्ततः ॥
समोसरितमत्तल्लिः(?) क्रमादङ्घ्रिस्तु दक्षिणः ॥ ११६४ ॥

॥ ११६१ ॥ ११६२ ॥ ११६३ ॥ ११६४ ॥

---

१ च. जनितः । २ च. 'स्ततो वा' । ३ ख. ग. गतोरुद्वृ' ।

शकटास्यः क्रमादूरूद्वृत्तश्च स्यादथेतरः ॥
पादश्चापगतिर्द्विः स्याद्दक्षिणः स्यन्दितस्ततः ॥ ११६५ ॥
वामाङ्घ्रिः शकटास्यः स्यादन्योऽङ्घ्रिर्भ्रमरस्ततः ॥
वामश्चापगतिर्यत्र तदावर्तमवादिषुः ॥ ११६६ ॥

इत्यावर्तम् ।

जनितः सप्त(म)पूर्वोक्तस्थितावर्तादिभेदभाक् ॥
क्रमेण शकटास्यश्च दक्षिणः स्यन्दितोऽपरः ॥ ११६७ ॥
शकटास्यस्ततः पादो यावन्मण्डलपूरणम् ॥
क्रमेण यत्र तज्ज्ञेयं शकटास्याभिधं बुधैः ॥ ११६८ ॥

इति शकटास्यम् ।

उद्घट्टितस्ततो बद्धः समोसरितपूर्वकः ॥
मत्तल्लिरर्धमत्तल्लिरपक्रान्तश्च दक्षिणः ॥ ११६९ ॥
उद्वृत्तो विद्युद्भ्रान्तश्च भ्रमरः स्यन्दितश्च सः ॥
वामस्तु शकटास्योऽन्यो द्विः स्याच्चापगतिस्ततः ॥ ११७० ॥
वामोऽड्डितोऽध्यर्धिकस्तु क्रमाच्चापगतिः परः ॥
समोसरितमत्तल्लिर्मत्तल्लिर्भ्रमरस्तथा ॥ ११७१ ॥
वामोऽथ स्यन्दितो भूत्वा भूतटास्फोटनं यदा ॥
कुरुते दक्षिणः प्राहुरड्डितं मण्डलं सदा ॥ ११७२ ॥

इत्यड्डितम् ।

स्थानेन समपादेन स्थित्वा हस्तौ प्रसारयेत् ॥
*निरन्तरावूर्ध्वकृतावावेष्ट्योद्वेष्ट्यवत्क्षि(च क्षि?)पेत् ॥ ११७३ ॥
कटीतटे ततः पादौ भ्रामयेद्दक्षिणे ततः ॥
क्रमेणानन्तरं वामं पुरः पादं प्रसारयेत् ॥ ११७४ ॥
एवं भ्रान्त्वा क्रमाद्यत्र मण्डलभ्रमणं भवेत् ॥
चतुर्दिकं तदाख्यातं समोसरितसंज्ञकम् ॥ ११७५ ॥

॥ ११६५ ॥ ११६६ ॥ ११६७ ॥ ११६८ ॥ ११६९ ॥ ११७० ॥ ११७१ ॥
॥ ११७२ ॥ ११७३ ॥ ११७४ ॥ ११७५ ॥

इति समोसरितम् ।

---

* 'निरन्तरेत्यादि' चरणत्रयं 'ख' 'ग' 'च' पुस्तकेषु न विद्यते ।

---

१ ग. च. °र्वोक्तः स्थि° । २ घ. ङ °ल्लिश्चार्ध° । च. °ल्लिरथ म° । ३ च. °ल्लि च परस्त° । ४ च. °तलस्फो° । ५ ख. ग. घ. ङ. च. °ण्डलं भ्र° ।

क्रमेण दक्षिणः पादो जनितः स्यन्दितस्ततः ॥
अङ्गितोक्ता चतुर्भेदी वामस्याध्यर्धिकादिका ॥ ११७६ ॥
दक्षिणः शकटास्यः स्याद्यत्रान्ते दिक्चतुष्टये ॥
मण्डलभ्रमणं तत्तु नियुद्धेऽध्यर्धमण्डलम् ॥ ११७७ ॥

इत्यध्यर्धम् ।

भूयुक्तैश्चरणैः सूचीविद्धं करणमाश्रितैः ॥
सूचीविद्धाभिधे चार्यावेलकाक्रीडितैरथ ॥ ११७८ ॥
संपूर्णैर्भ्रमरैः प्राग्वत्सूचीविद्धाङ्घ्रिभिस्ततः ॥
आक्षिप्तैर्मण्डलभ्रान्त्या दिक्चतुष्टययुक्तया ॥
अन्ते रचितया ज्ञेयमेलकाक्रीडिताह्वयम् ॥ ११७९ ॥

इत्येलकाक्रीडितम् ।

सूची दक्षिणपादः स्याद्वामोऽपक्रान्तकस्ततः ॥ ११८० ॥
सव्यवामौ च बहुशो भुजंगत्रासितौ क्रमात् ॥
यत्रान्ते मण्डलभ्रान्तिः पिष्टकुट्टं तदुच्यते ॥ ११८१ ॥

इति पिष्टकुट्टम् ।

चरणैश्चापगतिभिः समस्तैर्मण्डलभ्रमम् ॥
अन्ते दधच्चापगतं नियुद्धविषयं भवेत् ॥ ११८२ ॥

इति चापगतम् ।

इति दश भौममण्डलानि ।

---

जनितः शकटास्यश्च दक्षिणश्चरणः क्रमात् ॥
वामोऽलातो दक्षिणस्तु पार्श्वक्रान्तस्ततोऽपरः ॥ ११८३ ॥
सूची स एव भ्रमर उद्वृत्तो दक्षिणो भवेत् ॥
वामस्त्वलातको वाऽङ्घ्री छिन्नाख्यकरणाश्रयौ ॥ ११८४ ॥
बाह्यभ्रमरकं यत्र वामाङ्गं रेचितं भवेत् ॥
अतिक्रान्तस्ततो वामो दण्डपादस्तु दक्षिणः ॥
अवोचत्तदतिक्रान्तं मण्डलं शंकरप्रियः ॥ ११८५ ॥

॥ ११७६ ॥ ११७७ ॥ ११७८ ॥ ११७९ ॥ ११८० ॥ ११८१॥११८२॥
॥ ११८३ ॥ ११८४ ॥ ११८५ ॥

इत्यतिक्रान्तम् ।

---

१ च. °क्ताश्चतुर्भेदा वा° । २ ख. ग. °भ्रितस्त° । ३ च. °यमुक्त° । ४ च. °न्ते चरित° ।
५ च. °गते नि° । ६ च. °ची च वामो भ्र° । ७ च. °लातं कस्यङ्घ्री । ८ ङ. °माङ्करचि° ।

दक्षिणो जनितो भूत्वा दण्डपादो[1] भवेदथ ॥
सूची च भ्रमरो[2] वाम उद्वृत्तो दक्षिणस्ततः ॥ ११८६ ॥
अलातो वामचरणः पार्श्वक्रान्तस्तु दक्षिणः ॥
भुजंगत्रासितश्चासौ[3] वामोऽतिक्रान्ततां गतः ॥ ११८७ ॥
दक्षिणो दण्डपादोऽथ सूची च भ्रमरोऽपरः ॥
यत्र तद्दण्डपादाख्यं मण्डलं बभणे बुधैः ॥ ११८८ ॥

इति दण्डपादम् ।

दक्षिणः सूच्यपक्रान्तो वामोऽङ्घ्रिर्दक्षिणस्ततः ॥
पार्श्वक्रान्तस्तथा वामः समन्तान्मण्डलभ्रमः ॥ ११८९ ॥
सूची यत्राथ वामः स्यादपक्रान्तस्तु दक्षिणः ॥
तदुक्तं कृतिभिः क्रान्तं स्वभावगतिगोचरम् ॥ ११९० ॥

इति क्रान्तम् ।

ऊर्ध्वजानुस्तथा सूची दक्षिणश्चरणः क्रमात् ॥
वामपादस्त्वपक्रान्तः पार्श्वक्रान्तस्तु दक्षिणः ॥ ११९१ ॥
क्रमात्सूची भ्रमरको वामः पादोऽथ दक्षिणः ॥
पार्श्वक्रान्तस्ततो वामोऽतिक्रान्तो दक्षिणः पुनः ॥ ११९२ ॥
सूच्यपक्रान्तको वामः पार्श्वक्रान्तोऽपरस्ततः[4] ॥
स्याद्वामाङ्घ्रिरतिक्रान्तश्चरणाद्वितयी ततः ॥ ११९३ ॥
स्याच्छिन्नकरणोक्ता चेद्वामाङ्घ्रिरचितं[5] श्रिता ॥
वाह्यभ्रमरकं विद्यात्तदा ललितसंचरम् ॥ ११९४ ॥

इति ललितसंचरम् ।

दक्षिणश्चरणः सूची भ्रमरश्च भवेत्ततः ॥
पार्श्वक्रान्तोऽथ वामाङ्घ्रिरपक्रान्तोऽथ दक्षिणः ॥ ११९५ ॥
सूची वामस्त्वपक्रान्तः पार्श्वक्रान्तस्तु दक्षिणः ॥
यत्र तन्मण्डलं प्रोक्तं सूचीविद्धं पुरातनैः ॥ ११९६ ॥

इति सूचीविद्धम् ।

सूच्यङ्घ्रिर्दक्षिणो वामस्त्वपक्रान्तोऽथ दक्षिणः ॥ ११९७ ॥

॥ ११८६ ॥ ११८७ ॥ ११८८ ॥ ११८९ ॥ ११९० ॥ ११९१ ॥ ११९२ ॥ ॥ ११९३ ॥ ११९४ ॥ ११९५ ॥ ११९६ ॥ ११९७ ॥

---

१ घ. दण्डपादी । २ ख. ग. घ. ङ. 'चीव भ्र' । ३ च. 'सिता चासौ । ४ ख. ग. 'क्रान्तस्ततः परः । स्या' । च. 'क्रान्तोऽपरस्तथा । स्या' । ५ च. 'ङ्घ्रिरेचि' । ६ ङ. 'रतिका' ।

दण्डपादोऽथ सूची स्याद्वामो भ्रमरकश्च सः ॥
पार्श्वक्रान्तो दक्षिणः स्यादाक्षिप्तो दक्षिणेतरः ॥ ११९८ ॥
दक्षिणो दण्डपादः स्यादूरूद्वृत्तोऽप्यनन्तरम् ॥
वामश्च सूची भ्रमरोऽलातश्च क्रमतो भवेत् ॥ ११९९ ॥
पार्श्वक्रान्तो दक्षिणः स्याद्वामोऽतिक्रान्ततां व्रजेत् ॥
यत्र तद्वामविद्धाख्यं मण्डलं शार्ङ्गिणोदितम् ॥ १२०० ॥

इति वामविद्धम् ।

दक्षिणो जनितोऽङ्घ्रिः स्यादूरूद्वृत्तश्च विच्यवः ॥
ततः समस्थितावर्तोद्व्यावर्तोदितभेदभाक् ॥ १२०१ ॥
स्यन्दितो वामपादः स्यात्पार्श्वक्रान्तस्तु दक्षिणः ॥
*भुजंगत्रासितो वामोऽतिक्रान्तो दक्षिणो भवेत् ॥ १२०२ ॥
उद्वृत्तश्चैव वामस्तु स्यादलातोऽथ दक्षिणः ॥
पार्श्वक्रान्तोऽथवा सूची वामो विक्षिप्य दक्षिणम् ॥
वामोऽपक्रान्ततां नीतस्तद्विचित्रं प्रचक्षते ॥ १२०३ ॥

इति विचित्रम् ।

दक्षिणो विच्यवो भूत्वा स्यन्दितोऽनन्तरं भवेत् ॥ १२०४ ॥
पार्श्वक्रान्तो दक्षिणोऽङ्घ्रिर्वामस्तु स्यन्दितस्ततः ॥
उद्वृत्तो दक्षिणोऽलातो वामः सूची तु दक्षिणः ॥ १२०५ ॥
पार्श्वक्रान्तस्तु वामाङ्घ्रिराक्षिप्तीभूय दक्षिणः ॥
भ्रान्त्वा सव्यापसव्येन दण्डपादत्वमागतः ॥ १२०६ ॥
वामः क्रमेण सूची स्याद्भ्रमरश्चाथ दक्षिणः ॥
भुजंगत्रासितो वामोऽतिक्रान्तो विहृताभिधे ॥ १२०७ ॥

इति विहृतम् ।

सूचीं च भ्रमरीं वामे क्रमात्पादे तु दक्षिणे ॥ १२०८ ॥

॥ ११९८ ॥ ११९९ ॥ १२०० ॥ १२०१ ॥ १२०२॥ १२०३॥१२०४॥
॥ १२०५ ॥ १२०६ ॥ १२०७ ॥ १२०८ ॥

---

* एतदुत्तरं चार्धं ङ. पुस्तके नास्ति ।

---

१ च. दक्षिणोत्तरः । २ च. भ्रमरो । ३ च. °क्रान्तको भवेत् । ४ ख. ग. घ. °वर्तोद्याव° । ङ. °वर्ताद्याव° । ५ ख. ङ. °न्तो यत्र सू° । ६ ङ. दक्षिणः । ७ ख. ग. भूत्वोत्सन्दि° । ङ. भूत्वा-ऽसण्डितोऽ° । ८ च. विकृताभिधम् ।

भुजंगत्रासितां चारीमलातां दक्षिणेतरे ॥
षट्कृत्वः सप्तकृत्वो वा कृत्वा चारीरिमाः क्रमात् ॥ १२०९ ॥
चतुर्दिक्षु द्रुतं भ्रान्त्वा परिमण्डलिताकृतिः ॥
दक्षिणाङ्घ्रावपक्रान्तां वामे तु चरणे क्रमात् ॥ १२१० ॥
अतिक्रान्ता भ्रमरिके ललितैश्चरणक्रमैः ॥
करोति यत्र तत्प्राहुरलातं मण्डलं बुधाः ॥ १२११ ॥

इत्यलातम् ।

सूच्यङ्घ्रिर्दक्षिणो वामस्त्वपक्रान्तोऽथ दक्षिणः ॥
पार्श्वक्रान्तत्वमागत्य भुजंगत्रासितो भवेत् ॥ १२१२ ॥
अतिक्रान्तस्तु वामाङ्घ्रिराक्षिप्तो दक्षिणस्ततः ॥
वामोऽतिक्रान्ततां नीत्वोरूद्वृत्तोऽलातकः क्रमात् ॥ १२१३ ॥
पार्श्वक्रान्तो दक्षिणः स्याद्वामः सूच्यथ दक्षिणः ॥
अपक्रान्तो वामपादस्त्वतिक्रान्तीकृतो यदा ॥
ललितं संचरेदुक्तं ललितं मण्डलं तदा ॥ १२१४ ॥

इति ललितम् ।

इति दशाऽऽकाशिकमण्डलानि ।

इति मण्डललक्षणम् ।

---

॥ १२०९ ॥१२१०॥ १२११ ॥ १२१२ ॥ १२१३ ॥ १२१४ ॥

चालिश्चालिवडश्चाथ लढिः सूकमुरोङ्गणम् ॥ १२१५ ॥
धसकश्चाङ्गहारः स्यादोयारो विहसी मनः ॥
लास्याङ्गानि दशैतानि देश्यां देशीविदो विदुः ॥ १२१६ ॥

अथ देशीलास्याङ्गानि लक्षयितुं तान्युद्दिशति—चालिश्चालिवड इत्यादि । ॥ १२१५ ॥ १२१६ ॥

कोमलं सविलासं च मधुरंताललास्ययुक् ॥
नातिद्रुतं नातिमन्दं त्र्यस्रताप्रचुरं तथा ॥ १२१७ ॥
पादोरुकटिबाहूनां यौगपद्येन चालनम् ॥
चालिः सा शैघ्र्यसांमुख्यप्राया चालिवडो भवेत् ॥ १२१८ ॥

---

१ ख. ग. घ. ङ. °दिक्षं द्रु° । २ च. °क्रान्तो वा° ३ च. °रणः क्र° । ४ ख. ग. ङ. °तो गत्वो° । ५ च. °लिवटश्चा° । ङ. °लिचडश्चा° । ६ च. °दोजारो । ७ च. °विकासं ।

चालिवडस्य लक्षणांशे— सांमुख्यप्रायेति । मध्यलयत्र्यस्रताभ्यां प्रचुरा चालिरुक्ता । चालिवडस्तु द्रुतलयचतुरस्रताभ्यां प्रचुरो भवति । इतरत्तु द्वयोरपि समानमित्यर्थः ॥ १२१७ ॥ १२१८ ॥

**सुकुमारं तिरश्चीनं विलासरसिकं च यत् ॥**
**युगपत्कटिबाहूनां चालनं सा लढिर्मता ॥ १२१९ ॥**

लढिलक्षणे—कटिबाहूनामिति । कटी च बाहू च कटिबाहव इति बहुप्रकृतिको द्वंद्वः (!) । प्रतिपार्श्वं कटिबाह्वोरेव(?) चालनं लढिरित्यर्थः ॥ १२१९ ॥

**कर्णयोर्हा[3]वबहुलं लसल्लीलावतंसयोः ॥**
**विलम्बेनाविलम्बेन सूकं तल्लयचालनम् ॥ १२२० ॥**
**विलम्बेनाविलम्बेन कुचयोर्भुजशीर्षयोः ॥**
**ललितं चालनं तिर्यक्तज्ज्ञाः प्राहुरुरोङ्गणम् ॥ १२२१ ॥**

सूकलक्षणे—हावबहुलमिति । हावो नाम स्त्रीणां विलासविशेषः ।

यथोक्तं भावप्रकाशे—

"हेलाहेतुः स शृङ्गारे भावात्किंचित्प्रकर्षवान् ।
सग्रीवारेचको हावो नासाक्षिभ्रूविकासकृत्" इति ।

तेन हावेन प्रचुरम् ॥ १२२० ॥ १२२१ ॥

**धसकः स्यात्सुललितं[4] स्तनाधोनयनं लयात् ॥ १२२२ ॥**
**सताललतितोपेता क्रमात्कार्या द्वयोर्नतिः ॥**
**धनुर्वदङ्गहारः स्यादिति निःशङ्कभाषितम् ॥ १२२३ ॥**
**किंचित्तिर्यगधो मूर्ध्नो गतिरोयारको मतः ॥**
**स्मितं स्याद्विहसी यैस्तु[5] शृङ्गाररसनिर्भरः[6] ॥ १२२४ ॥**
**अभ्यस्तादन्य एवातिसूक्ष्मप्रत्यग्रभङ्गिभाक् ॥**
**गीतादेरागतः स्थायस्तल्लयात्तन्मनो मतम् ॥ १२२५ ॥**

धसकलक्षणे—लयात्स्तनाधोनयनमिति । स्वभावेन स्थिताया नर्तक्यास्ताललयानुकरणक्रमेणैव स्थित्वा ह्रस्वीभाव इत्यर्थः । शिष्टं स्पष्टम् ॥ १२२२ ॥ १२२३ ॥ ॥ १२२४ ॥ १२२५ ॥

**इति दश लास्याङ्गानि ।**

---

१ ख. ग. ललिल° । २ ज. °हुलप्र° । ३ च. °र्हारब° । ४ ख. ग. °तं तदाऽधो न° । ङ. °तं ततोऽधो न° । च. °तं स्तनान्तोल्लय° । ५ च. यस्तु । ६ च. °निर्भरम् । अ° ।

शिरोनेत्रकरादीनामङ्गानां मेलने सति ॥
कायस्थितिर्मनोनेत्रहारी रेखा प्रकीर्तिता ॥ १२२६ ॥

अथ रेखां लक्षयति—शिरोनेत्रेत्यादि । मनांसि नेत्राणि च हरतीत्यर्थे हरतेरौणादिक इञ्प्रत्यये ङीपि च हारीति रूपं वक्तव्यम् ॥ १२२६ ॥

इति रेखालक्षणम् ।

विघ्नेशं भारतीं देवीं ब्रह्मविष्णुमहेश्वरान् ॥
रङ्गं तद्देवतास्तालवाद्यभाण्डानि च क्रमात् ॥ १२२७ ॥
उपाध्यायं नृत्तकन्याः स्तम्भयुग्मं च दण्डिकाम् ॥
कस्तूरिकाचन्दनाद्यैः सामोदैरनुलेपनैः ॥ १२२८ ॥
शुभ्रैः सुगन्धिभिः पुष्पैर्धूपैरारात्रिकैरपि ॥
नैवेद्यैर्विविधैर्वस्त्रैस्ताम्बूलैर्बलिभिस्तथा ॥ १२२९ ॥
अर्चयित्वा शुभे लग्ने प्रारभेत श्रमं सुधीः ॥
स्तम्भद्वयोपरिन्यस्येत्कृत्वा हृदयसंमिताम् ॥ १२३० ॥
हस्तग्राह्यां तिरश्चीनामवष्टम्भाय दण्डिकाम् ॥
वसित्वा वसनं शुभ्रं दृढमादाय कञ्चुकम् ॥ १२३१ ॥

अथ श्रमविधिमाह—विघ्नेशमित्यादि ॥ १२२७ ॥ १२२८ ॥ १२२९ ॥ ॥ १२३० ॥ १२३१ ॥

दण्डिकालम्बिनी कन्याऽभ्यस्येदङ्गविवर्तनम् ॥
वलनं स्थापनं रेखां तालसाम्यं लयानपि ॥ १२३२ ॥
अङ्गादीनि पुरोक्तानि लास्याङ्गान्यखिलान्यपि ॥
गीतवाद्यानुगमनं शिक्षेत सुमनाः सती ॥ १२३३ ॥

अङ्गविवर्तनमिति सामान्यवचनम् । वलनमित्यादि तु विशेषवचनम् । श्रमो नाम नर्तनशिक्षाभ्यास उच्यते ॥ १२३२ ॥ १२३३ ॥

इति श्रमविधिः ।

पात्रं स्यान्नर्तनाधारो नृत्ते प्रायेण नर्तकी ॥
मुग्धं मध्यं प्रगल्भं च पात्रं त्रेधेति कीर्तितम् ॥ १२३४ ॥

अथ पात्रस्य लक्षणमाह—पात्रं स्यादित्यादि । नर्तनाधारो नर्तकी नृत्ते प्रायेण

१ ख. ग. 'ग्रहारिरेषा प्र°'। २ ख. '°ये नीपि । ग. '°ये टीपि । ३ घ. '°ङ्गं च देवतास्थानवा°' । ४ च. '°रार्तिकै°' । ५ ख. ग. घ ङ. '°स्येत्कन्याह्°' । ६ घ. ङ. च. चलनं । ङ. चलणं । ७ ख. ग. '°य सम°' । ८ ख. ग. ङ. चलनं ।

पात्रं स्यादिति योजना । नर्तकस्यापि नर्तनाधारत्वाविशेषेऽपि नृत्तविषये नर्तक्येव लोके पात्रमित्युच्यते न नर्तक इत्यर्थः । तत्पात्रं मुग्धं मध्यं प्रगल्भं चेति त्रेधा कीर्तितम् ॥ १२३४ ॥

**मुग्धादेर्लक्षणं प्रोक्तं यौवनत्रितयं क्रमात् ॥ १२३५ ॥**

मुग्धादेः पात्रस्य लक्षणम्—**यौवनत्रितयं क्रमादिति** । यौवनानां वक्ष्यमाणानां प्रथमद्वितीयतृतीयानां त्रितयं तस्य क्रमादिति । प्रथमयौवनयुक्तं मुग्धं पात्रम् । द्वितीययौवनयुक्तं मध्यमं पात्रम् । तृतीययौवनयुक्तं प्रगल्भं पात्रमिति क्रमः॥१२३५॥

**लीनाधरस्तनाभोगकपोलजघनोरुकम् ॥**
**सुरतं प्रति सोत्साहं प्रथमं यौवनं मतम् ॥ १२३६ ॥**
**पीनोरुजघनं पीनकठिनोच्चघनस्तनम् ॥**
**जीवितं मन्मथस्योक्तं द्वितीयं यौवनं बुधैः ॥ १२३७ ॥**
**उन्मादकं श्रियो[2] जुष्टं संपन्नरतिनैपुणम् ॥**
**कामशिक्षितभावं च तृतीयं यौवनं [3]विदुः ॥ १२३८ ॥**
**यौवनं तुर्यमप्यस्ति मन्दोत्साहमनो भवेत् ॥**
**म्लानाधरस्तनाभोगकपोलजघनं[4] च तत् ॥ १२३९ ॥**
**अतिप्रगल्भमेतस्माद्यौवनात्पात्रमुच्यते ॥**
**तज्जराभिमुखं शोभाविकलं नाऽऽदृतं बुधैः ॥**
**बालं मनोविहीनत्वान्न पात्रं तज्ज्ञरञ्जकम् ॥ १२४० ॥**

तेषां यौवनानां लक्षणमाह—**लीनेत्यादि** ॥ १२३६ ॥ १२३७ ॥ १२३८ ॥ ॥ १२३९ ॥ १२४० ॥

**इति पात्रलक्षणम् ।**

पात्रगुणानाह—

**सौष्ठवं रूपसंपत्तिश्चारुविस्तीर्ण[6]वक्त्रता ॥**
**विशालनेत्रता विम्बाधरता कान्तदन्तता ॥ १२४१ ॥**
**सुकण्ठकम्बुता[7] वेल्लल्लतासरसबाहुता ॥**
**[8]तनुमध्योन्नतिस्थूलनितम्बकरभोरुता ॥ ११४२ ॥**

**सौष्ठवमित्यादि** । सौष्ठवं नामाङ्गानां शोभनत्वम् । वैष्णवस्थानकोक्ताङ्गसंनिवेशो वा । रूपसंपत्तिरित्यस्यैव प्रपञ्चश्चारुविस्तीर्णवक्त्रतेत्यादि ॥ १२४१ ॥१२४२॥

---

१ च °तये क्र° । २ च. °या युक्तं सं° । ३ च. मतम् । ४ च. °नं दधत् । ५ च. तच्च र° । ६ ख. ग. घ. °र्णकर्णता । च. °र्णवर्णता। ७ ख. ग. घ. °ता डोल्लस्वरता सरलाङ्गता। ८ ख. घ. ङ. तनुर्मध्योन्नतिः स्थू° ।

अत्युच्चखर्वपीनत्वराहित्यमशिरालता ॥ १२४३ ॥
लावण्यकान्तिमाधुर्यधैर्यौदार्यप्रगल्भता ॥
गौरता श्यामता वेति तज्ज्ञैः पात्रगुणा मताः ॥ १२४४ ॥
यत्पात्रं गात्रविक्षेपैः कोमलैर्विलसल्लयैः ॥
सुतालैरक्षराणीव प्रोद्गिरद्गीतवाद्ययोः ॥ १२४५ ॥
गीतवाद्यध्वनिं चाङ्गैश्चाक्षुषत्वमिवाऽऽनयत् ॥
सुमनांसीव गात्राणि रसपूर्णतया दधत् ॥
नृत्यत्युत्तममाचष्ट तदिदं करणाग्रणीः ॥ १२४६ ॥

लावण्यादिप्रगल्भतेत्यन्तो बहूनां द्वंद्वः । **गौरता श्यामता वेति** । कृष्णता न गुण इत्यर्थः ॥ १२४३ ॥ १२४४ ॥ १२४५ ॥ १२४६ ॥

इति पात्रगुणाः ।

व्यस्तानां वा समस्तानामेषां दोषो विपर्ययः ॥
गुणदोषौ परीक्षेत पात्रे नृत्तस्य सिद्धये ॥ १२४७ ॥

पात्रस्य दोषानाह—**व्यस्तानां** वेत्यादि । व्यस्तानां सौष्ठवादिष्वेकैकगुणानां समस्तानां समवेतानामेषां गुणानां विपर्ययोऽभावो दोषः । पात्रस्य गुणदोषपरीक्षणे प्रयोजनमाह—**नृत्तस्य सिद्धय इति** ॥ १२४७ ॥

मार्कण्डेयपुराणोक्ता नृत्ते पात्रैकतन्त्रता ॥ १२४८ ॥
नृत्तेनालमरूपेण सिद्धिर्नान्येन रूपतः ॥
चार्वधिष्ठानवन्नृत्तं नृत्तमन्यद्विडम्बना ॥ १२४९ ॥

नृत्तसिद्धेः पात्रैकतन्त्रतामभियुक्तसंमतिपूर्वकं दर्शयति—**मार्कण्डेयेत्यादि** । ॥ १२४८ ॥ १२४९ ॥

इति पात्रदोषाः ।

सुलीनस्निग्धविस्तीर्णकेशपाशनिवेशितः ॥
ग्रन्थिर्विलुलितः पृष्ठे लसत्पुष्पावतंसकः ॥ १२५० ॥
वेणी वा सरला दीर्घा मुक्ताजालविराजितैः ॥
*कलितं कुन्तलैर्भालं कस्तूरीचन्दनादिना ॥ १२५१ ॥
रचितं चित्रकं भाले नेत्रे तन्वञ्जनाञ्चिते ॥
उल्लसत्कान्तिवलये तालपत्रे च कर्णयोः ॥ १२५२ ॥

---

* कलितमित्याद्यारभ्य "एकैकशः प्रयोगेऽपि" इत्यन्तो ग्रन्थांशस्त्रुटितो 'ङ.' संज्ञितपुस्तके ।

---

१ च. स्मृताः । २ च. °त्पात्रगतिवि° । ३ ख. ग. नृत्तमुत्त° । ४ ख. ग. पात्रनृ° । ५ च. °नामलरू° ।

दन्तपङ्क्तिः प्रभाजालप्रोज्ज्वलीकृतरङ्गभूः ॥
कस्तूरीपत्रभङ्गाङ्कौ कपोलौ कण्ठलम्बिता ॥ १२५३ ॥
ताराहारावली स्थूलमौक्तिका स्तनमण्डना ॥
प्रकोष्ठौ न्यस्तसद्रत्नसौवर्णवलयान्वितौ ॥ १२५४ ॥
अङ्गुल्यो धृतमाणिक्यनीलवज्रादिमुद्रिकाः ॥
चन्दनैर्धूसरं गात्रं यद्वा कुङ्कुमरञ्जितम् ॥ १२५५ ॥
क्षीरोदकं दुकूलादि वस्त्रं कूर्पासकस्तनुः ॥
सकञ्चुकं वा चलनं तत्तद्देशानुसारतः ॥ १२५६ ॥
एतन्मण्डनमन्यद्वा पात्रयोः श्यामगौरयोः ॥
यथोचितं विधातव्यमित्याह शिववल्लभः ॥ १२५७ ॥

तस्य पात्रस्य मण्डनमाह—**सुनीलस्निग्धेत्यादि** ॥ १२९० ॥ १२९१ ॥ ॥ १२९२ ॥ १२९३ ॥ १२९४ ॥ १२९५ ॥ १२९६ ॥ १२९७ ॥

इति पात्रमण्डनानि ।

उपाध्यायस्य लक्षणमाह—

रूपवान्नृत्ततत्त्वज्ञो ग्रहमोक्षविचक्षणः ॥
समादिग्रहविज्ञश्च वाद्यवादनवेदिता ॥ १२५८ ॥

**रूपवानित्यादि** । उपाध्यायो नामात्र भरतादिशास्त्राभिज्ञोऽभिनयोपदेष्टा विद्वानभिधीयते । **नृत्ततत्त्वज्ञ इति** । नृत्तस्य गात्रविक्षेपमात्रं त्वित्यादिनोक्तलक्षणस्य तत्त्वं स्वरूपं लयाश्रयत्वादि जानातीति तथोक्तः । **ग्रहमोक्षविचक्षण इति** । गीतवाद्ययोरुपक्रमोपसंहारवेदिता । **समादिग्रहविज्ञश्चेति** । ताने ये ग्रहा समातीतानागताश्च त्रय उक्तास्तान्विशेषेण जानातीति तथोक्तः । **वाद्यवादनवेदितेति** । वाद्यानां ततादीनां वादनप्रकाराभिज्ञः ॥ १२९८ ॥

संप्रदायागतज्ञानो ध्वनिमाधुर्यतत्त्ववित् ॥
स्थायाधिक्योनताभिज्ञः कुशलो लयतालयोः ॥ १२५९ ॥

**संप्रदायागतेति** । शास्त्रे तत्र तत्र रहस्येषु गुरूपदेशात्परम्परायातपरिज्ञानवान् । **ध्वनिमाधुर्यतत्त्वविदिति** । ध्वनेर्नादस्य माधुर्यमिति । यस्य रागस्य यस्मिन्नादविशेषे क्रियमाणे रक्तिविशेषस्तद्ध्वनिमाधुर्यमित्युच्यते । तस्य तत्त्वं स्वरूपं वेत्तीति तथोक्तः । **स्थायाधिक्योनताभिज्ञ इति** । स्थायानां रागावयवानामाधिक्यमूनता च तयोरभिज्ञ इति तथोक्तः । लोके यथा करचरणादीनामवयवानामाधिक्योनते पश्यत्येवं रागेष्वा-

१ ख. ग. 'त्रभृङ्गा' । २ ख. ग. 'माण उक्ति' ।

धिक्योनते जानातीत्यर्थः । **कुशलो लयतालयोरिति** । लयो द्रुतादिः । तालश्चच्चत्पुटादिः । तयोः कुशलत्वं नाम वर्तमाने लये लयान्तरे(रा?)करणं [वर्तमाने ताले तालान्तराकरणं ] चेत्यर्थः ॥ १२५९ ॥

**वाद्यप्रबन्धनिर्माता मुखवाद्येषु कोविदः ॥**
**उद्भेत्ता[1] नूत्नभङ्गीनां[2] शिष्यशिक्षणदक्षिणः ॥ १२६० ॥**

**वाद्यप्रबन्धनिर्मातेति** । वाद्यप्रबन्धाः पूर्वोक्ता यन्त्रादयः । तान्निर्मातुं शक्त इत्यर्थः । **मुखवाद्येषु कोविद इति** । मुरजादिवाद्योद्भवा वर्णसंघाता एव तालधरेणोच्चारिता मुखवाद्यानीत्युच्यन्ते । तेषु कोविदः । तद्गुणदोषाभिज्ञः । **उद्भेत्ता नूत्नभङ्गीनामिति** । तूर्यत्रयेऽपि नूतनप्रकाराणामुत्पादकः । **शिष्यशिक्षणदक्षिण इति** । शिष्याणां शिक्षणे सम्यग्विद्यासंक्रमणे समर्थः ॥ १२६० ॥

**प्रतिष्ठापयिता नृत्तगीतवाद्यव्यवस्थितेः[3] ॥**
**प्रविष्टो हृदयं यद्वा पात्रस्य हृदि[4] च स्वयम् ॥ १२६१ ॥**

**नृत्तगीतवाद्यव्यवस्थितेः प्रतिष्ठापयितेति** । तेन देशीमार्गविभागेन तूर्यत्रयव्यवस्थायाः प्रतिष्ठापकः । **प्रविष्टो हृदयमिति** । पात्रेण स्वहृदयं प्रविष्ट इति कर्मणि निष्ठा । यद्वा पात्रस्य हृदि स्वयं प्रविष्टश्चेत्यत्र कर्तरि निष्ठा । उपाध्यायपात्रहृदययोरेकीभावेन भवितव्यमित्यर्थः । अन्यथा सात्त्विकाभिनयोपदेशग्रहणेऽस्य न संभव इति भावः ॥ १२६१ ॥

**रञ्जकः स्यादुपाध्यायो नृत्तदोषविधानवित् ॥ १२६२ ॥**

**रञ्जक इति** । अभिनयोपदेशादिषु शास्त्रगोष्ठीषु च जनचित्ताकर्षकः । **नृत्तदोषविधानविदिति** । नृत्तस्य दोषं विधानं च वेत्तीति तथोक्तः । एवंविशिष्ट उपाध्यायः स्यात् । एतदुक्तं भवति । उपाध्यायेन नृत्तादिषु लक्ष्येषु तत्त्वज्ञेन भवितव्यम् । न तु तैत्तत्कर्मकर्त्रेति[5] ॥ १२६२ ॥

**इत्युपाध्यायलक्षणम् ।**

अथ संप्रदायं लक्षयति—

**यत्रैको मुखरी श्रेष्ठस्तथा[6] प्रतिमुखर्यपि[7] ॥**
**द्वावडावजिनौ स्कन्धावजिनौ करटाधरौ(?) १२६३ ॥**

**यत्रैक इत्यादि** । अत्र नर्तनोपयोगिनां वादकगायकानां वृन्दं संप्रदाय इति **लोकैरुच्यते** ॥ १२६३ ॥

---

१ ख. ग. °रकार°। २ ग. °त्ता नृत्तभ°। च. °त्ता तानभ°। ३ ख. °स्थितिः। प्र°। ग. °स्थितः। प्र° । ४ च. °दि वा स्व° । ५ ख. ग. तत्क° । ६ ग. श्रेष्ठः सूच्या प्र° । ७ च. °पि । द्वौ वामजठराबद्धावर्जितौ करटाधरौ (?) ।

द्वात्रिंशन्मर्दलधरा वरास्तालधरद्वयम् ॥
कांस्यतालधरास्त्वष्टाविष्टाः काहलिकद्वयम् ॥ १२६४ ॥
वांशिकौ रसिकौ व्यक्तसुरक्तप्रचुरध्वनी ॥
चत्वारो मधुरध्वाना भवन्त्येते करास्तयोः ॥ १२६५ ॥
द्वौ मुख्यगायनौ सार्धमष्टभिः सह गायनैः ॥
मुख्यगायनिके चाष्टौ सहगायनिकास्तयोः ॥ १२६६ ॥
संप्रदायसमुल्लासि पात्रमेकं गुणान्वितम् ॥
सर्वेऽमी रूपवन्तः स्युश्चित्रालंकरणान्विताः ॥ १२६७ ॥
गीतादिसाम्यनिपुणाः प्रहर्षोत्फुल्लचेतसः ॥
उत्तमः संप्रदायोऽसौ लोके कुटिलमुच्यते ॥
तदर्धं मध्यमो न्यूनोऽस्मात्कनिष्ठो निगद्यते ॥ १२६८ ॥

॥ १२६४ ॥ १२६५ ॥ १२६६ ॥ १२६७ ॥ १२६८ ॥

इति संप्रदायलक्षणम् ।

अनुवृत्तिर्मुखरिणस्तलयोर्न्यूनपूरणम् ॥
तालानुवृत्तिरित्येते चत्वारः कुटिले गुणाः ॥ १२६९ ॥

संप्रदायस्य गुणानाह—अनुवृत्तिर्मुखरिण इत्यादि ॥ १२६९ ॥

संप्रदायस्य दोषः स्यादेतद्गुणविपर्ययः ॥ १२७० ॥

संप्रदायस्य दोषानाह—एतद्गुणविपर्यय इति ॥ १२७० ॥

इति संप्रदायगुणदोषाः ।

संप्रदायस्य शुद्धपद्धतिमाह—

संगीतज्ञैर्बुधैः सार्धं नायके प्रेक्षके स्थिते ॥
प्रविश्य रङ्गभूमिं ते तिष्ठन्तः सांप्रदायिकाः ॥ १२७१ ॥
वाद्यानां नादसाम्यं च कृत्वाऽवस्थितमानसाः ॥
मेलापकं वादयेयुः प्रबन्धं गजरं ततः ॥ १२७२ ॥

संगीतज्ञैर्बुधैः सार्धमित्यादि । मेलापकं वादयेयुरित्यादि । मेलापकादयो वाद्यप्रबन्धाः पूर्वोक्तलक्षणा अनुसंधेयाः ॥ १२७१ ॥ १२७२ ॥

ततो जवनिकान्तर्धौ दधानं कुसुमाञ्जलिम् ॥
पात्रं तिष्ठेदधिष्ठाय स्थानकं सौष्ठवान्वितम् ॥ १२७३ ॥

॥ १२७३ ॥

---

१ ख. ग. °धराद्वय° । २ च. °वन्त्यो नरकास्त° । ३ च. °णाश्रयम् । ४ ग. प्रकर्षो° । ५ च. °णस्ताल° । ६ च. °वहित° । ७ च. °ष्ठवस्थित° ।

ततश्चोपसमारम्भेऽन्तर्धाने चापसारिते ॥
सभाजनमनोहारि पात्रं रङ्गभुवं विशेत् ॥ १२७४ ॥
वाद्यमाने प्रबन्धे चोपशमाद्दौ च वादकैः ॥
सुप्ताङ्गै(?) रङ्गपीठस्य मध्ये पुष्पाञ्जलिं क्षिपेत् ॥ १२७५ ॥
यतः स्वयं सुरज्येष्ठो मध्येरङ्गमधिष्ठितः ॥
ततः प्रहर्षसंपन्नं सुप्ताङ्गैरेव केवलैः ॥
वाद्येनोपशमेनात्र नृत्येत्पात्रं मनोन्वितम् ॥ १२७६ ॥

॥ १२७४ ॥ १२७५ ॥ १२७६ ॥

पदमोता च कवितं मलपावत्सकावपि ॥
रिगोणी तुडुकेत्येभिः प्रबन्धैर्निर्यतक्रमैः ॥ १२७७ ॥
स्वेच्छाकृतक्रमैर्यद्वा वाद्यमानैः समन्ततः ॥
समाङ्गैर्विषमाङ्गैर्वोभयैर्वा नृत्तमाचरेत् ॥ १२७८ ॥

**समाङ्गैर्विषमाङ्गैर्वोभयैर्वा नृत्तमाचरेदिति** । समाङ्गैश्चतुरस्राश्रितैर्विषमाङ्गैस्त्र्यस्राश्रितैरुभयैरुभयाश्रितैर्वाऽङ्गैर्नृत्तं कुर्यात् ॥ १२७७ ॥ १२७८ ॥

ततः शुद्धप्रबन्धैश्च गीयमानैर्निजेच्छया ॥
पात्रं विधाय त्रिविधं नर्तनं स्थानमाचरेत् ॥ १२७९ ॥

शुद्धप्रबन्धैरेलादिभिः । **निजेच्छया गीयमानैरिति** । सूडक्रमं विहाय चेत्यर्थः । **त्रिविधं नर्तनमिति** । समविषमोभयात्मकमित्यर्थः । अथवा नाट्यनृत्यनृत्तभेदेन त्रिविधं नर्तनं विधायेति । अयमर्थः । यदा रसाश्रयत्वेन गीतार्थाभिनयः क्रियते तदा नाट्यम् । यदा भावाश्रयत्वेन गीतार्थोऽभिनीयते तदा नृत्यम् । यदा गात्रविक्षेपमात्रेण गीतमात्रमनुक्रियते तदा नृत्तमिति ॥ १२७९ ॥

गजरानन्तरं नास्ति यदोपशमनादृते (वादनम्) ॥
पात्रं पादो परा (तदा तदा)रम्भे प्रविशेदिति तद्विदः॥१२८०॥

पात्रप्रवेशस्य पाक्षिकं कालमाह—**गजरेति** । गजरानन्तरमुपराग(शम)वादनं यदा नास्ति तदा पात्रमा(पात्रं तदा)रम्भे गजरारम्भे प्रविशेदिति तद्विद आहुः । यदा गजरानन्तरमुपशमवादनमस्ति तदोपशमारम्भ एव पूर्वोक्तप्रकारेण पात्रप्रवेशः कर्तव्य इति ॥ १२८० ॥

---

१ च. °पवारि° । २ ख. ग. पाठ्यमाने । ३ ख ग. °माख्ये च । ४ च. °कैः । भूभङ्गैर° । ५ च. °रङ्गं समाश्रितः । ६ च. °तः संपन्ननृताङ्गैर्नृताङ्गैरे° । ७ च. पादमात्रं च कथितं मलपोपाचिते सति । रि° । ८ च. °यतैः क्र° । ९ च. समन्वितैः । १० च. °श्च रममाणैर्यदृच्छ° । ११ च. °धं प्रयोगं योगमा° । १२ ख. ग. घ. यदा वर्तनिका क्रिया । पात्रं तद्गजरार° ।

इति पद्धतिरुक्तेयं[1] प्रोक्ता परिविडिर्जने ॥
वादनं समहस्तस्य प्राक्प्रवेशात्परे जगुः ॥ १२८१ ॥

इयं पद्धतिर्लोके जनैः परिविडिरित्युक्ता ॥ १२८१ ॥

समहस्तादिभिः पोटैः[2] सुवृत्तैः पृष्ठसौष्ठवैः[3] ॥
स्थितेन समपादेन प्रवेशं च प्रचक्षते ॥ १२८२ ॥

**समहस्तादिभिरिति** । समहस्तादयः पाट्या(टा?) वाद्याध्यायोक्ता द्रष्टव्याः ॥ १२८२ ॥

केचिदाहुः केवलयोः प्रयोगं गीतवाद्ययोः ॥
एकैकशः प्रयोगोऽपि[4] गीतादेः कैश्चिदिष्यते ॥ १२८३ ॥

**केवलयोर्गीतवाद्ययोः प्रयोगमिति** । गीतवाद्ययोः केवलत्वं समहस्तादिपाटराहित्येन द्रष्टव्यम् । अत्र वाद्यशब्देन मुखवाद्यमुच्यते । तेन तत्प्रबन्धा यत्यादयोऽवगन्तव्याः । अत्रायमर्थः । एलादयो गीतप्रबन्धा यत्यादयो वाद्यप्रबन्धाः स्वस्वोपरञ्जकमुरजादिवादनरहिता अपि नर्तने प्रयोक्तव्या इति केषांचिन्मतम् । अपरेषां मतमाह—**एकैकश इति** । केवलं गीतप्रबन्धानां केवलं वाद्यप्रबन्धानां वा प्रयोग इत्यर्थः ॥ १२८३ ॥

इति शुद्धपद्धतिः ।

अथ गौण्डल्या विधिमाह—

वाद्यप्रबन्धैः कठिनैस्त्यक्तमेलादिभिस्तथा[5] ॥
गीतैः सालगसूडस्थैः प्रबन्धैर्यद्ध्रुवादिभिः ॥ १२८४ ॥
लास्याङ्गैः केवलैरङ्गैः[6] कोमलैश्चैव नृत्यति ॥
स्वयं गायति वाद्यं च त्रिवलीं वादयेत्स्वयम् ॥ १२८५ ॥
तत्पात्रं गौण्डली केचिद्वादनं नात्र मन्वते ॥
त्रिवलीधारणं स्कन्धे ग्राम्यत्वं कुरुते स्त्रियाः ॥ १२८६ ॥
अगायन्ती त्वशारीरा सैव स्यान्मूकगौण्डली ॥
गौडल्या मण्डलं प्रोक्तं तज्ज्ञैः कर्णाटदेशजम् ॥ १२८७ ॥

**वाद्यप्रबन्धैरित्यादि** । कठिनैर्वाद्यप्रबन्धैर्दीप्तनर्तनप्रयोज्यैरोताकवितादिभिस्त्यक्तं वर्जितम् । **एलादिभिर्गीतैस्तथेति** । वर्जितमित्यर्थः । सालगसूडस्थैर्ध्रुवादिभिः प्रबन्धै-

---

१ घ. °यं संप्रोक्ता परिवर्जे° । २ च. पादैः सर्वत्रायस्त्वसौ भवेत् । स्थि° । ३ ख. ग. °वैः । वाद्येन समपाटेन । ङ. °वैः । स्थानेन सम° । घ. °वैः । वाचनं समपाठेन । ४ ख. ग. घ. च. °योगेऽपि । ५ ख. ग. कवितैः श्लक्ष्णमेला° । ६ ख. ग. °ङ्गैः कल्पितश्चाति नृ° । च. °ङ्गैः केवलैरेव चक्षते । स्व° ।

र्लीस्याङ्गैश्चाल्यादिभिः । केवलैः कोमलैरिति । किंचिदप्यनुद्धतैरित्यर्थः* । उक्तैर्ध्रुवादिभिरेव नान्यैरित्यर्थः । यत्पात्रमेतैरेव नृत्यति । स्वयं गायति स्वयं त्रिवलीं वाद्यं वादयेदिति । तूर्यत्रयमप्येकाश्रयं कर्तव्यमिति भावः । तत्पात्रं गौण्डलीत्युच्यते ॥ ११८४ ॥ १२८५ ॥ १२८६ ॥ १२८७ ॥

तस्याश्च नर्तनं प्राहुर्गौण्डलीं लक्षणाश्रयात् ॥
तत्रत्यां पद्धतिं प्राहुस्तद्विदो गौण्डलीविधिम् ॥ १२८८ ॥
सा देशीपद्धतिस्तूक्ता तल्लक्ष्म ब्रूमहेऽधुना ॥
कर्णाटमण्डलैर्युक्तास्तत्र स्युः सांप्रदायिकाः ॥ १२८९ ॥
पूर्ववत्समनादत्वमातोद्यानां विधीयते ॥
मेलापकं वादयेयुरेकताल्यां समाहिताः ॥ १२९० ॥

तस्याश्चेति । तस्या गौण्डल्या नर्तनं लक्षणाश्रयाल्लक्षणाया वृत्तेराश्रयाद्गौण्डलीं प्राहुः । +यथा गङ्गायां घोष इत्यत्र गङ्गाशब्देन तटवद्गौण्डल्या नर्तनमाश्रयाश्रयिभावेन गौण्डलीत्युपचर्यत इत्यर्थः । तत्रत्यामिति । तत्र गौण्डल्यां भवां पद्धतिं गौण्डलीविधिं प्राहुः । सा तु गौण्डलीभवा पद्धतिस्तु देशीपद्धतिरुक्ता । अत्र तुशब्देन शुद्धपद्धतेरुपचारतो मार्गत्वं द्योतितं भवति ॥ १२८८ ॥ १२८९ ॥ १२९० ॥

येन केनापि तालेन गजरे वादिते सति ॥
निःसारणैकताल्या वाऽऽरब्धस्योपशमे सति ॥ १२९१ ॥
पात्रं प्रविश्य रङ्गस्य मध्ये पुष्पाञ्जलिं क्षिपेत् ॥
आविष्कुर्वत्सव्यवामपुरोङ्गाण्यथ नृत्यतः ॥ १२९२ ॥

आरब्धस्योपशमे सतीति । अस्य गजरस्योपशम उपशमाख्ये खण्ड उपक्रान्ते सति । सव्यवामपुरोङ्गाण्याविष्कुर्वदिति । सव्याङ्गानि सव्यभागप्रवर्तितानि । वामाङ्गानि वामभागप्रवर्तितानि । द्विविधानि विषमाङ्गाणीत्युच्यन्ते । पुरोङ्गाणि पुरोभागप्रवर्तितानि समाङ्गानीत्युच्यन्ते । आविष्कुर्वत्प्रकाशयत्पार्थक्येन दर्शयत् ॥ १२९१ ॥ ॥ १२९२ ॥

गजरोपशमेनैव ततः सर्वाङ्गनर्तनम् ॥
अड्डतालं निसारुं चैकतालीं श्रितया ततः ॥ १२९३ ॥
रिगोण्या तालनियमरहिताभ्यामतःपरैः ॥
अवत्सकविताभ्यां च क्रमान्नर्तनमाचरेत् ॥ १२९४ ॥

---

* इत्यर्थ इत्यधिकमिव भाति । + इदं पदमधिकम् ।

---

१ ग. °मवाद्यत्व° २ च. °ल्याऽथवा परे । ये° । ३ ख. ग. °रोदेशेऽङ्गपद्धतिम् ॥१२९२॥ ४ ख. ग. ङ. °ङ्कवर्त° । ५ ख. ग. °परम् । अ° ।

**सर्वाङ्गनर्तनमिति** । सव्यवामपुरोङ्गाणां मिश्राणां नर्तनमित्यर्थः ॥ १२९३ ॥ ॥ १२९४ ॥

**नानाविधं पुनर्नृत्येद्रिगोण्योट्टवणात्मना ॥ १२९५ ॥**

**उट्टवणात्मनेति** । रिगोण्यामप्यादौ वैकल्पिकस्योट्टवणस्योक्तत्वादत्रापि रिगोण्यादौ ललितमुट्टवणं प्रयोक्तव्यमित्यर्थः । तेन रिगोण्युट्टवणात्मा भवति । उट्टवणलक्षणमपि—

"निजैर्वा तद्भितोंहेति व्यापकैरक्षरैस्तथा ।
पाटैर्वा रचिता किंचिद्विलम्बितलयाश्रया ॥
देंकारालंकृताद्यन्ता वदन्त्युट्टवणाममूम्" ॥

इति पूर्वोक्तमनुसंधेयम् । उट्टवण इव चोट्टवणम् । अथवा प्रबन्धान्तरस्याङ्गतया तदादौ वाच्यमाना यतिरेवोट्टवणमित्युच्यते । यथोक्तं प्राक्—

"आदौ वाद्यप्रबन्धस्य कस्याङ्गप्यतया यदा ।
तद्विदो वादयन्त्येनां वदन्त्युट्टवणां तदा" इति ।

तदात्मता वा ज्ञेया ॥ १२९५ ॥

**निवारितेषु वाद्येषु दत्ते स्थानेऽथ वांशिकैः ॥
सह गायति संयुक्तैस्तैः सार्धमथ गौण्डली ॥ १२९६ ॥
उच्चार्य स्थायिनं कुर्याद्रागालप्तिं चतुर्विधाम् ॥
अन्या वा गायनी मुख्या विविधालप्तिमाचरेत् ॥ १२९७ ॥**

**अथ वांशिकैः स्थाने दत्त इति** । स्थानं नाम मन्द्रादिष्वेकतमम् । **चतुर्विधां रागालप्तिमिति** । स्वस्थानचतुष्टययुक्तामित्यर्थः । **विविधालप्तिमिति** । भञ्जनीप्रतिग्रहणकादिनानाभेदयुक्तां रूपकालप्तिं रागालप्तिं चेत्यर्थः ॥ १२९६ ॥ १२९७ ॥

**मण्ठकात्प्रतिमण्ठाच्च तालेनान्येन संयुतम् ॥
सकलं ध्रुवकं गीत्वा जक्कया[2] वाद्यमानया ॥ १२९८ ॥
श्लक्ष्णं ध्रुवाख्यखण्डेन गीयमानेन संततम् ॥
गायनैर्मेलकोपेतैर्मनोव्यक्तिमनोहरम्[3] ॥ १२९९ ॥
नृत्तं किंचिद्विधायाथ शान्तयोर्गीतवाद्ययोः[4] ॥
विधाय विविधस्थायान्मुहुर्ध्रुवपदं व्रजेत् ॥ १३०० ॥**

**मण्ठकात्प्रतिमण्ठाच्चान्येन तालेनेति** । मण्ठकप्रतिमण्ठकव्यतिरिक्तेन देशीताले-

---

१ ख. ग. 'त्ये रिगो' । २ च. टक्कया । ३ ख. ङ. च. 'यकैर्मे' । ४ ख. ग. घ. 'योर्वाद्यगीतयोः ।

ध्वन्यतमेनेत्यर्थः । श्लक्ष्णं मृदु यथा भवति तथा । **वाद्यमानया जक्कयेति** । जक्का नाम यतिरेवोच्यते । यतिर्जक्का च सेति प्रागुक्तत्वात् । तया जक्कया सह मेलकोपेतैर्गायनैः संततं गीयमानेन ध्रुवाख्यखण्डेन ध्रुवकस्य गीतस्य मध्यखण्डेनोपलक्षितम् । **मनोव्यक्तिमनोहरमिति** । मनो नाम प्रागुक्तलक्षणं लास्याङ्गम् । तस्याभिव्यक्त्या मनोहरं नृत्तम् । किंचिद्विधायाल्पमेव कृत्वा । अथानन्तरं गीतवाद्ययोः शान्तयोः सतोर्विविधस्थायान्बहुप्रकारान्रागावयवान्विधाय । **ध्रुवपदं मुहुर्व्रजेदिति** । नर्तकीकर्तृकत्वेन विधानान्मध्ये मध्ये विविधस्थायानां नर्तनं कृत्वा मुहुर्मुहुर्ध्रुवपदस्यापि नर्तनं कुर्यादित्यर्थः ॥ १२९८ ॥ १२९९ ॥ १३०० ॥

मध्ये मध्ये विधेयान्स्थायान्विशेषाद्दर्शयति—

**कांश्चिद्गीतस्य तालेन गीततालाक्षरैः परान् ॥**
**नातिदीर्घान्नातिनीचान्माधुर्यप्रौढिपेशलान् ॥ १३०१ ॥**
**रक्तियुक्तान्वितांस्ता(ना ता)लं यदि वाऽऽदौ विधाय तान् ॥**
**सुतालकलितप्रान्तान्ध्रुवखण्डे कलासयेत् ॥ १३०२ ॥**

**कांश्चिदित्यादि । गीतस्य तालेनेति ।** गीते यस्तालस्तन्मात्रायुक्तान्गीताक्षररहितानित्यर्थः । परानन्यान्गीततालाक्षरैर्युक्तान् । पक्षान्तरमाह—**यदि वेति** । तान्स्थायानादौ प्राग्भागे तालं विना ततः सुतालकलितप्रान्तांश्चरमभागे शोभनतालयुक्तान्विधाय ध्रुवखण्डे कलासयेन्नर्तनं समापयेदित्यर्थः ॥ १३०१ ॥ १३०२ ॥

**कलासे वाद्यघातं च कुर्युः साम्येन वादकाः ॥**
**कलासेषु भवेत्पात्रं लीनं चित्रार्पितं यथा ॥ १३०३ ॥**

कलासे कलासावसरे । वादकाश्च मुरजादिवादकाश्च साम्येन कालसाम्येनैककालमित्यर्थः । वाद्यघातं स्वस्ववाद्यानां घातं ताडनं कुर्युः । एतेन तस्मिन्कलासे तालस्य घातकाले प्राप्तेऽपि तत्राऽऽघातः कर्तव्य इति विहितो भवति । तस्यापि घनवाद्यत्वेन वाद्यत्वाविशेषात् । किं च कलासेषु पात्रं चित्रार्पितं यथा चित्रलिखितमिव लीनं निश्चलं भवेत् ॥ १३०३ ॥

**एवं कुर्वत्प्रक्रियायां कृतायां पूर्ववत्पुनः ॥**
**नृत्तं समाचरेत्पात्रं गीयमाने ध्रुवांशके ॥ १३०४ ॥**

**एवं कुर्वदिति ।** उक्तप्रकारेण कलासं कुर्वत् । **पुनः प्रक्रियायां कृतायां सत्यामिति ।** मध्ये मध्ये स्थायेषु प्रयुक्तेषु सत्स्वित्यर्थः । ध्रुवांशके ध्रुवस्यांशभूते ध्रुवाख्ये खण्डे गीयमाने सति नृत्तं समाचरेत् ॥ १३०४ ॥

---

१ च. 'क्षरैरपि । ना' । २ ख. ग. घ. ङ. 'चान्नामकाप्रौढि' । ४ ङ 'न् । भुवाल' । च. 'न् । सुताय ललितान्ता तुं ध्रु' ।

आभोगेनार्थ नृत्येच्च वाद्यमानेन वादकैः ॥ १३०५ ॥
गौण्डल्योजोन्विता सा स्यात्त्यागे संनिहिते सति ॥
नानाविधप्रौढचारीचालकं नृत्तमाचरेत् ॥ १३०६ ॥
अत्र प्रहरणं वाद्यमाभोगेऽप्येतदिष्यते ॥
कृत्वाऽथ वाद्यसौम्येन त्यागं विश्रान्तिमाचरेत् ॥ १३०७ ॥

अथानन्तरं वादकैर्वाद्यमानेन सा(नेनाऽऽ)भोगेन ध्रुवान्त्यखण्डेन नृत्येत् । त्यागे गीतसमाप्तौ संनिहिते सति सा गौण्डली नर्तक्योजोन्विता बलयुक्ता स्यात्। तदा तथाभूता सती । नानाविधप्रौढचारीचालकम् । चायश्च चालकाश्चेति द्वंद्वः । प्रौढाश्च ते चारीचालकाश्चेति कर्मधारयः । नानाविधाः प्रौढचारीचालकाश्चे(का यस्मिन्नि) ति बहुव्रीहिः। तादृशं नृत्तमाचरेत् । अत्राऽऽभोगेऽप्येतत्प्रहरणं वाद्यमिष्यत इति । अत्रापिशब्देन ध्रुवखण्डान्तेऽपि प्रहरणं वाद्यप्रयोगो द्योत्यते । अथ वाद्यसाम्येन त्यागं कृत्वा विश्रान्तिमाचरेत् ॥ १३०५ ॥ १३०६ ॥ १३०७ ॥

कृत्वा नृत्तं ध्रुवेणैवं ध्रुववन्मण्ठकादिभिः ॥
क्रमान्नृत्त त्रि(त्येद्वि)शेषस्तु तेषामेषोऽभिधीयते ॥ १३०८ ॥

ध्रुवोक्तं मण्ठादिष्वतिदिशति—ध्रुववन्मण्ठकादिभिः क्रमान्नृत्येदिति । मण्ठादिषु विशेषं वक्तुमाह—विशेषस्त्विति ॥ १३०८ ॥

मण्ठादेर्ध्रुवखण्डेन केवलं नर्तनं भवेत् ॥
मण्ठे तु मण्ठतालेन प्रारम्भे नर्तनं मतम् ॥ १३०९ ॥

मण्ठादेर्ध्रुवखण्डेन केवलं नर्तनं भवेदिति । *ध्रुवस्य ध्रुवखण्डवत्स्थायिप्रयोगो न कर्तव्य इत्यर्थः । अयं च निषेधो यत्र ध्रुवमारभ्य सूडक्रमेण नर्तनं क्रियते तत्रैव द्रष्टव्यः । यत्र तु मण्ठादिष्वन्यतममारभ्य वा मण्ठादेरेकैकस्य वा प्राधान्येन नर्तनं क्रियते तत्राऽऽरब्धे मण्ठादौ स्वतन्त्रे वा मण्ठादौ स्थायिप्रयोगः कर्तव्य एवेति संप्रदायोऽवगन्तव्यः ॥ १३०९ ॥

ततः स्यादेकतालयैव मण्ठनृत्तं क्रमात्क्रमात् ॥
नर्तनं प्रतिमण्ठादौ स्वतालेनैव कीर्तितम् ॥ १३१० ॥

प्रतिमण्ठादौ स्वतालेनैवेति मण्ठाद्वैषम्योक्तिः ॥ १३१० ॥

एषु सालगगीतेषु नृत्तं द्रुतलयाश्रयम् ॥
विलम्बितो लयस्तूक्तस्ताण्डवे पण्डितैः सदा ॥ १३११ ॥

---

* इदमधिकमिव भाति ।

---

१ च. °थ नर्तेत वा° । २ च. °साध्येन । ३ ख. ग. °श्रान्तमा° । घ. °श्रामभा° । ४ ङ. °नृत्ये वि° । ५ ङ. च. °मेव विधौ° । ६ ख. ग. °त्स्थायिप्र° । ७ ख. ग. स्थायिप्र° । ८ ख. ग. घ नृत्यं । ९ घ. ङ. च. °याश्रितम् ।

**सालगगीतेषु द्रुतलयाश्रयं नृत्तमिति** । ते(ए)षु [सालग]गीतेषूक्तस्य नृत्तस्य लास्यप्रायत्वेन मृदुत्वादस्य विलम्बलययोगे सत्यत्यन्तमृदुत्वप्रतीत्या सामाजिकानां प्रीतिं [न ?] जनयति । द्रुतलययोगे तु लास्यगतसौकुमार्यस्य परभागाच्छोभा भवति । ***तथा ताण्डवे तु विलम्बितलय इति** । ताण्डवस्योद्धतत्वेन तस्य द्रुतलययोगे सत्युद्धत[तमत्व]प्रतीतेः पूर्वोक्त एव दोषः । विलम्बलययोगे तु पूर्ववत्परभागसंभवाद्‍दृश्यत्वं भवतीत्यभिप्रायः । यथा लोके नीलवस्त्रे निक्षिप्तं मुक्ताफलं शुभ्रांशुके वा निहितमिन्द्रनीलं नितरां शोभते तथेत्यर्थः ॥ १३११ ॥

**रूपकैरेकतालयन्तैरेवं सालगसूडगैः ॥**
**नर्तित्वा क्रियते त्यागो यत्रासौ गौण्डलीविधिः ॥ १३१२ ॥**

**रूपकैरिति** । एवमुक्तप्रकारेणैकतालयन्तैः सालगसूडगै रूपकैर्द्रुतादिभिः सप्तभिर्गीयते यत्र(भिर्यत्र गीते) नर्तित्वा त्यागः क्रियतेऽसौ गौण्डलीविधिः ॥ १३१२ ॥

इति गौण्डलीविधिः ।

अथ पेरणिनो लक्षणमाह—

**भस्मादिश्वेतलिप्ताङ्गो बिभ्रन्मुण्डं शिरः शिखाम् ॥**
**भ्राजद्घर्घरिकाजालजङ्घः शारीरपेशलः ॥ १३१३ ॥**
**पञ्चाङ्गकुशलस्तालकलालयविचक्षणः ॥**
**सभाजनमनोहारी यो नृत्यति स पेरणी ॥ १३१४ ॥**
**घर्घरो विषमं भावाश्रयश्च कविचारकः ॥**
**गीतं चेति समाचष्ट पञ्चाङ्गानि हरप्रियः ॥ १३१५ ॥**

**भस्मादीत्यादि** । भस्मादिना श्वेतवर्णकद्रव्योप(व्येण)लिप्ताङ्गो मुण्डं व्यपरोपितकेशं शिरः शिखां च बिभ्रत् । **भ्राजद्घर्घरिकाजालजङ्घ इति** । पेरणिनो नर्तनस्य चारीप्रधानत्वेन चारीकरणप्रयत्नेनैव वादनीया जङ्घयोर्बद्धा घनवाद्यभेदः किङ्किणी घर्घरिकेत्युच्यते । तस्या एकस्या एव नादव्यक्तेरभावान्नादपुष्टै ता बहवो ग्राह्याः । अतो जालमित्युक्तम् । घर्घरिकाणां जालं भ्राजत्स्वाकारेण नादेन च शोभमानं घर्घरिकाजालं ययोस्ते भ्राजद्घर्घरिकाजाले तादृशे जङ्घे यस्य स तथोक्तः । **शारीरपेशल इति** । सुशरीर इत्यर्थः । एतेन पेरणिनैवावश्यं गातव्यमित्युक्तं भवति । **पञ्चाङ्गकुशल इति** । घर्घरादीनि पञ्चाङ्गान्यनुपदमेव वक्ष्यन्ते । तेषु कुशलः ॥१३१३॥१३१४॥ ॥ १३१५ ॥

---

* तथेत्यधिकम् ।

१ ख. ग. °भागतशोभा । २ ख. ग. शुद्धांशु° । ३ ख. ग. घ. °त्राऽऽसौ गौण्ड° । ङ. °त्रासो गौ° । ४ ग. शिखी । ५ च. °मं तालाश्र° ।

तत्र घर्घरं लक्षयति—

तत्र घर्घरिकावाद्ये वहनिर्घर्घरो मतः ॥ १३१३ ॥

घर्घरिकावाद्ये वहनिरिति । वहनिरभ्यासविशेषः ॥ १३१६ ॥

पटिवाटश्चापडपः सिरिपिस्थलगादिमः ॥
वाटः सिरिहिराख्यश्च ततः खेलुहुलाह्वयः ॥
इति घर्घरभेदाः स्युः षडमी तद्विदां मताः ॥ १३१७ ॥

तस्य घर्घरस्य षड्भेदानाह—पटिवाट इत्यादि । अलिगादिमः पाटोऽलगपाट इत्येकः । पटिवाटादयः संज्ञा देशीप्रसिद्धत्वेन रूढा द्रष्टव्याः ॥ १३१७ ॥

भूमिलग्नाग्रयोरङ्घ्र्योः पर्यायाद्भूमिकुट्टनम् ॥
पार्ष्णिद्वयेन पार्ष्ण्या वैकया स्यात्पटिवाटकः ॥ १३१८ ॥
भवेच्चापडपः पादतलेनावनिकुट्टनम् ॥
तलेन भूमिलग्नेन पादस्य सरणं पुरः ॥ १३१९ ॥
तथाऽपसरणं पश्चान्मुहुः सिरिपिटी भवेत् ॥
द्वयोश्चरणयोर्व्योम्नि पर्यायेण प्रकम्पनम् ॥ १३२० ॥
यत्कृतं कोमलं सोऽत्रालगवाटः प्रकीर्तितः ॥
सत्येकस्मिन्समे पादेऽङ्घ्रिः पुरः प्रेरितो भवेत् ॥ १३२१ ॥
यस्तस्य जङ्घया कम्पः प्रोक्तः सिरिहिरो बुधैः ॥
यदा द्वयोः स्वभावेन तिष्ठतोः पादयोर्भुवि ॥ १३२२ ॥
जङ्घयोः कम्पनं प्राहुर्धीराः सिरिहिरं तदा ॥
भूलग्नाग्रस्य वामाङ्घ्रेः पार्ष्ण्या यद्भूमिकुट्टनम् ॥ १३२३ ॥
भूलग्नाग्रस्य चान्यस्य भ्रमः सव्यापसव्यतः ॥
योऽसौ खलुहुलः प्रोक्तो घर्घरो नृत्तकोविदैः ॥ १३२४ ॥
दिशाऽनया परेऽप्यूह्या घर्घराः शोभयाऽन्विताः ॥
सर्वे घर्घरभेदास्ते कार्यास्तालानुगामिनः ॥ १३२५ ॥

एतेषां लक्षणानि ग्रन्थत एव सुबोधानि ॥ १३१८ ॥ १३१९ ॥ १३२० ॥ ॥ १३२१ ॥ १३२२ ॥ १३२३ ॥ १३२४ ॥ १३२५ ॥

विषमाख्यमङ्गमाह—

अत्र चोत्प्लुतिपूर्वं स्यात्करणं विषमाभिधम् ॥
विकृतार्थानुकारस्तु बुधैर्भावाश्रयो मतः ॥ १३२६ ॥

---

१ च. °वाद्यैराहातिर्घ° । २ च. °वाटिश्चा° । ३ व. सिरहरा° । ४ च. खरुकुलाह्वयम् । ५ च. °कुट्टने । त° । ६ ख. ग घ. °हुर्जङ्घासि° । ७ ख. ग. घ. भूमिलग्नाग्रवा° । ८ ख. ग. घ. तत्र ।

**अत्र चेति**। उत्प्लुतिपूर्वं करणं पूर्वोक्तमञ्चितादिषट्त्रिंशद्भेदभिन्नम्। भावाश्रयाख्यमङ्गं लक्षयति—**विकृतार्थानुकार इति**। पेरणिना सामाजिकानां हास्योत्पादनाय क्रियमाणं विकृतपदार्थानुकरणं यद्विधीयते स भावाश्रयः॥ १३२६॥

**कविचारो भवेदत्रोत्तमनायकवर्णनम्॥**
**अत्र स्यात्सालगं गीतं यदुक्तं गौण्डलीविधौ॥ १३२७॥**

कविचारं लक्षयति—**उत्तमनायकवर्णनमिति**। गीताख्यमङ्गमाह—**अत्र स्यात्सालगं गीतमिति**। सालगं गीतं ध्रुवादिकम्॥ १३२७॥

इति पेरणिलक्षणम्।

**गौण्डलीविधिवच्चात्र रङ्गस्थाः सांप्रदायिकाः॥**
**कुर्युर्गम्भीरमातोद्यध्वनिं धिधिधिधीति ते॥ १३२८॥**

अथ पेरणिनः पद्धतिमाह—**गौण्डलीविधिवच्चात्रेत्यादि**। अत्रातिदेशेन वादकानां नादसाम्यं (म्य)करणं गृह्यते॥ १३२८॥

**ततो विलम्बितप्राये रिगोण्युट्टवणाश्रये॥ १३२९॥**
**पादत्रये वाद्यमाने द्विर्द्विर्निःसारुतालतः॥**
**विशेद्विकृतवाग्वेषभूषो रङ्गेऽट्टवोडकैः॥ १३३०॥**
**तस्मिन्नृत्यति हास्यैकरसे विशति पेरणी॥**
**रिगोण्युपशमेनैष प्रविष्टो नृत्तमाचरेत्॥ १३३१॥**

**रिगोण्युट्टवणाश्रय इति**। रिगोण्युट्टवणं पूर्वोक्तमनुसंधेयम्। अट्टवोडक इति सकलशिरोमुण्डिताभिधायी देशीशब्दः॥ १३२९॥ १३३०॥ १३३१॥

**प्रशान्ते वाद्यसंघाते ततस्तालधरैः समम्॥**
**वाद्यमाने सुनिपुणं ताले गारुगिसंज्ञके॥ १३३२॥**

**संज्ञके ताल इति**। "गारुगिस्तु चतुर्द्रुता। विरामान्ता" इति पूर्वोक्तं तल्लक्षणमनुसंधेयम्॥ १३३२॥

**यद्वा सरस्वतीकण्ठाभरणे वादकैस्तथा॥**
**क्रियमाणे मर्दलाद्यैर्मण्डितालसमध्वनौ॥**
**पेरणी घर्घरान्कुर्यान्नाना चापडपादिकान्॥ १३३३॥**
**ततः कूटनिबद्धेन यद्वा वर्णसरात्मना॥**
**कवितेनैष विषमं नृत्येन्निःसारुतालतः॥ १३३४॥**

---

१ ङ. च. 'ङ्गेऽड्डवोडकः। २ च. 'कः। अस्मि'। ३ च. प्रवृत्तो। ४ च. 'लानां मन्दे तालं न्यसेद्ध्वनौ। ५ ङ. 'समे ध्व'। ६ च. 'तः पाट'।

यद्वेति पक्षान्तरम् । सरस्वतीकण्ठाभरण इति । "द्वौ गुरू द्वौ लघुद्रुतौ । ताले सरस्वतीकण्ठाभरणे शार्ङ्गिसंमतौ" इति लक्षणमप्यनुसंधेयम् । चापडपादिकान्नाना कुर्यादिति संबन्धः ॥ १३३३ ॥ १३३४ ॥

ततः सालगसूडेन नृत्ते तत्र च दर्शयेत् ॥
रेखां च स्थापनां हृद्या वहनीर्गीतनर्तनम् ॥ १३३५ ॥
विषमं च प्रहरणानुगमाभोगवादने ॥
कविचारांस्तथा भावाश्रयान्पेरणिपद्धतौ ॥ १३३६ ॥

हृद्या वहनीरिति । हृदयंगमान्वर्धरिकावाद्यवादनप्रकारानित्यर्थः । प्रहरणं वाद्यप्रबन्धानां विशेषः । तदनुगच्छत्यनुकरोतीति तथोक्तम् । विषमं पूर्वोक्तमुत्प्लुतिकरणम् ॥ १३३५ ॥ १३३६ ॥

इति पेरणीपद्धतिः ।

तौर्यत्रये[1] लक्ष्यलक्ष्मवेद्याचार्यः प्रकीर्तितः ॥
वाग्ग्मी सुरूपवेषोऽसौ सुरसस्तुतिकोविदः[2] ॥
सभासु परिहासज्ञो भवेद्वादनवाद्यवित्[3] ॥ १३३७ ॥

अथाऽऽचार्यं लक्षयति—तौर्यत्रय[4] इत्यादि ॥ १३३७ ॥

इत्याचार्यः ।

नटं लक्षयति—

चतुर्धाभिनयाभिज्ञो नटो भाणादिभेदवित्[5] ॥ १३३८ ॥

चतुर्धेत्यादि । भाणादिभेदविदिति । भाणो नाम नाटकादिषु रसाश्रयेषु दशरूपकेष्वेको रूपकभेदः । आदिशब्देन प्रहसनादीनि रूपकाणि गृह्यन्ते ॥ १३३८ ॥

इति नटः ।

नर्तकः सूरिभिः प्रोक्तो मार्गनृत्ते कृतश्रमः ॥ १३३९ ॥

नर्तकं लक्षयति—मार्गनृत्ते कृतश्रम इति । मार्गनृत्तं करणाङ्गहाराद्यात्मकं नृत्तम् । तत्र कृताभ्यासः ॥ १३३९ ॥

इति नर्तकः ।

सर्वभाषाविशेषज्ञो[6] जनानां नर्मकर्मदः ॥
पटुः परापवादेषु स्मृतो वैतालिको बुधैः ॥ १३४० ॥

वैतालिकं लक्षयति—सर्वभाषेत्यादि ॥ १३४० ॥

इति वैतालिकः ।

---

१ ख. ग. घ. ङ. तूर्यत्रये । २ ख. ग. स चारुप॰ । ३ ख. ग. घ. ॰वेद्वहनिकां दधत् । ङ. ॰येद्वद॰ । ४ ख. ग. तूर्यत्रय । ५ च. भाषादि॰ । ६ ख. ग. घ. ॰ज्ञो यो नाना नर्म॰ ।

किङ्किणीवाद्यवेदी च वृत्तो विकटनर्तकैः ॥
मर्मज्ञः सर्वरागेषु चतुरश्चारणो मतः ॥ १३४१ ॥

चारणं लक्षयति—किङ्किणीत्यादि ॥ १३४१ ॥

इति चारणः ।

भारस्य भूयसो वोढा प्रौढो[1] भ्रमरिकादिषु ॥
रज्जुसंचारचतुरश्छुरिकानर्तने कृती[2] ॥
शस्त्रसंकटसंपातपटुः कोह्लाटिको मतः ॥ १३४२ ॥

कोह्लाटिकं लक्षयति—भारस्येत्यादि ॥ १३४२ ॥

इति कोह्लाटिकः ।

मध्यस्थाः सावधानाश्च वाग्मिनो न्यायवेदिनः ॥
त्रुटितात्रुटिताभिज्ञा विनयानम्रकंधराः ॥ १३४३ ॥
अगर्वा रसभावज्ञास्[3]तौर्यत्रितयकोविदाः ॥
असद्वादनिषेद्धारश्चतुरा मत्सरच्छिदः ॥
अमन्दरसनिष्यन्दिहृदयाः स्युः सभासदः ॥ १३४४ ॥

सभासदो लक्षयति—मध्यस्था इत्यादि ॥ १३४३ ॥ १३४४ ॥

इति सभासदः ।

शृङ्गारी भूरिदो मा[4]न्यो मान्यपात्रविवेचकः ॥
श्रीमान्गुणलवस्यापि ग्राहकः कौतुके रतः ॥ १३४५ ॥
वाग्मी निर्मत्सरो नर्मनिर्माणनिपुणः सुधीः ॥
गम्भीरभावः कुशलः सकलासु कलासु च ॥ १३४६ ॥
समस्तशास्त्रविज्ञानसंपन्नः कीर्तिलोलुपः ॥
प्रियवाक्परिचित्तज्ञो मेधावी धारणान्वितः ॥ १३४७ ॥
तूर्यत्रयविशेषज्ञः पारितोषिकदानवित् ॥
सर्वोपकरणोपेतो देशीमार्गविभागवित् ॥ १३४८ ॥
हीनाधिकविवेकज्ञः प्राज्ञो मध्यस्थधीरधीः ॥
स्वाधीनपरिवारश्च भावको रस[5]निर्भरः ॥ १३४९ ॥
सत्यवादी कुलीनश्च प्रसन्नवदनोत्तरः ॥
स्थिरप्रेमा कृतज्ञश्च करुणावरुणालयः ॥
धर्मिष्ठः पापभीरुश्च विद्वद्बन्धुः सभापतिः ॥ १३५० ॥

---

१ ख. ग. घ. °ढो मकरादि° । २ ख. ग. घ. °ती । अत्र° । ३ ङ. °ज्ञास्तूर्य° । ४ ङ. मान्यमानी पा° । च. मान्यामान्य° । ५ च. °सर्वोविदः । स° ।

सभापतिं लक्षयति—**शृङ्गारीत्यादि** ॥ १३४५ ॥ १३४६ ॥ १३४७ ॥ ॥ १३४८ ॥ १३४९ ॥ १३५० ॥

इति सभापतिलक्षणम् ।

**विचित्रा नृत्यशाला स्यात्पुष्पप्रकरशोभिता ॥**
**नानावितानसंपन्ना रत्नस्तम्भविभूषिता ॥ १३५१ ॥**
**तस्यां सिंहासनं रम्यमध्यासीनः सभापतिः ॥**
**वामतोऽन्तःपुराणि[1] स्युः प्रधाना दक्षिणेन तम् ॥ १३५२ ॥**
**पृष्ठभागे प्रधानानां कोशः श्रीकरणाधिपः ॥**
**तत्संनिधौ तु विद्वांसो लोकवेदविशारदाः ॥ १३५३ ॥**
**रसिकाः कवयोऽप्यत्र चतुराः सर्वरीतिषु[2] ॥**
**मान्याञ्ज्योतिर्विदो वैद्यान्विद्वन्मध्ये निवेशयेत् ॥ १३५४ ॥**
**स्याद्वामेतरभागे तु मन्त्रिणां[3] परिमण्डलम् ॥**
**तत्रैव सैन्यमान्यानामन्येषामुपवेशनम् ॥ १३५५ ॥**
**विलासिनो विलासिन्यः परितोऽन्तःपुराणि च ॥**
**पुरतोऽपि नृपस्य स्युः पृष्ठभागे तु भूपतेः ॥ १३५६ ॥**
**चारुचामरधारिण्यो रूपयौवनसंभृताः ॥**
**स्वकङ्कणझणत्कारनिर्वाणजनमानसाः ॥ १३५७ ॥**
**अग्रिमा वामभागे स्युरग्रे वाग्गेयकारकाः ॥**
**कथका वन्दिनश्चात्र विद्यावन्तः प्रियंवदाः ॥ १३५८ ॥**
**प्रशंसाकुशलाश्चान्ये चतुराः सर्वमातुषु ॥**
**ततः परं तु परितः परिवारोपवेशनम् ॥ १३५९ ॥**
**अधिष्ठितं सदः कार्यं दक्षैर्वेत्रधरैर्नरैः ॥**
**अङ्गरक्षास्तु तिष्ठेयुः सर्वतः शस्त्रपाणयः ॥ १३६० ॥**

अथ सभास्थानं तत्र सामाजिकानां संनिवेशं चाऽऽह—**विचित्रेत्यादि** ॥ १३५१ ॥ ॥ १३५२ ॥ १३५३ ॥ १३५४ ॥ १३५५ ॥ १३५६ ॥ १३५७ ॥ १३५८ ॥ ॥ १३५९ ॥ १३६० ॥

**संनिवेश्य सभामेवं नेता संगीतमीक्षते ॥ १३६१ ॥**

**एवमिति** । उक्तप्रकारेण सभां सामाजिकसमूहं संनिवेश्य यथासंस्थानं स्थापयित्वा नेता नायक उक्तगुणः सभापतिः । संगीतमानन्दातिशयोत्पादसाधनं तूर्यत्रयं गीतवा-

१ च. 'राण्यस्य प्र' । २ ख. ग. घ. 'षु । पुमाश्च्यों' । ३ च. मित्राणां ।

घनृत्यानां मेलनमित्यर्थः । ईक्षतेऽवहितमना भूत्वा विलोकयेदिति नियमोऽनुसंधेयः ॥ १३६१ ॥

इति सभासंनिवेशः ।

एवं संगीतस्वरूपनिरूपणानन्तरं रसनिरूपणसंगतिं दर्शयन्रसप्रकरणमारभते—

**रसप्रधानमिच्छन्ति तौर्यत्रिकमिदं विदः[1] ॥**
**तत्सामान्यविशेषाभ्यामधुनाऽभिदधे रसम् ॥ १३६२ ॥**

**रसप्रधानमित्यादि ।** विदो विद्वांसः । इदं तौर्यत्रयं संनिहितपूर्वकालमेवोक्तलक्षणत्वाद्बुद्धिस्थितस्य तूर्यत्रयस्येदमा प्रत्यक्षविषयेण निर्देश उपपन्न एव । **रसप्रधानमिच्छन्तीति ।** रसो नाम विभावैरित्यादिना वक्ष्यमाणलक्षणो धीविशेष इच्छाविशेषो वा । स प्रधानं यस्य स तत्तथोक्तम् । तूर्यत्रय(तौर्यत्रिक)स्य रसाविर्भावसाधनत्वेनाङ्गत्वम् । रसस्य तत्साधनत्वेनाङ्गित्वमित्यर्थः । यत एवं तत्तस्मात्कारणात्—**रसं सामान्यविशेषाभ्यामभिदध इति ।** रसशब्दाभिधेयस्य स्वरूपनिरूपणं सामान्येनाभिधानं शृङ्गारादिशब्दानां स्वरूपनिरूपणं विशेषाभिधानम् ॥ १३६२ ॥

**विभावैरनुभावैश्च नटस्थैर्व्यभिचारिभिः ॥**
**जनिताऽऽत्मपरामित्रमित्राद्याश्रयतां विना ॥ १३६३ ॥**
**अवस्थादेशकालादिभेदसंभेदवर्जितम् ॥**
**केवलं रतिहासादिस्थायिरूपं प्रगृह्णती ॥ १३६४ ॥**
**अतो निरन्तरायत्वात्परां[2] विश्रान्तिमाश्रिता ॥**
**प्रतिभानुभवस्मृत्याद्यन्यबोधविलक्षणा[3] ॥ १३६५ ॥**
**ब्रह्मसंविद्विसदृशी[4] नानारत्यादिसंगमात् ॥**
**सुखरूपा स्वसंवेद्या संविदास्वादनाभिधा ॥**
**रसः स्यादथवा स्थायी रसस्तद्गोचरीभवन्[5] ॥ १३६६ ॥**

तत्र सामान्यलक्षणमाह—**विभावैरित्यादि ।** विभावो(वा) नाम लोके स्थाय्यादिभावानां "दृष्टा ये जन्महेतवः" इत्यादिना वक्ष्यमाणलक्षणाः । अनुभावो(वा) नाम "भावानां यानि कर्माणि" इत्यादिना वक्ष्यमाणलक्षणाः । व्यभिचारिणोऽपि "स्तोकैर्विभावैरुत्पन्नाः" इत्यादिना वक्ष्यमाणलक्षणाः । नटस्थैरिति विभावादीनां विशेषणम् । तेन लौकिकरसो व्यावर्त्यते । **जनितेति ।** उक्तैर्विभावादिभिर्जनिता सामाजिकेषूत्पादिता । आत्माऽहमितिप्रत्ययविषयः । परोऽन्यः । अन्यस्मिन्नप्ययममित्र इदं मित्रम् ।

---

१ च. घ. बुधाः । २ ख. ग. °तान्यप° । ३ घ. °त्याद्येनावोधवि° । च. °त्याद्यन्यतोऽथवि° । ४ च. °विसिस° । ५ ख. ग. च. भवेत् ।

आदिशब्देनायमुदासीन इत्युदासीनो गृह्यते। एवमात्मादिराश्रयो विषयो यस्याः। साऽऽत्मपरामि[त्रमि]त्राद्याश्रया। तस्या भावस्तत्तेति वक्ष्यमाणायाः संविदो धर्मः। तां विना। **अवस्थेत्यादि**। अवस्थाभेदा जाग्रत्स्वप्नसुषुप्तयः। देशभेदाः पुरग्रामादयः। कालभेदा अहोरात्रादयः। आदिशब्देन ब्राह्मणादयो वर्णभेदा गृहस्थत्वादय आश्रमभेदाः पांचकपाठकादयोऽन्येऽपि गृह्यन्ते। तैः संभेदः संपर्कः। तेन वर्जितम्। अत एव केवलं रतिहासादिस्थायिरूपम्। रतिः शृङ्गाररसस्य स्थायिभावो वक्ष्यते। हासो हास्यरसस्य। आदिशब्देन करुणस्य शोक इत्यादिकं द्रष्टव्यम्। एवंविधं स्थायिरूपं प्रगृह्णती स्वीकुर्वती। **अत इति**। उक्तकारणान्निरन्तरायत्वाद्विघ्नरहितत्वात्परामुत्कृष्टां विश्रान्तिं विस्रम्भमाश्रिता। **प्रतिभेत्यादि**। प्रतिभा नाम सूक्ष्मसूक्ष्मार्थग्राहकं भविष्यद्वस्तुविषयं ज्ञानम्। अनुभवो नाम वर्तमानवस्तुविषयं ज्ञानम्। स्मृतिर्नामातीतवस्तुविषयं ज्ञानम्। आदिशब्देन संशयविपर्ययौ गृह्येते। प्रतिभादिष्वन्योऽन्यतमो बोधो ज्ञानं तद्विलक्षणा। प्रतिभादिबोधेष्वन्यतमस्यापि न सदृशीत्यर्थः। प्रतिभादिवैलक्षण्यं ब्रह्मसंविदोऽपि विद्यत इति। तयोः(या) सादृश्यमाशङ्क्य तस्या अपि वैलक्षण्यं सहेतुकं दर्शयति—**ब्रह्मसंविद्विसदृशीति**। नानारत्यादिसंगमाद्बहुधाभूतरत्यादिस्थायिभावसंबन्धाद्धेतोर्ब्रह्मसंविदो वैसादृश्यमुक्त्वांऽशान्तरैः सच्चिदानन्दरूपैस्तत्सादृश्यमप्याह—**सुखरूपेत्यादि**। सुखरूपेत्यनेनाऽऽनन्दरूपता स्वसंवेद्येत्यनेन चिद्रूपताऽऽस्वादनाभिधेत्यनेन सद्रूपता च दर्शितेत्यवगन्तव्यम्। एवंविधा संविद्रसः स्यादित्यन्वयः। कैश्चित् "स्थायी भावो रसः स्मृतः" इत्युक्तत्वात्तन्मतमनुस्मृत्याऽऽह—**अथ वेति**। तद्गोचरीभवंस्तस्या उक्तरूपायाः संविदो गोचरीभवन्विषयत्वेन प्रतीयमानः स्थायी रत्यादिको भाव एव रसः स्यात्॥ १३६३ ॥ १३६४ ॥ १३६५ ॥ ॥ १३६६ ॥

**दध्यादिव्यञ्जनैश्चैव हरिद्रादिभिरौषधैः॥**
**मधुरादिरसोपेतैर्यद्वद्द्रव्यैर्गुडादिभिः॥ १३६७ ॥**
**युक्तैः पाकविशेषेण षाडवाख्योऽपरो रसः॥**
**उत्पाद्यते विभावाद्यैः प्रयोगेण तथा रसः॥ १३६८ ॥**

"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इत्यस्य **भरतसूत्रस्यार्थमनुसंधाय** लोकसिद्धभोजनरसदृष्टान्तपूर्वकमाह—**दध्यादिव्यञ्जनैरित्यादिना**। अत्र विभावा दध्यादिस्थानीयाः। संचारिणश्चिश्चाहरिद्राद्यौषधस्थानीयाः। अनुभावा गुडादिद्रव्यस्थानीया इति मन्तव्याः। पाकविशेषस्थानीयोऽपरोऽन्य उत्कृष्टश्च। मधुरादिभ्यः षड्भ्योऽन्यस्तेषां संसर्गरूपत्वात्। अत एव तेभ्य उत्कृष्टश्च। **षाडवाख्य इति**।

१ ग. पावक°। २ ङ. °र्यथा द्रव्यै°। ३ ज. °र्थमभिधा°। ४ ग. °षां समग्ररू°।

षड्भिर्मधुरादिभिर्निर्वृत्तः षाडवः । षाडव इत्याख्या यस्य स तथोक्तः । अत्रापि रत्यादिभ्योऽन्य उत्कृष्टश्च शृङ्गारादिको रसो द्रष्टव्यः ॥ १३६७ ॥ १३६८ ॥

**शृङ्गारहास्यौ करुणो रौद्रो वीरो भयानकः ॥**
**बीभत्सश्चाद्भुतः शान्तो नवधेति रसो मतः ॥ १३६९ ॥**

एवं सामान्येन रसमभिधाय तद्विशेषानुद्दिशति—**शृङ्गारहास्यावित्यादि**॥१३६९॥

**शान्तस्य शमसाध्यत्वान्नटे च तदसंभवात् ॥**
**अष्टावेव रसा नाट्येष्विति केचिदचूचुदन् ॥ १३७० ॥**

अत्र कैश्चिच्छान्तव्यतिरिक्ताः शृङ्गारादयोऽष्टावेव नाट्यरसत्वेनोक्ताः । शान्तेन सह कथं नवधेत्युद्देश उपपन्न इति चोद्यं परिजिहीर्षुरादौ तन्मतमनुभाषते—**शान्तस्येत्यादि** । **शमो** नाम सर्वेन्द्रियव्यापारोपरमात्मकः शान्तस्य स्थायी । **नटे च तदसंभवादिति** । नटे ईषच्चलनयुक्ते[2] तु तस्य शमस्याऽऽस्वाद्यमानत्वासंभवादित्यर्थः । अनेनाष्टावेवेत्यत्रोपपत्तिर्दर्शिता भवति ॥ १३७० ॥

तद्दूषयति—

***तदचोद्यं यतः किंचिन्न रसं स्वदते नटः ॥**
**सामाजिकास्तु लिहते रसान्पात्रं नटो मतः ॥ १३७१ ॥**

**तदचोद्यमिति** । यतः कारणान्नटो रसं किंचिदपि न स्वदते । नटस्य स्वकार्याभिनयविहितत्वेनाल्पोऽपि रसस्याऽऽस्वादस्तस्य नास्तीत्यर्थः । **सामाजिकास्त्विति** । तेषां कार्यान्तरानुसंधानाभावात्ते तूक्तरूपान्रसान्स्वदन्ते । अतः कारणान्नटः पात्रं रसस्याऽऽधारमात्रम् । अयमर्थः । यथा लोके पानकादिरसस्य चषकादिकमाधारत्वेन पात्रं न तु तदास्वादज्ञातृत्वेन । एवं नटोऽपि रसास्वादको न भवति । अतः शान्तरसस्य न नाट्यरसत्वनिषेध इति ॥ १३७१ ॥

**ते शुद्धहृदयाः शान्तं स्वविभावविभावितम् ॥**
**एकाग्रचेतसः सन्तोऽनुभवन्तीति युज्यते ॥ १३७२ ॥**

**त इत्यादि** । ते सामाजिकाः । शुद्धहृदयाः कार्यान्तरेष्वनासक्तचित्ता इत्यर्थः । एकाग्रचेतसो नाट्यदर्शन एवावहितमनस इत्यर्थः । एवंविधाः सन्तो स्वविभावविभावितम् । स्वविभावा वक्ष्यमाणाः संसारभीरुतादयः । तैर्विभावितं निष्पादितं शान्तमनुभवन्ति । **इति युज्यत इति** । शृङ्गारादिवत्सामाजिकास्वाद्यमानत्वाच्छान्तस्यापि नाट्यरसत्वमुपपन्नमित्यर्थः ॥ १३७२ ॥

---

* 'तदचारु' इति मूलादर्शपुस्तकपाठः ।

---

१ ज. नटेनेष° । २ ज. °क्तेन कर्तरि त° ।

रतिहासशुचः क्रोधोत्साहौ भयजुगुप्सने ॥
विस्मयश्चाथ निर्वेदः स्थायिभावा नवेत्यमी ॥ १३७३ ॥

अथ रसोपादानभूतान्स्थायिभावानुद्दिशति—रतिहासशुच इत्यादि ॥ १३७३ ॥

शान्तस्य स्थायिभावविकल्पं मतभेदेन दर्शयति—

जुगुप्सां स्थायिभावं तु शान्तं(न्ते) केचिद्बभाषिरे ॥
उत्साहमाहुरन्येऽन्ये शमं सर्वान्परे विदुः ॥ १३७४ ॥

जुगुप्सामित्यादि। सर्वान्परे विदुरिति। सर्वान्निर्वेदजुगुप्सोत्साहशमान्। शान्ते निर्वेदस्य तावत्स्थायित्वं मयाऽतीतेषु जन्मान्तरेषु मोक्षोद्योगो न कृत इति तत्त्वबोधजितस्य भावविशेषस्यानुस्यूतत्वाद्द्रष्टव्यम्। जुगुप्सायास्तु स्थायित्वमनुभूयमानविषयहेयत्वदर्शनानुस्यूत्या द्रष्टव्यम्। उत्साहस्य तु स्थायित्वं साधनचतुष्टयसंपत्त्यर्थं मानसप्रयत्नानुस्यूत्या द्रष्टव्यम्। शमस्यापि स्थायित्वं सर्वेन्द्रियव्यापारोपरतेरभ्यासाद्द्रष्टव्यम्। एवं समवेतानामपि निर्वेदादीनां शान्तं प्रति स्थायित्वमनुसंधेयम् ॥ १३७४ ॥

उद्दिश्य स्थायिनः प्राप्ते समये व्यभिचारिणाम् ॥
अमङ्गलमपि ब्रूते[1] पूर्वं निर्वेदं[2]मेव यत् ॥ १३७५ ॥
मुनिर्मेनेऽस्य तन्नूनं स्थायिता[3]व्यभिचारिते ॥
पूर्वापरान्वयो ह्यस्य मध्यस्थस्यानुषङ्गतः ॥ १३७६ ॥

उद्दिश्येत्यादि। स्थायिनो रत्यादिभावानुद्दिश्य व्यभिचारिणां निर्वेदादीनां समयेऽवसरे। प्राप्त इति। प्रतिद्वंद्वित्वेन व्यभिचारिणां बुद्ध्युपारूढतया संगतत्वादिति भावः। अमङ्गलमित्यादि। यद्यस्मात्कारणान्मुनिर्भरतर्षिरमङ्गलमपि निर्वेदमेव पूर्वं ब्रूते तत्तस्मात्कारणादस्य निर्वेदस्य स्थायिताव्यभिचारिते मेने। नूनमिति मुनेरभिप्राय उत्प्रेक्ष्यते। एवं सति मध्यस्थस्य निर्वेदस्यानुषङ्गतो देहलीप्रदीपन्यायेनोभयत्र संबन्धात्पूर्वापरान्वयो भवति। हि प्रसिद्धौ। पूर्वैः स्थायिभिः परैर्व्यभिचारिभिश्चान्वययोजना ॥ १३७५ ॥ १३७६ ॥

स्थायितासंचारितयोर्विभागार्थमाह—

स्थायी स्याद्विषये[4]ष्वेष तत्त्वज्ञानोद्भवो यदि ॥
इष्टानिष्टवियोगाप्तिकृतस्तु व्यभिचार्यसौ ॥ १३७७ ॥

स्थायी स्यादित्यादि। एष निर्वेदो यदि विषयेषु तत्त्वज्ञानोद्भवो भवेत्तदा स्थायी स्यात्। असौ निर्वेद इष्टानिष्टवियोगाप्तिकृतस्त्विष्टवियोगकृतोऽनिष्टावाप्तिकृतो वा भवति चेत्तदा व्यभिचारी स्यात् ॥ १३७७ ॥

---

१ घ. ज्ञाते। २ च. °दमाचरेत्। ३। ख. ग. °यितां व्य° च. °यित्वाव्य°। ४ च °ष्वेषु त°।

निर्वेदग्लानिशङ्कौग्र्यदैन्यासूयादम(मद)श्रमाः ॥
चिन्ता धृतिः स्मृतिर्व्रीडामोहालस्यानि चापलम् ॥ १३७८ ॥
हर्षामर्षविषादाश्चापस्मारो जडता तथा ॥
वितर्कसुप्तमौत्सुक्यमवहित्थं तथा मतिः ॥ १३७९ ॥
विबोधो व्याधिरुन्मादो गर्वावेगौ मृतिस्तथा ॥
त्रासो निद्रा त्रयस्त्रिंशदिति स्युर्व्यभिचारिणः ॥ १३८० ॥

व्यभिचारिण उद्दिशति—निर्वेद इत्यादि ॥ १३७८ ॥ १३७९ ॥ १३८० ॥

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभेदोऽथ वेपथुः ॥
वैवर्ण्यमश्रु प्रलयोऽष्टौ भावाः सात्त्विका इति ॥ १३८१ ॥

सात्त्विकानुद्दिशति—स्तम्भ इत्यादि ॥ १३८१ ॥

विभावाद्यैरनुचितः स्थानत्वाद्विकृतिं गतैः ॥
शृङ्गारादिरसाभासाः कृता हास्यस्य हेतवः ॥ १३८२ ॥
फलं बन्धुवधो रौद्रे विभावः करुणे च सः ॥
जगदुस्तद्विदो रौद्रमतः करुणकारणम् ॥ १३८३ ॥
रौद्रं भयानके हेतुमत एव प्रचक्षते ॥
शृङ्गाराद्विप्रलम्भाख्यात्करुणोत्पत्तिरिष्यते ॥
भयानकेऽद्भुते हेतुं वीरं धीरा बभाषिरे ॥ १३८४ ॥
विदूषकस्य हासस्तु नायके हास्यकारणम् ॥
साम्याद्रुधिरमोहादिविभावाद्व्यभिचारिणाम् ॥ १३८५ ॥
बीभत्से सति भीरूणामुत्पद्येत भयानकः ॥
अन्योन्यजन्यजनका भवन्त्येवमिमे रसाः ॥ १३८६ ॥

रसानामन्योन्यजन्यजनकभावमाह—विभावाद्यैरित्यादि ॥ १९८२ ॥ १३८३ ॥ ॥ १३८४ ॥ १३८५ ॥ १३८६ ॥

शृङ्गारादीनां क्रमेण वर्णान्देवताश्चाऽऽह—

श्यामः सितो धूसरश्च रक्तो गौरोऽसितस्तथा ॥
नीलः पीतस्ततः श्वेतो रसवर्णाः क्रमादिमे ॥ १३८७ ॥
विष्णुमन्मथकीनाशरुद्रेन्द्राः कालसंज्ञकः ॥
महाकालः क्रमाद्ब्रह्मा *बुद्धश्च रसदेवताः ॥
शृङ्गारे देवतामाहुरपरे मकरध्वजम् ॥ १३८८ ॥

---

* अत्र टीकायां ख. ग. घ. पुस्तकस्थ एव पाठः स्वीकृतः ।

---

१ च. °रभङ्गोऽथ । २ च. हासस्य । ३ ख. ग. °न्धुवधे रौ° । घ. ङ. °न्धुविभौ रौ° । ४ ख. ग. °नकोद्भुतम° । ५ ख. ग. घ. युधश्च । च. विधुश्च ।

**श्याम इत्यादि** । तत्र शृङ्गारः श्यामवर्णो विष्णुदैवतः । हासः श्वेतवर्णो मन्मथदैवतः । करुणो धूसरवर्णो यमदैवतः । रौद्रो रक्तवर्णो रुद्रदैवतः । वीरो गौरवर्ण इन्द्रदैवतः । भयानकः कृष्णवर्णः कालदैवतः । बीभत्सो नीलवर्णो महाकालदैवतः । अद्भुतः पीतवर्णो ब्रह्मदैवतः । शान्तः श्वेतवर्णो बुधदैवत इति क्रमो द्रष्टव्यः ॥ १३८७ ॥ ॥ १३८८ ॥

रसादेर्विशेपलक्षणानि वक्तुं प्रतिजानीते—

**वक्ष्ये विशेषलक्ष्माणि रसादेरधुना क्रमात् ॥ १३८९ ॥**

**वक्ष्य इत्यादि** । रसादेरित्यत्राऽऽदिशब्देन स्थायिव्यभिचारिसात्त्विका गृह्यन्ते । एतेषां समुदायविवक्षया रसादेरित्येकवचननिर्देशः । **विशेषलक्ष्माणीति** । समुदायिनां शृङ्गारादीनां प्रत्येकं लक्षणानीत्यर्थः ॥ १३८९ ॥

तत्र शृङ्गारं लक्षयति—

**विभावैर्वरकान्ताद्यैः स्वकाव्ये कविगुम्फितैः ॥**
**साक्षात्कारमिवाऽऽनीतैर्नटेन स्वप्रयोगतः ॥ १३९० ॥**
**नीतो रतिस्थायिभावः सदस्यरसनीयताम् ॥**
**नटेन कान्तदृष्ट्याद्यैरनुभावैः प्रदर्शितैः ॥ १३९१ ॥**
**आवेशातिशयं नीतश्चित्रितो व्यभिचारिभिः ॥**
**हर्षचिन्तादिभिः प्रोक्तः शृङ्गारः सूरिशार्ङ्गिणा ॥ १३९२ ॥**

**विभावैरित्यादि** । **वरकान्ताद्यैरिति** । वरश्च कान्ता च वरकान्ते आलम्बनविभावौ । आद्यशब्देन चन्द्रचन्दनमन्दानिलादय उद्दीपनविभावा गृह्यन्ते । **स्वकाव्य इति** । स्वशब्देन कविरुच्यते । **कविगुम्फैरिति** । कविना निबद्धैः । अनन्तरं नटेन स्वप्रयोगतः स्वकीयाच्चतुर्विधाभिनयप्रयोगात् । साक्षात्कारं (रमा)नीतैरिव स्थितैर्विभावैः । सदस्यरसनीयतां सदस्यैः सामाजिकै रसनीयतामास्वाद्यमानतां नीतः प्रापितः । नटेनानुकर्त्रा प्रदर्शितैः कान्तदृष्ट्याद्यैरनुभावैरावेशातिशयं सामाजिकमनःस्वभिमानातिशयं नीतः प्रापितः । हर्षचिन्ताद्यैर्व्यभिचारिभिश्चित्रितः शबलितः । रतिस्थायिभावो रत्याख्यः स्थायिभावः(वो) [यस्य सः] । सूरिशार्ङ्गिणा शृङ्गारः प्रोक्त इति संबन्धः ॥ १३९० ॥ १३९१ ॥ १३९२ ॥

**संभोगविप्रलम्भौ वाऽवस्थे द्वे तस्य कीर्तिते ॥**
**कान्तासंयोगविरहौ लक्षणे च तयोः क्रमात् ॥ १३९३ ॥**

**संभोगेत्यादि** । **तयोश्च कान्तासंयोगविरहौ क्रमाल्लक्षणे इति** । कान्तासंयोगः संभोगशृङ्गारस्य लक्षणम् । कान्ताविरहो विप्रलम्भशृङ्गारस्य लक्षणमिति क्रमः ॥ १३९३ ॥

रतिं लक्षयति—

स्त्रीपुंसयोरुत्तमयोर्यूनोः पूर्णसुखोदया ॥
प्रारम्भात्फलपर्यन्तव्यापिनी स्मरसंभृता ॥
संविदोरैक्यसंपत्त्या क्रीडोऽत्र स्थायिनी रतिः ॥ १३९४ ॥

**स्त्रीपुंसयोरित्यादि । संविदोरैक्यसंपत्त्येति ।** स्त्रीपुंससंबन्धिन्योर्बुद्ध्योरत्यन्तमेकरूपतया क्रीडा केलिः । **अत्र स्थायिनी रतिरिति ।** अन्यत्र देवादिविषया संचारिणी रतिरित्यर्थः ॥ १३९४ ॥

विभावानां सामान्यलक्षणमाह—

लोके स्थाय्यादिभावानां दृष्टये जन्महेतवः ॥
उपनीताः कविवरैर्नटैः साक्षात्कृता इव ॥
रसान्प्रसुन्वते ते स्युर्विभावास्तद्विभावनात् ॥ १३९५ ॥

**लोक इत्यादि ।** स्थाय्यादीत्यत्राऽऽदिशब्देन संचारिणो गृह्यन्ते । **तद्विभावनादिति ।** तेषां रसानां विभावनादुत्पादनात् । एतेन विभावशब्दस्य व्युत्पत्तिर्दर्शिता ॥ १३९५ ॥

तत्र शृङ्गारस्य विभावानाह—

कान्तौ तीव्रस्मराक्रान्तौ दूतीसख्यादयो जनाः ॥ १३९६ ॥
तत्तद्योग्योऽप्यलंकारः किरीटकटकादिकः ॥
समयोऽपि वसन्तादिर्विषयाश्चन्दनादयः ॥ १३९७ ॥
गीतादयश्च देशोऽपि रम्यहर्म्यवनादिकः ॥
कान्तानुकरणं हंसयुग्मचित्रादिदर्शनम् ॥ १३९८ ॥
जलकेलीत्येवमाद्याः श्रुता यद्वा विलोकिताः ॥
विभावत्वेन विख्याता रसे शृङ्गारनामनि ॥ १३९९ ॥

**कान्तावित्यादि ।** कान्ता च कान्तश्च कान्तौ । पुमान्स्त्रियेत्येकशेषः । अत्र तयोरालम्बनविभावत्वं दूत्यादीनामितरेषामुद्दीपनविभावत्वम् ॥ १३९६ ॥ १३९७ ॥ १३९८ ॥ ॥ १३९९ ॥

अनुभावानां सामान्यलक्षणमाह—

भावानां यानि कार्याणि नाट्यन्ते कुशलैर्नटैः ॥
अनुभावा हेतवस्ते स्वहेत्वनुभवे यतः ॥ १४०० ॥

---

१ च घ. स्मरसंभृता । २ घ. ङ. °डातः स्था° । ३ ख. ग. °पुंसः सं° । ४ ख. ग. °सान्प्रसवते । ङ. °सान्प्रमुपते (?) । च. सान्प्रश्नुवते । ५ ख. ग. कर्माणि । ६ च. भाव्यन्ते ।

**भावानामित्यादि** । भावानां स्थायिनां संचारिणां च यानि कार्याणि कटाक्षभुजाक्षेपप्रभृतीनि कुशलैर्नटैर्नाट्यन्तेऽनुक्रियन्ते । ते यतः कारणात्स्वहेत्वनुभवे स्वेषां हेतवः स्थायिनः संचारिणश्च तेषामनुभवोऽत्रानुमानम् । तत्र हेतवो लिङ्गानि । अतस्तेऽनुभावा इति सिंहावलोकन्यायेन योजनीयम् । एतेनानुभावयन्तीत्यनुभावा इति व्युत्पत्तिर्दर्शिता भवति ॥ १४०० ॥

**ते भावानाभिमुख्येन नयन्ति गमयन्ति हि ॥**
**अतोऽभिनयशब्देनाप्युच्यन्ते कृत्रिमा नटैः ॥ १४०१ ॥**

तेष्वभिनयशब्दप्रवृत्तौ निमित्तं दर्शयति—**ते भावानित्यादि** । हि यस्मात्कारणात्तेऽनुभावा भावान्पदार्थानाभिमुख्येन । नयन्तीत्यस्य व्याख्यानं गमयन्तीति । ज्ञापयन्तीत्यर्थः । [अतो] नटैः कृत्रिमा अनुकाररूपेण नट आरोपिता वर्तमानाः सन्तोऽभिनयशब्देनाप्युच्यन्ते । अनुकार्यनिष्ठत्वेनानुभावव्यपदेशः । कटाक्षादय एवानुकर्तृनिष्ठत्वेनाभिनया उच्यन्त इत्यर्थः ॥ १४०१ ॥

तत्र शृङ्गारानुभावानाह—

**कान्ता दृष्टिः कटाक्षाख्यं तारकाकर्म शर्मकृत् ॥**
**चतुरे च भ्रुवौ चारुगोचरा मधुरा गिरः ॥ १४०२ ॥**
**रोमाञ्चमुखरागादिरचितः सात्त्विकोत्करः ॥**
**अनुभावा भवन्त्येते शृङ्गाररसपोषिणः ॥ १४०३ ॥**

**कान्ता दृष्टिरित्यादि । रोमाञ्चमुखरागादिरचित इत्यादि** । तत्र मुखरागशब्देन वैवर्ण्यमुच्यते । आदिशब्देन स्वरभेदादयो ग्राह्याः । रोमाञ्चमुखरागादिरूपेण रचित इत्यर्थः । लौकिकरसवत्स्वयमेव न जातः । अपि तु नटेन स्वस्मिन्नारोपित इत्यर्थः । **सात्त्विकोत्कर इति** । स्तम्भादयोऽष्टावपीत्यर्थः । स्तम्भादीनामनुभावत्वेऽपि सात्त्विकव्यपदेशो मनआरब्धत्वादिति मन्तव्यम् ॥ १४०२ ॥ १४०३ ॥

**आलस्यौग्र्यजुगुप्साभ्योऽन्येऽत्र स्युर्व्यभिचारिणः ॥**
**आलस्यादित्रयं वर्ज्यं स्वविभावैकगोचरम् ॥ १४०४ ॥**

**आलस्येत्यादि** । अत्र संभोगशृङ्गारे । **आलस्यौग्र्यजुगुप्साभ्योऽन्य इति** । निर्वेदादय एकत्रिंशदपीत्यर्थः । जुगुप्साया बीभत्सशान्तौ प्रति स्थायित्वेऽपि रसान्तरं प्रति संचारित्वात्तेषु परिगणनमविरुद्धम् । एवमेकत्र रसे स्थायिनोऽपि रत्यादेर[न्यत्र] संचारित्वं द्रष्टव्यम् । तथाऽऽलस्यादित्रयमपि स्वविभावैकगोचरमेव संभोगशृङ्गारे वर्ज्यमित्याह—**आलस्येत्यादि स्वविभावैकगोचरमिति** । केवलैरेवेति* वृत्त्यादिभि-

* अत्रेतिशब्दोऽधिकः ।

१ च. 'ब्देन भाव्यन्ते । २ ख. ग. 'रे विवर्जितमि' । ३ ख. ग. 'ति तृप्त्यादि' ।

वक्ष्यमाणैः स्वविभावैरुत्पन्नमित्यर्थः । एतेन विभावान्तरगोचरं चेद्राह्यमित्युक्तं भवति ॥ १४०४ ॥

**एष संभोगशृङ्गारगतः परिकरो मतः ॥**
**विप्रलम्भे नानुभावः कान्ता(न्त)दृष्ट्यादिरिष्यते ॥ १४०५ ॥**

**विप्रलम्भ इति ।** विरहशृङ्गारे कान्तदृष्ट्यादिरनुभावो नेष्यते । तस्य दुःखात्मकत्वादिति भावः ॥ १४०५ ॥

विप्रलम्भोचितान्संचारिण आह—

**चिन्तासूयाश्रमौत्सुक्यनिर्वेदग्लानिमृत्यवः[1] ॥**
**उन्मादव्याध्यपस्मारविबोधजडतास्तथा ॥ १४०६ ॥**
**दैन्यं निद्रा तथा स्वप्नसुप्तचिन्तादयश्च ये ॥**
**तदीयैरनुभावैस्तु विप्रलम्भोऽभिनीयते ॥ १४०७ ॥**
**उन्मादादिदशां चातिकष्टां नात्र प्रदर्शयेत् ॥**
**न चात्र मरणं साक्षाद्दर्शयेत्तस्य सूचिकाम्[2] ॥ १४०८ ॥**

**चिन्तासूयेत्यादि । तदीयैरनुभावैरिति ।** चिन्तासूयादिसंबन्धिभिर्वक्ष्यमाणैरनुभावैः ॥ १४०६ ॥ १४०७ ॥ १४०८ ॥

**तदनन्तरजातां तु दर्शयेत्सुखिनीं दशाम् ॥**
***दशां वा भाविनिधनां सूचयेन्न त्विमां वदेत् ॥ १४०९ ॥**

**+वाचा वेत्यादि ।** तस्य मरणस्य कृत्रिममभिनयं वाचा सूचयेत्, वाग्रूपेण सूच्याभिनयेन[3] (?) वा वदेत् । आङ्गिकसात्त्विकाहार्यैर्मरणं नैवाभिनयेदित्यर्थः ॥ १४०९ ॥

विलम्भस्य रसत्वमाक्षिपति—

**ननु दुःखात्मकः कस्माद्विप्रलम्भो रसो मतः ॥**
**मैवं रत्यनुसंधानं विप्रलम्भेऽपि दृश्यते ॥ १४१० ॥**

**न त्विति ।** दुःखात्मक इति हेतुगर्भितं विशेषणम् । दुःखात्मकत्वाद्विप्रलम्भः कथं रस इत्याक्षेपः । परिहरति—**मैवमिति ।** विप्रलम्भेऽपि रत्यनुसंधानं दृश्यत इत्यत्रापिशब्देन संभोगे रत्यनुसंधानं सिद्धमेवेत्युक्तं भवति । एवमुभयोरपि रत्यनुसंधानस्य विद्यमानत्वाद्रसत्वमविशिष्टमित्यर्थः[4] ॥ १४१० ॥

**विप्रलम्भोद्भवा शङ्का संभोगे दुस्त्यजा ध्रुवम् ॥**
**इतरेतरचित्रत्वाद्रसत्वं सुलभं तयोः ॥ १४११ ॥**

---

* टीकानुरोधेनास्य श्लोकार्धस्य पाठः "वाचा वा तस्याभिनयं सूचयेत्कृत्रिमं वदेत्" इति स्यात् (?) । + वाचा वेत्यादि प्रतीकवाञ्श्लोकः सर्वेष्वपि मूलादर्शपुस्तकेषु न दृश्यते ।

---

१ ख. ग. च. शङ्कासू° । २ ख. ग. सूचकम् । ३ ख. ग. सूचाभि° । ४ ख. ग. °मवशि° ।

एवमनभ्युपगच्छन्तं प्रत्याह—**विप्रलम्भोद्भवा शङ्का संभोगेऽपि ध्रुवं दुःखयजेति ।** अयमर्थः । संभोगसमयेऽपि भाविविरहभीरुत्वस्यावश्यंभावात्तस्यापि दुःखात्मकत्वसंभवात्संभोगसंभिन्नत्वाच्चित्रत्वम् । विप्रलम्भस्य दुःखात्मकत्वेऽपि भाविसमागमाशोत्पन्नसुखसंभिन्नत्वाच्चित्रत्वम् । अतः कारणात्तयोः संभोगविप्रलम्भयो रसत्वमास्वाद्यमानत्वं सुलभम् । अनेकरूपतया घोपयितुं शक्यमित्यर्थः ॥ १४११ ॥

एवंरूपे तस्मिन्दोषो नास्तीति सदृष्टान्तमाह—

**नैकरूपे चिरास्वाद्यः शर्करावद्भवेदसौ ॥ १४१२ ॥**

**नैकरूप इति ।** असौ रस एकरूपे सति शर्करावच्चिरास्वाद्यो न भवेत् । यथा शर्कराऽतिमधुरतयाऽऽम्लादिभिरनन्तरिता सती चिरमास्वाद्या न भवति । एवं सुखात्मको हि संभोगो निर्वेदादिभिरनन्तरितश्चेत्सामाजिकैश्चिरास्वाद्यो न भवति । एकरूपत्वे शीघ्रमेव तृप्तिजननात्पर्यवस्येत् । निर्वेदादिभिरन्तरितत्वादनेकरूपत्वेऽपि स्वाम्रा-(प्याम्ला)द्यन्तरितशर्करावच्चिरास्वाद्यो भवतीत्यर्थः ॥ १४१२ ॥

**संभोगेऽपि न निद्राऽस्ति[1] नन्वन्योन्याभिलाषिणोः ॥**
**विबोधस्त्वस्त्यसौ कस्माद्विप्रलम्भैकगोचरः ॥ १४१३ ॥**

पूर्वं संभोगशृङ्गारे "आलस्यौग्र्यजुगुप्साभ्योऽन्येऽत्र स्युर्व्यभिचारिणः" इति वचनान्निद्राविबोधौ भवत इत्यर्थादुक्तम् । तौ संभोगे न संभवत इत्याक्षिपति—**नन्विति ।** तत्र हेतुकथनम्[2]—**अन्योन्याभिलाषिणोरिति ।** यूनोः परस्परं निरन्तराभिलाषित्वादित्यर्थः । संभोगेऽपीत्यत्रापिशब्दो भिन्नक्रमः । संभोगे निद्राऽपि नास्तीति योजनीयम् । निद्रापूर्वकत्वे[3] नियतस्वरूपलाभो विबोधः सुतरां नास्तीत्यपिशब्दार्थः । तमेवार्थं विस्पष्टमाह—**विबोधस्तु कस्मादस्तीति ।** अतः कारणादसौ विबोधो विप्रलम्भैकगोचरो वक्तव्य इत्याक्षेपार्थः ॥ १४१३ ॥

परिहरति—

**नैतन्निद्राविनाशो हि विबोधस्तामृते कुतः ॥ १४१४ ॥**

**नैतदिति ।** हि यस्मात्कारणाद्विबोधो नाम निद्राविनाशः । तेजोभावस्तम इतिवन्निद्राया अभावो विबोध इत्यर्थः । अतस्तामृते निद्रां विनाऽपि संभोगे विबोधः कुत इति परिहारः ॥ १४१४ ॥

पुनः पूर्वपक्षी शङ्कते—

**रतिश्रमकृता निद्रा संभोगेऽप्यस्ति चेन्न तत् ॥**
**भवन्त्यपि न सोढव्या रत्युत्कर्षविरोधिनी ॥ १४१५ ॥**

---

१ ख. ग. ङ. च. 'स्ति न त्वन्यो' । २ ख. ग. हेतुकवचनम् । ३ ख. ग. 'त्वेन नि' ।

**रतिश्रमकृता निद्रा संभोगेऽप्यस्ति चेदिति** । पुनः परिहरति—**न तदिति** । सा निद्रा भवन्त्यपि संभोगे रतिश्रमकृता विद्यमानाऽपि नोच्चाऽया । तत्र हेतुमाह— **रत्युत्कर्षविरोधिनीति** । यतो रत्युत्कर्षविरोधो भवति, अतः कविभिर्निद्रा न वर्णनीयेत्यर्थः ॥ १४१५ ॥

**करुणे विप्रलम्भे च चिन्तादिव्यभिचारिणाम् ॥**
**साधारण्यात्तयोर्भेदो नास्ति चेत्तदसांप्रतम् ॥ १४१६ ॥**

इदानीं करुणविप्रलम्भयोरभेदं शङ्कते—**करुण इत्यादि** । तत्र हेतुमाह— **चिन्तादिव्यभिचारिणां साधारण्यादिति** । तद्दूषयति—**तदसांप्रतमिति** ॥ १४१६ ॥

**शोको हि करुणे स्थायी विप्रलम्भे रतिर्मता[१] ॥ १४१७ ॥**
**स्थायिभेदाद्विभागोऽतस्तयोरुत्तमपूरुषे ॥**
**नेतु[२] नीचे तु माल्यादिविभावानामसंभवात् ॥ १४१८ ॥**
**रत्यभावे विप्रलम्भः शृङ्गारो जायते कथम् ॥**
**अतः स्यात्करुणः स्पष्टस्तत्रेष्टविरहोद्भवः ॥ १४१९ ॥**

**हि** यस्मात्कारणात्करुणे शोकः स्थायी विप्रलम्भे रतिर्मता स्थायित्वेन संमता । अतः कारणात्तयोः करुणविप्रलम्भयोः स्थायिभेदाद्विभागः सिद्ध इत्यर्थः । इदानीं विषयविशेषे स्थायिभेदसंभवात्करुणविप्रलम्भयोर्विभागमङ्गीकृत्य विषयान्तरे स्थायिभेदाभावेन तत्र[३] तयोरभेदं शङ्कते—**उत्तमपूरुष इत्यादि** । उत्तमपुरुषे कुलधनादिना संपन्ने करुणविप्रलम्भभेदाभावो न । तत्र तयोर्विभागोऽस्त्वित्यर्थः । नीचे तु कुलधनादिहीने तु माल्यादिविभावानामुद्दीपनविभावानामसंभवाद्धेतो रत्यभावे सति तन्निष्ठो विप्रलम्भः कथं शृङ्गारो जायते। शृङ्गार एव न भवतीत्यर्थः । अतः कारणात्तदानीं च विषय इष्टविरहोद्भवः करुणः स्पष्टः स्यादित्यभेदप्रतिपादनम् ॥ १४१७ ॥ १४१८ ॥ १४१९ ॥

इदानीं संभोगप्रतिबन्ध्या विप्रलम्भस्य करुणाद्भेदं साधयति—

**माल्याद्यसंभवान्नीचे संभोगासंभवोऽपि चेत् ॥**
**तन्न[४] नीचरतिर्यस्मान्नारीमात्रविभावजा ॥**
**वियोगेऽपि तथा माल्याद्यभावेन[५] कथं रतिः ॥ १४२० ॥**

**माल्याद्यसंभवादित्यादि** । चेद्यदि नीचे माल्याद्यसंभवाद्धेतोः संभोगासंभवोऽपि प्रतिपाद्यते । तन्न । तत्प्रतिपादयितुं न शक्यमित्यर्थः । यस्मात्कारणान्नीचरतिर्नारीमात्रविभावजा माल्याद्यनपेक्ष्यैव संभोगप्रवर्तिता दृश्यत इत्यर्थः । **वियोगेऽपीति** । यथा

---

१ घ. ङ. 'र्मतः । स्था' । २ घ. ङ. च. नरे । ३ ख. ग. 'दि । तावदिति चेद्युत्त' । ४ ख. ग. तत्र । ५ घ. ङ. 'वे च क' ।

संभोगे माल्याद्यभावेऽपि रतिरङ्गी कृता तथा वियोगेऽपि माल्याद्यभावेऽपि रतिः कथं न कस्मान्नाङ्गी क्रियते। अवश्यमङ्गीकर्तव्येत्यर्थः ॥ १४२० ॥

करुणविरहौ स्वरूपेणापि परस्परभिन्नावित्याह—

**आशाबन्धश्लथीभूतचिन्तादिव्यभिचारिकः ॥**
**विरहः करुणाद्भिन्नः प्रियनैराश्यकारितात् ॥ १४२१ ॥**

**आशाबन्धेत्यादि । आशाबन्धश्लथीभूतचिन्तादिव्यभिचारिक इति ।** आशाया बन्धः प्रियसंगमो[1] भविष्यतीत्येवंरूपः। तेन श्लथीभूताश्चिन्तादयो व्यभिचारिणो यस्मिन्निति स तथोक्तः। एवंरूपो विरहः, प्रियनैराश्यकारितात्प्रिय इष्टजने नैराश्यं निर्गताऽऽशा यस्मात्स निराशः। तस्य भावस्तत्त्वम्। तेन कारितादुत्पादितात्कार(त्करु)णाद्भिन्नः पृथग्भूतः ॥ १४२१ ॥

अथ शृङ्गारे कविभिर्वर्णनीया दशावस्था दर्शयति—

***कामसूत्रे च शृङ्गारो दशावस्थः प्रदर्शितः ॥**
**अभिलापस्ततश्चिन्तानुस्मृतिर्गुणकीर्तनम् ॥ १४२२ ॥**
**उद्वेगोऽथ विलापः स्यादुन्मादो व्याधिसंभवः ॥**
**जडता मरणं चेति दशावस्थाः प्रकीर्तिताः ॥ १४२३ ॥**

**कामशास्त्र इत्यादि ।** कामशास्त्रे वात्स्यायनादौ ॥ १४२२ ॥ १४२३ ॥

शृङ्गारे स्त्रीपुरुषयोरन्योन्यालम्बनत्वाविशेषेऽपि[2] प्रधानोपसर्जना(न)भावकृतं वैषम्यमाह—

**भोक्ता प्रधानो भोग्या[3] तु कान्ता तदुपसर्जनम् ॥**
**अतो नरान्तरासक्तिस्तस्याः शृङ्गारभङ्गकृत् ॥**
**भोक्तुस्त्वपरतन्त्रत्वात्कान्तान्तरमभञ्जकम् ॥ १४२४ ॥**

**भोक्तेत्यादि । शृङ्गारभङ्गकृदिति ।** कान्तायाः[4] पुरुषान्तरासक्तौ रसाभासो[5] भवतीत्यर्थः। **कान्तान्तरमभञ्जकमिति ।** पुरुषे स्वकान्तान्तरासक्तावपि[6] रसाभासो न भवतीत्यर्थः ॥ १४२४ ॥

शृङ्गारस्य त्रैविध्यमाह—

**वाङ्नेपथ्याङ्गचेष्टाभिः शृङ्गारस्त्रिविधो मतः ॥**
**रामादि[7]व्यञ्जको वेषो नटे नेपथ्यमिष्यते ॥ १४२५ ॥**

---

* टीकानुरोधेन कामशास्त्र इति पाठो युक्तः।

---

१ छ. ज. °यस्याऽऽगमो। २ ज. °त्वाद्विशे°। ३ ख. ग. °भोग्यत्वात्कान्ता। ४ ख. ग. कान्तायां। ५ ख. °सो न भ°। ६ ख. °सक्ते वाऽपि। ७ ख. ग. रागादि°।

षाड्नेपथ्येत्यादि । नेपथ्यस्वरूपमाह—रामादिव्यञ्जक इत्यादि ॥ १४२५ ॥

इति शृङ्गारः ।

अथ हास्यं लक्षयितुं तस्य विभावादीन्दर्शयति—

वेषालंकारगमनगदितानां विकारिता ॥ १४२६ ॥
एतेषां च परस्थानामनुकारो विलज्जता[1] ॥
विषयेऽरुचितो[2] दृष्ट्याऽप्यसंगतविभाषणम् ॥ १४२७ ॥
हा[3]सनीयस्य कक्षा[4]दिसंस्पर्शः कु[5]हनावहः ॥
इत्यादयो विभावाः स्युरनुभावास्तु नेत्रयोः ॥ १४२८ ॥
कपोलयोरोष्ठयोश्च स्पन्दो दृष्ट्योर्विकासनम् ॥
अत्यन्तमीलनं किंचित्कुञ्चनं[6] पार्श्वपीडनम् ॥ १४२९ ॥
प्रस्वेदमुखरागाद्या य[7]स्याथ व्यभिचारिणः ॥
स्वप्नोऽवहित्थमालस्यनिद्रातन्द्रादयोऽपरे ॥ १४३० ॥
एते स्मितादिभेदेषु यथायोगं व्यवस्थिताः ॥
स्थायिभावश्च हासः स्यादसौ हास्यः प्रकीर्तितः ॥ १४३१ ॥

वेषालंकारेत्यादि । विकारितेति । स्वगतानां वेषादीनां स्वभावाद्विकृतत्वं हास्यस्य विभावो भवति । एतेषां वेषादीनां परस्थानामविकृतानामपि परस्वभावभूतानामनुकार-(रोऽ)स्य हास्यस्य विभावो भवति । हासनीयस्य हासयितुमिष्टस्य जनस्य । कुहना-वहः कुहनां कर्पटमावहतीति तथोक्तः । एवं हासयामीति कपटेन परस्य कक्षादिसंस्प-र्शश्च तद्धासकरणं भवति । कक्षादीत्यादिशब्देन पार्श्वप्रदेशादि गृह्यते । इत्यादय[8] इति लोके हास्यकारणत्वेन येऽर्था दृष्टास्ते ग्राह्याः । यस्यानुभावास्त्विति व्यवहि[9]तैरपि संबन्धः । अथ व्यभिचारिण इत्यत्र स्थायिभावश्च हासः स्यादित्यत्रापि[10] यस्येत्यनुसंधे-यम् । असौ हास्य इति । पूर्ववाक्येषु यस्येति यच्छब्देन योऽभिहितः सोऽसाविति परामृश्यते ॥ १४२६ ॥ १४२७ ॥ १४२८ ॥ १४२९ ॥ १४३० ॥ १४३१ ॥

आत्मस्थः परसंस्थश्चेत्यस्य भेदद्वयं मतम् ॥
आत्मस्थो द्रष्टुरुत्पन्नो विभावेक्षणमात्रतः ॥ १४३२ ॥
हसन्तमपरं दृष्ट्वा विभावै(र्वा)श्चोपजायते ॥
योऽसौ हास्यरसस्तज्ज्ञैः परस्थः परिकीर्तितः ॥ १४३३ ॥

---

१ ख. ग. °ता । वेद्यतेनुचितातृष्णायसं । २ घ. °ता तृष्णाऽप्य° । ३ घ. ङ. हसनीयस्य । ४ ख. घ. °क्षादेः सं° । ५ च. कुपथाव° ६ ख. ग. °श्चकुट्टनम् । ७ ग. यथा स्युर्व्यभि° । घ. यस्याष्ट व्य° । ८ ख. ग. °पर्टं चाऽऽव° । ९ ख. ग. °हितयोर° । १० ख. ग. °हितार्थः सोऽ° ।

**विभावेक्षणमात्रस इति ।** आत्मस्थस्य हास्यस्य तावतैवोत्पत्तिदर्शनात् । **परस्थो हास्यस्तु** हसन्तमपरं विभावांश्च दृष्ट्वोपजायते ॥ १४३२ ॥ १४३३ ॥

उत्तमानां मध्यमानां नीचानामप्यसौ भवेत् ॥
त्र्यवस्थः कथितस्तस्य षड्भेदाः सन्ति चापरे ॥ १४३४ ॥

**त्र्यवस्थ इति ।** उत्तमो मध्यमो नीच इत्यर्थः ॥ १४३४ ॥

स्मितं च हसितं प्रोक्तमुत्तमे पुरुषे बुधैः ॥
भवेद्विहसितं चोपहसितं मध्यमे नरे ॥
नीचेऽपहसितं चातिहसितं परिकीर्तितम् ॥ १४३५ ॥

तेषामेव प्रत्येकं भेदद्वयमाह—**स्मितं चेत्यादि** ॥ १४३५ ॥

ईषत्फुल्लकपोलाभ्यां कटाक्षैरप्यनुल्बणैः ॥
अदृश्यदशनो हास्यो मन्थरस्मितमुच्यते[1] ॥ १४३६ ॥
वक्त्रनेत्रकपोलैश्चेदुत्फुल्लैरुपलक्षितः ॥
किंचिल्लक्षितदन्तश्च[2] तदा हसितमिष्यते ॥ १४३७ ॥
सशब्दं मधुरं कालागतं वदनरागवत् ॥
आकुञ्चिताक्षिगण्डं च विदुर्विहसितं बुधाः ॥ १४३८ ॥
निकुञ्चितांसशीर्षश्च जिह्मदृष्टिविलोकनः[3] ॥
उत्फुल्लनासिको हास्यो नाम्नोपहसितं मतः ॥ १४३९ ॥
अस्थानजः साश्रुदृष्टिराकम्प्रस्कन्धमूर्धकः[4] ॥
शार्ङ्गदेवेन गदितो हास्योऽपहसिताह्वयः[5] ॥ १४४० ॥
स्थूलकर्णः कटुध्वानो बाष्पपूरप्लुतेक्षणः ॥
करोपगूढपार्श्वश्च हास्योऽतिहसितं मतः ॥ १४४१ ॥

स्मितादीनां प्रत्येकं लक्षणमाह—**ईषत्फुल्लेत्यादि** ॥ १४३६ ॥ १४३७ ॥ ॥ १४३८ ॥ १४३९ ॥ १४४० ॥ १४४१ ॥

पूर्वाणि[6] स्वसमुत्थानि स्मितादियुगलत्रये ॥
पराणि[7] त्वपरस्थानि पूर्वसंक्रान्तिजत्वतः ॥ १४४२ ॥

**पूर्वाणीति ।** स्मितादियुगलत्रये पूर्वाणि स्मितविहसितापहसितानि स्वसमुत्थानि । **पराणि त्विति ।** हसितोपहसितातिहसितानि त्वपरस्थानि । तत्र हेतुमाह—**पूर्वसंक्रान्तिजत्वत इति ।** परेषां हसितादीनां स्मितादिसंक्रान्त्या जातत्वात्परस्थ(रोत्थ)त्वं

---

१ च. 'न्थरास्मि' । २ ख. ग. 'दन्तैश्चेत्तदा । ३ ख. ग. 'लोचनः । च. 'लोकितः । उ' । ४ च. 'रानतस्क' । ५ च. 'मूर्धजः । शा' । ६ च. 'तानि युग' । ७ ख. ग. घ. 'णि तु परोत्थानि ।

द्रष्टव्यम् । अयमर्थः । उत्तमपुरुषनिष्ठं [स्मितं दृष्ट्वोत्तमपुरुषान्तरस्य] हसितं जायते । मध्यमपुरुषनिष्ठं विहसितं दृष्ट्वा मध्यमपुरुषान्तरस्योपहसितं जायते । तथा नीचपुरुषनिष्ठमपहसितं दृष्ट्वा नीचपुरुषान्तरस्यातिहसितं जायते । एवं स्मितादियुगलत्रये परेषां परस्थत्वं पूर्वेषामात्मस्थत्वं द्रष्टव्यमिति । एतदुक्तं भवति । आत्मस्थापेक्षया परस्थस्याऽऽधिक्यं भवतीति ॥ १४४२ ॥

हास्यस्य पुनस्त्रैविध्यमाह—

हास्यरौद्रावपि त्रेधा वाङ्नेपथ्याङ्गचेष्टितैः ॥
उपलक्षणमेतत्तु तेषां सर्वेषु संभवात् ॥ १४४३ ॥

**हास्यरौद्रावपीत्यादि** । हास्यरौद्रावित्येतदुपलक्षणम् । **यतस्तेषां सर्वेषु संभवादिति** । तेषां वाङ्नेपथ्याङ्गचेष्टितानां त्रयाणां भेदानां सर्वेषु नवसु रसेषु संभवाद्विद्यमानत्वादिति ॥ १४४३ ॥

इति हास्यः ।

इष्टबन्धुवियोगश्च श्रीनाशो वधबन्धने ॥ १४४४ ॥
व्यसनप्रभवोऽनर्थः सुतादिनिधनं तथा ॥
देशभ्रंशादयश्चैते श्रुता यद्वा विलोकिताः ॥ १४४५ ॥
विभावाः संमताः पुंसामुत्तमानां पराश्रिताः ॥
मध्यमाधमपुंसां तु ते स्युरात्मैकगोचराः ॥ १४४६ ॥

अथ करुणं लक्षयितुं तस्य विभावानाह—**इष्टबन्धुवियोगश्चेत्यादि** । **श्रीनाशः** श्रियः संपदो नाशः । **व्यसनप्रभवोऽनर्थ इति** । द्यूतमद्यादिव्यसनैर्जनितोऽनर्थः । उत्तमानां पुंसां स्वगताः पराश्रिताश्च यत्र विभावा भवन्तीत्यन्वयः । **आत्मैकगोचरा इति** । मध्यमाधमपुंसां तु पराश्रिता न विभावा इत्यर्थः ॥ १४४४ ॥ १४४५ ॥ ॥ १४४६ ॥

अश्रुपातो मुखे शोषो विलापः परिदेवनम् ॥
स्तम्भो विवर्णता स्रस्तगात्रता प्रलयस्तथा ॥ १४४७ ॥
श्वासोच्छ्वासौ देहपातघातोरस्ताडनादयः ॥
एते यत्रानुभावाः स्युरथ ग्लानिः श्रमो भयम् ॥ १४४८ ॥
मोहो विषादनिर्वेदौ चिन्तौत्सुक्ये च दीनता ॥
जडता व्याधिरुन्मादालस्यापस्मारमृत्यवः ॥ १४४९ ॥
स्तम्भकम्पाश्रुवैवर्ण्यस्वरभङ्गादयस्तथा ॥
यत्र संचारिणः स्थायी शोकः स करुणो मतः ॥ १४५० ॥

---

१ ख. ग. °थ श्रीना° । २ ख. ग. शोको । ३ घ. °क्येन दी° ।

अनुभावानाह—**अश्रुपात इत्यादि** । संचारिण आह—**अथ ग्लानिरित्यादि** । ननु स्तम्भादीनां सात्त्विकभावानामप्यनुभावलक्षणयुक्तत्वेन तेषु परिगणनमस्तु । संचारिषु कथं तेषां परिगणनमिति चेदुच्यते । स्वतः प्राधान्येन प्रवृत्तानामपि स्तम्भादीनां—

"भावानां यानि कर्माणि नाट्यन्ते कुशलैर्नटैः ।
तेन भावा हेतवस्ते स्वहेत्वनुभवे यतः" ॥

इति लक्षणयोगेन यथानुभावत्वमुपपन्नं तथा—"विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः" इत्यस्थिरत्वलक्षणयोगेन संचारित्वमुपपन्नमेवेति । एवमुक्ता ग्लान्यादयः संचारिणो यत्र भवन्ति । यत्र शोकः स्थायी भवति स करुणो मतः ॥ १४४७ ॥ ॥ १४४८ ॥ १४४९ ॥ १४५० ॥

**व्यवस्थाऽत्रानुभावानां योग्यत्वादुत्तमादिषु ॥ १४५१ ॥**

**व्यवस्थेत्यादि** । अत्र करुण उत्तमादीनामुत्तममध्यमाधमानां पुंसां योग्यत्वात्तत्तत्प्रकृत्युचितत्वेनानुभावानां पूर्वोक्तानामश्रुपातादीनां व्यवस्था नियमः कर्तव्यः॥१४५१॥

विलापनपरिदेवनयोः स्वरूपमाह—

**विलापो रोदनं शोच्यगुणस्तवपुरःसरम् ॥**
**स्याद्दैवात्मपराणां यदुपालम्भेन रोदनम् ॥**
**परिदेवनमित्युक्तं तदिदं शब्दकोविदैः ॥ १४५२ ॥**

**विलाप इत्यादि** । शोच्यगुणस्तवपुरःसरं रोदनं विलापः स्यात् । दैवात्मपराणामुपालम्भेन यद्रोदनं विद्यते तदिदं रोदनं शब्दकोविदैः परिदेवनमित्युक्तम् ॥ ॥ १४५२ ॥

करुणस्य त्रैविध्यमाह—

**धर्मोपघातजो वित्तनाशजो बन्धुनाशजः ॥**
**करुणस्त्रिविधस्तेषामुत्तमेष्वेव पूर्वजः ॥ १४५३ ॥**

**धर्मोपघातज इत्यादि** । उत्तमेष्वेवोत्तमप्रकृतिष्वेव भवतीति नियमः । तेन वित्तनाशजबन्धुनाशजयोरुत्तमादिषु(ष्व?) नियमो द्रष्टव्यः ॥ १४५३ ॥

**त्रेधा रुदितमानन्दार्तीर्ष्याहेतुकृतं भवेत् ॥ १४५४ ॥**

रुदितस्य त्रैविध्यमाह—**आनन्दार्तीर्ष्याहेतुकृतमिति** । एकस्य रुदितस्याऽऽनन्दो हेतुः । अन्यस्याऽऽर्तिर्हेतुः । अपरस्येर्ष्या हेतुरित्यर्थः ॥ १४५४ ॥

**दुःखस्मृतियुतानन्दाज्जातं फुल्लकपोलकम् ॥**
**सरोमाश्रमपाङ्गस्थबाष्पमानन्दजं मतम् ॥ १४५५ ॥**

---

१ ख. ग. ङ. °नाशोत्थो ब° । २ च. °माश्रं सरागं च बा° ।

दुःखस्मृतियुतानन्दाज्जातमिति । दुःखस्मरणपूर्वकोऽसावानन्दस्तस्माज्जातं रुदितं लक्षयति—**फुल्लकपोलकमिति** । केवलानन्दाज्जातं लक्षयति—**सरोमाञ्चमित्यादि** ॥ १४५५ ॥

केवलदुःखाज्जातं लक्षयति—

**उच्चैः स्वरविलापं च सभ्रूप्रान्तविवर्तितम्[1] ॥**
**स्रुताश्रुधारमस्वस्थचेष्टाङ्गं चाऽऽर्तिजं मतम्[2] ॥ १४५६ ॥**

**उच्चैः स्वरविलापमित्यादि** । सभ्रूप्रान्तविवर्तितं भ्रूप्रान्तविवर्तिताभ्यां सहितम् । स्रुताश्रुधारं स्रुता अश्रुधारा यस्मिन्निति तथोक्तम् । अस्वस्थचेष्टाङ्गम् । स्वस्था चेष्टा न विद्यते येषां तान्यस्वस्थचेष्टानि तादृशान्यङ्गानि यस्मिन्निति तथोक्तम् ॥ १४५६ ॥

**शिरःकम्पितनिश्वासं स्फुरदोष्ठकपोलकम् ॥**
**कटाक्षभ्रुकुटीवक्रं स्त्रीणामीर्ष्याकृतं भवेत् ॥ १४५७ ॥**

ईर्ष्याकृतं लक्षयति—**शिरःकम्पितनिश्वासमित्यादि** ॥ १४५७ ॥

**धैर्यादुत्तममध्यानां नाश्रु स्वव्यसने स्रवेत् ॥**
**परस्थे तु स्रवेन्नारीनीचानां[3] तूभयत्र तत् ॥ १४५८ ॥**

उत्तममध्यानां पुंसामश्रु स्वव्यसन आत्मदुःखे न स्रवेत् । परस्थे व्यसने तु स्रवेत् । नारीनीचानां तु तद्रुदितम् । उभयत्र स्वपरव्यसनयोरित्यर्थः ॥ १४५८ ॥

**इति करुणः ।**

अथ रौद्रं लक्षयति(यितुं) प्रथमं तद्विभावानाह—

**हन्तृप्रकृतयो रक्षोदैत्याद्यन्यायकारिणः ॥**
**युद्धं क्रोधो[4]ऽनृतं वाक्यं परदारादिधर्षणम् ॥ १४५९ ॥**
**देशजातिकुलाचारविद्यानिन्दा परस्य ॥**
**वधान्यदार[5]यात्रादिप्रतिज्ञापरुषोक्तयः ॥ १४६० ॥**
**गृहादिभञ्जनं राज्यहरणं मत्सरस्तथा ॥**
**जिघांसाद्याश्च यत्र स्युर्विभावाः कविकीर्तिताः ॥ १४६१ ॥**

**हन्तृप्रकृतय इत्यादि ।** हन्तृप्रकृतयो हन्तृत्वं प्रकृतिर्येषां ते हननस्वभावा इत्यर्थः । ते च रक्षोदैत्याद्यन्यायकारिणः । आदिशब्देन चोरादयो गृह्यन्ते । **क्रोध इति ।** अन्यकृतः क्रोधोऽन्यरौद्रस्य विभावो भवति । **परदारादिधर्षणमिति ।** अत्राऽऽदिशब्देन क्षेत्रवित्ताद्यपहरणं गृह्यते । अन्यदारयात्रादिप्रतिज्ञा परस्त्रीगमनप्रतिज्ञा । आदिशब्देन तदपहरणादिप्रतिज्ञा गृह्यते ॥ १४५९ ॥ १४६० ॥ १४६१ ॥

---

१ घ. ङ. °वर्तनम् । २ ख. ग. घ. ङ. च. °म् । श्रुता° । ३ च. °वेन्नीरं नी° । ४ ग. च. क्रोधानृ° । ५ च. °रयात्रा° ।

रौद्रस्यानुभावानाह—

भ्रुकुटीरक्तनेत्र(नेत्ररक्त)त्वं कपोलस्फुरणं तथा ॥
दन्तोष्ठपीडनं हस्तनिष्पेषोऽथान्यविग्रहे ॥ १४६२ ॥
तलाद्यैस्ताडनं छेदो मर्दः पाटनमोटने ॥
शस्त्राणां ग्रहणं पातः प्रहारो रुधिरस्रुतिः ॥ १४६३ ॥
एतेऽनुभावास्तेषां तु कर्म यत्ताडनादिकम् ॥
न तत्साक्षात्प्रयोक्तव्यं कीर्तनीयं परं नटैः ॥ १४६४ ॥

भ्रुकुटीत्यादि । अथान्यविग्रह इति । पूर्वोक्ता भ्रुकुटिनेत्ररक्तत्वादयः **स्वविग्रह** आत्मनः शरीरे भवन्ति । वक्ष्यमाणास्तलाद्यैस्ताडनादयोऽन्यविग्रहे परस्य रौद्रालम्बन-विभावस्य विग्रहे शरीरे स्वेन रौद्राधिष्ठानभूतेन कृता भवन्ति । **तलाद्यैरिति** । अत्र तलशब्देन हस्तपादतलमुच्यते । आदिशब्देन मुष्ट्यादयो ग्राह्याः । तैस्ताडनं रौद्रा-नुभावः । छेदो नखादिभिः कृतः । मर्दो भीत्यादिसंश्लेषेणाङ्गमर्दनम् । **पाटनमोटने इति** । पाटनं नाम स्वकराभ्यामन्यस्य कराद्यवयवं गृहीत्वा तस्य द्वैधीकरणम् । मोटनं नाम पूर्वं गृहीत्वा तदङ्गानां भञ्जनम् । शस्त्राणां छुरिकादीनां ग्रहणम् । पातो गृहीतानां शस्त्राणां पराङ्गं प्रति प्रवणीकरणम् । प्रहारः प्रवणैः शस्त्रैः कृता क्षतिः । रुधिरस्रुतिः प्रहारोत्पन्नस्य रुधिरस्य स्रावः । तेषां मध्ये यत्रोटनादिकं कर्म विद्यते तत्साक्षान्न प्रयोक्तव्यम् । किं तु नटैः परं केवलं कीर्तनीयम् ॥ १४६२ ॥ १४६३ ॥ ॥ १४६४ ॥

उत्साहसम्यग्बोधौ चामर्षावेगौग्र्यचापलम् ॥
स्वेदवेपथुरोमाञ्चगद्गदस्वरतादयः ॥ १४६५ ॥
भावाः संचारिणः स्थायी क्रोधो रौद्रोऽभ्यधायि सः ॥ १४६६ ॥

अथ संचारिण आह—**उत्साहेत्यादि** । यत्र क्रोधः स्थायी भवति स रौद्राभिधो रसः ॥ १४६५ ॥ १४६६ ॥

साक्षात्स्वेदोऽभिनेयो वा व्यजनग्रहणादिना ॥
उत्साहस्त्वत्र[2] संचारी *न तस्माद्वीरसंकरः ॥ १४६७ ॥

तत्र स्वेदः साक्षादेवाभिनेयः । ताडनादिवत्सूचनीय एव न भवतीत्यर्थः । **वेति** । अथवा स्वेदः साक्षादभिनेतुमशक्यश्चेत्तदा व्यजनग्रहणादिना सोऽभिनेयो भवति । ननूत्साहस्यात्राप्यनुप्रवेशाद्वीरेणास्य संकरः प्रसज्येतेत्याशङ्क्याऽऽह—**उत्साहस्त्वि-त्यादि** । अत्र रौद्र उक्त उत्साहस्तु यतः संचारी न स्थायीत्यर्थः । अस्मात्का-

* टीकानुरोधेन न चास्मादिति पाठः ।

१ च. 'ग्बोधावम' । २ ख. ग. 'हस्त्ववसं' । च. 'हस्तु न सं' ।

रणाद्वीरसंकरश्च न । वीररौद्ररसयोरुत्साहसद्भावस्याविशेषेऽपि वीरे स्थायित्वेन रौद्रे संचारित्वेनोत्साहस्य भिन्नस्य भिन्नरूपत्वाद्वीररौद्रयोर्न सांकर्यमित्यर्थः ॥ १४६७ ॥

एवं तर्ह्येकस्यैव भावस्य व्यभिचारित्वं स्थायित्वं च मिथो विरोधादुभयं न संगच्छत इति शङ्कते—

**ननु चाव्यभिचारेण भावस्य स्थायिता मता ॥**
**स्थायी तत्कथमुत्साहो वीरेऽप्येष भविष्यति ॥ १४६८ ॥**

**ननु चेति** । भावस्योत्साहादेरव्यभिचारेण । व्यभिचारोऽत्रानैयत्यं विवक्षितम् । तदभावश्च(श्चा) व्यभिचारः । एकैकरसं प्रति नियतत्वमित्यर्थः । तेनाव्यभिचारेण स्थायिता मतेष्टा । तत्तस्मात्कारणादेष उत्साहो वीरस्थायी कथं भविष्यति । रौद्रादनु(रौद्रानु) प्रवेशाद्व्यभिचारी भवन्नयमुत्साहो वीरनैयत्याभावात्तत्र स्थाय्येव न भवतीत्याक्षेपार्थः ॥ १४६८ ॥

परिहरति—

**मैवं क्षणिकविद्योता विद्युद्वद्व्यभिचारिणः ॥**
**स्थिराः स्युः स्थायिनस्तेन द्विरूपोऽयं रसद्वये ॥ १४६९ ॥**

**मैवमिति** । व्यभिचारिणो भावा विद्युद्वत्तडिद्विव क्षणिकविद्योताः क्षणकालप्रकाशा अस्थिरा यतो भवन्ति, अतस्तेषां व्यभिचारित्वं न त्वनैयत्येनेति भावः । **स्थायिनः स्थिराः स्युरिति** । स्थिरा अक्षणिका यतोऽत एव तेषां स्थायित्वं न त्वेकैकरसं प्रति नियतत्वेनेति भावः । तेन कारणेनायमुत्साहो रसद्वये वीररौद्रयोर्विरूपः* । वीरे स्थायी रौद्रे व्यभिचारीति रसयोर्न सांकर्यमित्यर्थः ॥ १४६९ ॥

**ननु स्थाय्यपि भावत्वान्निसर्गात्क्षणिको भवेत् ॥**
**सत्यं किंतु स संस्काररूपेण स्थायितां गतः ॥ १४७० ॥**

भावानां स्थिरत्वमाक्षिपति—**नन्विति** । **स्थाय्यपीति** । भवतः स्थायित्वेनाभिमतो रत्यादिरपीत्यर्थः । **भावत्वादिति** । मनोविकारत्वात् । निसर्गात्क्षणिकः स्वभावेन क्षणिकः । क्षणिकत्वं नाम त्रिक्षणावस्थायित्वम् । यथोक्तम्—"शब्दबुद्धिकर्मणां त्रिक्षणावस्थायित्वमिति । भावमात्रस्य क्षणिकत्वाद्व्यभिचारित्वमेवेति भावः । अर्धाङ्गीकारेण परिहरति—**सत्यमिति** । [स]रसस्याऽऽविर्भावः संस्काररूपेण भावनाख्यसंस्कारात्मनां(न) स्थायितां गतः स्थैर्यं प्राप्तः । अत्र क्षणिकत्वाङ्गीकारादर्धाङ्गीकारः । संस्कारस्य स्थायित्वोक्तेः परिहारः ॥ १४७० ॥

---

* मूलानुरोधेन द्विरूप इत्यपेक्षितम् ।

---

१ ख. ग. 'वस्याभि'। २ ख. ग. 'चाराणोभयत्वं वि'। ३ ख. ग. घ. ङ. 'सर्गक्षणि'।

एवं तर्हि संस्काररूपत्वाविशेषेण निर्वेदादयोऽपि कथं न स्थायिन इत्यत आह—

तत्तिरस्कृतसंस्कारास्त्वन्ये तत्स्थैर्ययोगिनः ॥
आविर्भावतिरोभावधर्माणश्चात्र यन्त्रिताः ॥ १४७१ ॥

**तत्तिरस्कृतसंस्कारा इति** । तेन स्थायिना प्रबलेन रत्यादिना तिरस्कृतसंस्कारा अभिभूतभावनाः । तेषां दुर्बलत्वाद्व्यवहितसंस्काराः सन्तः । अन्ये तु निर्वेदादयस्तु स्थैर्ययोगिनः स्थायिनो न भवन्ति । एतदुक्तं भवति । संस्काररूपेणापि यः प्रबलः स स्थायी यो दुर्बलः स व्यभिचारीति । तावद्वा(तदेवाऽऽ)ह—**आविर्भावेत्यादि** । अत्र स्थायिसंचारित्वविषय आविर्भावधर्मेण स्थायी तिरोभावधर्मेण संचारीति यन्त्रिता ज्ञेयाः ॥ १४७१ ॥

अत्र स्थायिनः क्रोधस्य विषयभेदाच्चातुर्विध्यमाह—

गुरौ प्रिये रिपौ भृत्ये भवेत्क्रोधश्चतुर्विधः ॥
गुरावव्यक्तचेष्टः स्यात्क्रोधो विनययन्त्रितः ॥ १४७२ ॥
अपाङ्गनिर्गतालापास्रो भ्रुकुटीकुटिलाननः ॥
स्फुरितोष्ठो मृगाक्षीणां कोपः प्रणयजः प्रिये ॥ १४७२ ॥
दष्टोष्ठो हस्तनिष्पेषी विकटभ्रुकुटीपुटः ॥
स्वभुजप्रेक्षणैः शत्रौ भवेत्क्रोधो निरर्गलः ॥ १४७४ ॥
विकृतप्रेक्षणैरक्षिविस्तारैर्भूरिभर्त्सनैः ॥
भृत्ये कार्यवशात्कोपः कृत्रिमः क्रूरतोज्झितः ॥ १४७५ ॥

**गुरावित्यादि** । सुबोधमन्यत् ॥ १४७२ ॥ १४७३ ॥ १४७४ ॥ १४७५ ॥

इति रौद्रः ।

अथ वीरं लक्षयितुं तद्विभावानाह—

अविस्मयादसंमोहादविषादाच्च यः सताम् ॥
धर्माद्यर्थविशेषेषु* कार्यस्तत्त्वविनिश्चयः ॥ १४७६ ॥
नयश्च विनयः कीर्तिः पराक्रमणशक्तता ॥
प्रतापः प्रभुशक्तिश्च दुर्धर्षप्रौढसैन्यता ॥ १४७७ ॥
मन्त्रशक्तिश्च संपन्नधनाभिजनमन्त्रिता ॥
इत्यादयो विभावाः स्युर्नटे काव्यसमन्विताः ॥ १४७८ ॥

**अविस्मयादित्यादि** । **सतां धर्माद्यर्थविशेषेष्विति** । आदिशब्देनार्थकामौ गृह्येते । अर्थविशेषाः पुरुषार्थाः, तेषु । विस्मयो गर्वस्तदभावात्, संमोहश्चाज्ञानं तदभा-

---

* घ. ङ. च. पुस्तकेषु कार्यतत्त्वविनिश्चय इति पाठोऽयं च मूले टीकायां च युक्ततरः ।

---

१ ख. ग. 'भुजः प्रेक्षणे शस्तो स चेत्क्रोधो' । घ. ङ. 'भुजः प्रे' । च 'भुज्यः प्रेक्षणे श' ।

वात्, विषादो दुःखं तदभावाच्च हेतोर्यः कार्यस्तत्त्वविनिश्चयः स वीरस्य विभावो भवति । एतेन विस्मयादियुक्तस्य कार्यतत्त्वविनिश्चयो न जायत इत्युक्तं भवति । **इत्यादय इति** । आदिशब्देन लोके वीरोत्पादकत्वेन येऽन्ये दृष्टास्ते ग्राह्याः । **नटे काव्यसमन्विता इति** । काव्यशब्देन वाचिकाभिनय उच्यते । तेन सह नटैरभिनीता इत्यर्थः ॥ १४७६ ॥ १४७७ ॥ १४७८ ॥

**सामादीनामुपायानां यथास्वं विनियोजने ॥**
**विज्ञत्वं स्थैर्यधैर्ये च शौर्यं त्यागो यथोचितम् ॥ १४७९ ॥**
**भाषणं भावगम्भीरवाक्यस्येत्येवमादयः ॥**
**सर्वे गर्वानुभावाश्चानुभावाः स्युरथ स्मृतिः ॥ १४८० ॥**
**औग्र्यमावेगरोमाञ्चावमर्षश्च धृतिर्मतिः ॥**
**एवंप्रभृतयो भावा यत्र स्युर्व्यभिचारिणः ॥ १४८१ ॥**

वीरस्यानुभावानाह—**सामादीनामित्यादि** । **सर्वे गर्वानुभावाश्चेति** । व्यभिचारिभावस्य गर्वस्य येऽनुभावा वक्ष्यन्ते ते सर्वेऽपि वीरानुभावा भवन्तीत्यर्थः । व्यभिचारिण आह—**अथ स्मृतिरित्यादि** ॥ १४७९ ॥ १४८० ॥ १४८१ ॥

**उत्साहः स्थायिभावश्च धीरा वीरं तमूचिरे ॥**
**उत्तमप्रकृतिष्वेव पुरुषेष्वेष जायते ॥ १४८२ ॥**

यत्र चोत्साहः स्थायिभावो भवति धीरा विद्वांसस्तं वीरमूचिरे ॥ १४८२ ॥

**सम्यग्विज्ञाय षाड्गुण्य(ण्यं)प्रयोगो गीयते नयः ॥ १४८३ ॥**

**उत्तमप्रकृतिष्वेवेति** । मध्यमाधमपुरुषयोर्वीरो न जायत इत्यर्थः । वीरविभावत्वेनोक्तस्य नयस्य स्वरूपमाह—**सम्यग्विज्ञायेत्यादि** । षड्गुणाः षाड्गुण्यम् ॥ १४८३ ॥

**संधिश्च विग्रहो यानमासनं संश्रयस्तथा ॥**
**द्वैधीभाव इति प्रोक्ता नीतिशास्त्रेषु षड्गुणाः ॥ १४८४ ॥**

प्रसङ्गात्षड्गुणानाह—**संधिश्चेत्यादि** ॥ १४८४ ॥

**इन्द्रियाणां जयं प्राह विनयं शंकरप्रियः ॥**
**प्रतापः पौरुषोद्भूता प्रसिद्धिः शत्रुतापिनी ॥ १४८५ ॥**

विनयस्वरूपमाह—**इन्द्रियाणामित्यादि** । प्रतापस्य लक्षणमाह—**प्रताप इत्यादि** ॥ १४८५ ॥

**कीर्तिः सुहृदुदासीनजनानन्दप्रदं यशः ॥**
**सामदाने भेददण्डावित्युपायचतुष्टयम् ॥ १४८६ ॥**

---

१ ख. ग. ङ. 'ज्ञानपा' । च. 'ज्ञाय वैगुण्यं प्र' ।

कीर्तिलक्षणमाह—**कीर्तिरित्यादि**। सामादीनामित्यत्राऽऽदिशब्देन ग्राह्यानाह—**सामेत्यादि** ॥ १४८६ ॥

**स्थैर्यं त्वचलचित्तत्वं धैर्यं गाम्भीर्यशालिता ॥**
**शौर्यं भवेदनुद्भूतभयं युद्धप्रवर्तनम् ॥ १४८७ ॥**

स्थैर्यधैर्ययोर्लक्षणमाह—**स्थैर्यं त्वचलचित्तत्वं धैर्यं गाम्भीर्यशालितेति**। शौर्यस्य लक्षणमाह—**शौर्यं भवेदिति** ॥ १४८७ ॥

**वीरः स्यादुचिते युद्धे रौद्रस्त्वनुचिते भवेत् ॥ १४८८ ॥**

**उचिते युद्धे वीरः स्यादिति**। यत्र नायकप्रतिनायकौ तुल्यबलौ तदुचितं युद्धम्। यथा रामरावणयोस्तत्र वीर एव। **रौद्रस्त्वनुचिते भवेदिति**। यत्र त्वेकः प्रबलोऽन्यो दुर्बलस्तदनुचितं युद्धम्। यथा भीमदुःशासनयोस्तत्र रौद्र एव ॥ १४८८ ॥

वीरस्य त्रैविध्यमाह—

**दानवीरो धर्मवीरो युद्धवीर इति त्रिधा ॥**
**वीरो दानादयस्तत्र विभावाः प्रतिनायके ॥**
**नायके त्वनुभावाः स्युर्वीरस्येति विदां मतम् ॥ १४८९ ॥**

**दानवीर इत्यादि**। तत्र त्रिविधे वीरे। **प्रतिनायके दानादयो विभावा इति**। प्रतिनायकेन कृतं दानं नायकाश्रयस्य दानवीरस्य विभावः। प्रतिनायककृतो धर्मो नायकाश्रयस्य धर्मवीरस्य विभावः। तथा प्रतिनायककृतं युद्धं नायकाश्रयस्य युद्धवीरस्य विभावो भवतीत्यर्थः। **नायके त्वनुभावाः स्युरिति**। नायककृतानि दानधर्मयुद्धानि तु वीरस्य नायकनिष्ठवीरस्यानुभावा भवेयुरिति विदां विदुषां मतं संमतम् ॥ १४८९ ॥

इति वीरः।

अथ भयानकं लक्षयितुं तद्विभावानाह—

**रक्षःपिशाचभल्लूकप्रभृतेर्भीषणाकृतेः ॥**
**दर्शनं श्रवणं शून्यागारारण्यप्रवेशयोः ॥ १४९० ॥**
**विकृतस्य ध्वनेस्त्रासोद्वेगयोः परसंस्थयोः ॥**
**श्रवणं चानुसंधानं बन्धूनां वधबन्धयोः ॥ १४९१ ॥**
**एवमाद्या विभावाः स्युरथ नेत्रकराङ्घ्रिणः ॥**
**मध्ये मध्ये स्तम्भकम्पौ रोमाञ्चनिचयस्तथा ॥ १४९२ ॥**
**शुष्कोष्ठतालुता कम्प्रहृदयत्वं विवर्णता ॥**
**मुखस्य स्वरभेदश्च गात्रेस्रंसो विलक्ष्यता ॥ १४९३ ॥**

१ ङ. °म्प्रशरीरत्वं। २ च. °त्रस्तम्भो वि°।

कांदिशीकतया दृष्टेरनुभावा भवन्त्यमी ॥
अथ स्तम्भादयोऽप्यष्टौ दैन्यमावेगचापले ॥ १४९४ ॥
शङ्कामोहावपि त्रासापस्मारमरणादयः ॥
यत्र संचारिणः स्थायि भयं स स्याद्भयानकः ॥ १४९५ ॥

**रक्षःपिशाचभल्लूकप्रभृतेरित्यादि** । शून्यागारारण्यप्रवेशयोरित्यादीनां यथायोगं दर्शनश्रवणानुसंधानैः संबन्धः कर्तव्यः । अनुभावानाह—**अथ नेत्रकराङ्घ्रिण इत्यादि** । प्राण्यङ्गत्वाद्वंद्वैकवद्भावः । मुखस्य विवर्णतेत्यन्वयः । संचारिण आह—**अथ स्तम्भादय इत्यादि** । यत्र भयं स्थायि भवति स भयानकः स्यात् ॥१४९०॥ ॥ १४९१ ॥ १४९२ ॥ १४९३ ॥१४९४ ॥ १४९५ ॥

वास्तवं कृत्रिमं चेति भयं द्वेधा निगद्यते ॥ १४९६ ॥

तस्य भयस्य द्वैविध्यमाह—**वास्तवमित्यादि** ॥ १४९६ ॥

स्त्रीणां च नीचप्रकृतेः पुंसः स्याद्वास्तवं भयम् ॥
मध्यमे चोत्तमे पुंसि कृत्रिमं तदुदाहृतम् ॥ १४९७ ॥

वास्तवस्याऽऽश्रयमाह—**स्त्रीणामित्यादि** । कृत्रिमस्याऽऽश्रयमाह—**मध्यमे चेत्यादि** ॥ १४९७ ॥

स्वभावादभयौ तौ हि स्वामिनं च गुरुं प्रति ॥
भयं विनयबोधाय दर्शयेतामतात्त्विकम् ॥ १४९८ ॥

मध्यमोत्तमाश्रयस्य भयस्य कृत्रिमत्वं प्रतिपादयति—**स्वभावादभयावित्यादि** । तौ मध्यमोत्तमौ ॥ १४९८ ॥

नीचैः स्वभावबोधार्थं तत्कार्यं मृदुचेष्टितैः ॥ १४९९ ॥

**नीचैरिति** । तदतात्त्विकं भयं नीचैः कर्तृभिर्मृदुचेष्टितैः करणैः स्वभावबोधार्थं नीचत्वप्रकाशनाय कदाचित्कार्यम् ॥ १४९९ ॥

भयानकस्य त्रैविध्यमाह—

स्वहेतूत्थः कृत्रिमश्च वित्रासितकमित्यपि ॥
भयानकस्त्रिधा तत्र प्रथमोऽन्वर्थनामकः ॥ १५०० ॥
कृत्रिमस्तूत्तमकृतो गुर्वादीन्प्रत्यवास्तवः ॥
विभीषिकार्थो बालादेर्वित्रासितकमिष्यते ॥ १५०१ ॥

**स्वहेतूत्थ इत्यादि** । **विभीषिकार्थ इति** । बालादीन्प्रति भीषयितुं प्रयुक्तः ॥ १५०० ॥ १५०१ ॥

**इति भयानकः ।**

---

१ ख. ग. च. नीचत्वाभा° । २ ख. ग. °षिकोत्थो बा° ।

स्वभावाद्धातुदोषाद्वा वस्त्वत्यन्ताप्रियात्मकम् ॥
निषिद्धमतितृप्तेश्चारुचितं मलमिश्रितम् ॥ १५०२ ॥
अनिष्टफलदानेन मुहुरुद्वेगदायकम् ॥
स्याद्विभावोऽथानुभावो उत्कम्पो गात्रधूननम् ॥ १५०३ ॥
संकोचनं च नासोष्ठहनूनां ष्ठीवनं तथा ॥
पदन्यासोऽप्यनियतः पिधानं नासयोर्दृशोः ॥ १५०४ ॥
अथ संचारिणो मोहावेगापस्मारमृत्यवः ॥
व्याधिश्च यत्र बीभत्सः स स्थायिन्या जुगुप्सया ॥ १५०५ ॥

अथ बीभत्सं लक्षयितुं तद्विभावानाह—**स्वभावादित्यादि** । अनुभावानाह—**उत्कम्प इत्यादि** । संचारिण आह—**मोहेत्यादि** । यत्रैते विभावादयो भवन्ति स स्थायिन्या जुगुप्सयोपलक्षितो बीभत्सो भवति ॥ १५०२ ॥ १५०३ ॥ १५०४ ॥ ॥ १५०५ ॥

शुद्धोऽशुद्धोऽत्यन्तशुद्धो बीभत्सस्त्रिविधो मतः ॥ १५०६ ॥

तस्य त्रैविध्यमाह—**शुद्धोऽशुद्ध इत्यादि** ॥ १५०६ ॥

आद्यौ रुधिरविष्ठादिशुद्धाशुद्धविभावजौ ॥
शुद्धधर्मोद्भवोऽत्यन्तशुद्धः संसारगोचरः ॥ १५०७ ॥

आद्यौ **शुद्धाशुद्धौ** । **रुधिरविष्ठादिशुद्धाशुद्धविभावजाविति** । रुधिरादिः **शुद्धो** विभावः । तस्माज्जातः शुद्धः । विष्ठादिरशुद्धो विभावः । तस्माज्जातोऽशुद्धः । **शुद्धधर्मोद्भव इति** । शुद्धधर्मो निवृत्तिधर्मः । तत उद्भूतः । संसारगोचरो हेयत्वेन संसारो विषयो यस्य स तथोक्तः । सोऽत्यन्तशुद्धो बीभत्सः ॥ १५०७ ॥

इति बीभत्सः ।

दुर्लभाभीष्टसंप्राप्तिः खेचराणां विलोकनम् ॥
विमानानां च मायानामिन्द्रजालस्य दर्शनम् ॥ १५०८ ॥
प्रासादोपवनादेरप्यपूर्वस्यातिशायिनः ॥
दर्शनं श्रवणं वाक्यं शिल्पाद्यतिशयान्वितम् ॥ १५०९ ॥
एते यत्र विभावाः स्युरनुभावास्तु नेत्रयोः ॥
विस्तारणं निर्निमेषमीक्षणं पुलकोद्गमः ॥ १५१० ॥
साधुवादोल्लुकसने चाऽऽनन्दाद्धारवस्तथा ॥
गद्गदं वचनं स्वेदवेपथू हर्षगोचराः ॥ १५११ ॥

---

१ ख. ग. 'श्चानुचि'। २ ख. ग. घ. ङ. 'मा हृतक'। ३ ख. ग. घ. संचार' । ४ ग. ष. 'याचित'।

स्पर्शग्रहाश्रिताश्चानुभावाः संचारिणस्त्वमी ॥
स्तम्भः स्वेदश्च रोमाञ्चः प्रलयो गद्गदं वचः ॥ १५१२ ॥
आवेगसंभ्रमौ जाड्यमिति यत्राथ विस्मयः ॥
स्थायी तमद्भुतं प्राह श्रीमत्सोढलनन्दनः ॥ १५१३ ॥

अथाद्भुतं लक्षयितुं तद्विभावानाह—**दुर्लभाभीष्टसंप्राप्तिरित्यादि** । दुर्लभस्याभीष्टस्य वस्तुनः संप्राप्तिः । अनुभावानाह—**नेत्रयोर्विस्तारणमित्यादि** । **साधुवादोल्लुकसने इति** । साधुवादश्चोल्लुकसनं च ॥ १५०८ ॥ १५०९ ॥ १५१० ॥ ॥ १५११ ॥ १५१२ ॥ १५१३ ॥

माया मिथ्याप्रकटितं रूपादिपरिवर्तनम् ॥ १५१४ ॥

मायाया लक्षणमाह—**मायेत्यादि** ॥ १५१४ ॥

असंभाव्यस्य सत्त्वस्य दर्शनं विविधौषधैः ॥
हस्तलाघवतो मन्त्रैरिन्द्रजालं प्रकीर्तितम् ॥ १५१५ ॥

इन्द्रजालस्य लक्षणमाह—**असंभाव्यस्येत्यादि** ॥ १५१५ ॥

गात्रोद्धूननमाह्लादादत्रोल्लुकसनं मतम् ॥
किंचिदाकुञ्चिते नेत्रे स्पर्शः स्कन्धकपोलयोः ॥
भ्रूक्षेपणं चानुभावास्तत्र स्पर्शग्रहाश्रिताः ॥ १५१६ ॥

उल्लुकसनस्य स्वरूपमाह—**गात्रोद्धूननमित्यादि** । स्पर्शग्रहाश्रितानुभावानाह—**किंचिदाकुञ्चिते इत्यादि** । *भूत्वा अभिनवा रसान्तरेष्वयातयामा इत्यर्थः ॥ १५१६ ॥

आनन्दजस्तथा दिव्यो द्विविधोऽभिदधेऽद्भुतः ॥
आद्यो मनोरथावाप्तेर्दिव्यवस्तूद्भवोऽपरः ॥ १५१७ ॥

अद्भुतद्वैविध्यमाह—**आनन्दज इत्यादि** ॥ १५१७ ॥

इत्यद्भुतः ।

अथ शान्तस्य विभावानाह—

संसारभीरुता दोषदर्शनं विषयेषु च ॥
योगिसङ्गो मुनीनां च श्रुताः शमदमक्षमाः ॥ १५१८ ॥

**संसारभीरुतेत्यादि** । श्रुता मुनीनां शमदमक्षमा यत्र विभावा इति वक्ष्यमाणेन संबन्धः ॥ १५१८ ॥

---

* अत्र ख. ग. पुस्तकयोर्नूत्ना इति पाठस्तत्र नूत्ला इति स्यात् । मूले तत्रेत्यस्य स्थाने नूत्ला इति कल्प्यं स्यात् ।

---

१ ख. ग. घ. ङ. सत्यस्य ।

अध्यात्मविषया गोष्ठी तापसास्तापसाश्रमाः ॥
भूरिनिर्झरझांकारि वारि तीर्थानि तीं(तैं?)र्थिकाः[1] ॥ १५१९ ॥
सरितः पुण्यपयसो नीवाराङ्कितसैकताः ॥
शैवं च वैष्णवं क्षेत्रं विजनानि वनानि च ॥ १५२० ॥
भक्ता भक्तिरसोन्मत्ताः शंकरस्य हरेरपि ॥
विष्णुभक्तिप्रभावाद्या विभावा यत्र संमताः ॥ १५२१ ॥

भूरिनिर्झरे[2]झांकारीति । भूरिश्चासौ निर्झरश्च तस्य झांकारः । झांकार इत्यनुकरणम् । सोऽस्यास्तीति वारिणो विशेषणम् । भूरीति पृथक्पदं वा वारिविशेषणम् ॥ १५१९ ॥ १५२० ॥ १५२१ ॥

मन्दस्पन्दं(न्दो) वहिश्चित्तमानन्दाश्रुप्लुते दृशौ ॥
रोमाञ्चकञ्चुका मूर्तिर्मोक्षशास्त्रार्थचिन्तनम् ॥ १५२२ ॥
ब्रह्मविद्योपदेशश्च संवादस्तत्त्वगोचरः ॥
नासाग्रानुगते नेत्रे ज्ञानमुद्राप्रदर्शनम् ॥ १५२३ ॥
इत्यादयोऽनुभावाः स्युरिमे तु व्यभिचारिणः ॥
उन्मादः परमानन्दरसपानसमुद्भवः ॥ १५२४ ॥
हर्षो धृतिः समीचीनो विबोधश्च स्मृतिर्मतिः ॥
निर्वेदस्तत्त्वबोधोत्थः स्थायी शान्तो भवेदसौ ॥ १५२५ ॥

अनुभावानाह—मन्दस्पन्द इत्यादि । व्यभिचारिण आह—उन्माद इत्यादि । रसान्तरोन्मादादस्य वैलक्षण्यमाह—परमानन्दरसपानसमुद्भव[3] इति । समीचीनो विबोध इति । विबोधस्य समीचीनत्वमात्मविषयत्वम् । स्मृतिमत्योरप्यत्र तादृशत्वं मन्तव्यम् । यत्र तत्त्वबोधोत्थो निर्वेदः स्थायी भवति, असौ शान्तो भवेत् ॥१५२२॥ ॥ १५२३ ॥ १५२४ ॥ १५२५ ॥

र[4]त्यादि[5]भेदविधुरो विषयोपप्लवोज्झितः ॥
परानन्दघनै[6]कात्मनि[7]र्भासः शान्त उच्यते ॥ १५२६ ॥

शान्तरसस्य स्वरूपमाह[8]—रत्यादिभेदविधुर इत्यादि । तस्य बाह्यविषयालम्बनत्वाभावाद्रव्या(द्रत्या)दिभेदविधुरत्वं द्रष्टव्यम् । विषयोपप्लवोज्झित इति । विषयकृत उपप्लवः । परिच्छिन्नत्वादिकं तेनोज्झितः । अत एव परानन्दघनैकात्मा परमानन्देन घनो निविडः । एकोऽभिन्न आत्मा स्वरूपं यस्येति स तथोक्तः । निर्भासो ज्ञानम् ॥ १५२६ ॥

---

१ ख. ग. तीर्थकाः । २ ख. ग. 'रझात्कारी' । ३ ख. ग. 'विबोधत्वं । ४ घ. इत्यादि' । ५ ख. ग. 'दिबोधवि' । ६ ङ. 'कात्म्यनि' । ७ च. 'निर्भरः ज्ञा' । ८ ख. ग. 'ह । इत्या' ।

स्वतो विषयवैमुख्यं शमः स्थाय्यथवा भवेत् ॥
नाट्यनिर्वाहको मध्ये मध्ये संचारिसंभवः ॥ १५२७ ॥

मतान्तरेण स्थाय्यन्तरमाह—**अथ वेति** । शमस्य स्वरूपमाह—**स्वतो विषयवैमुख्यमिति** । **स्वत इति** । तात्कालिकातितृप्त्यादिनिमित्तान्तरराहित्येनेत्यर्थः । केवलशमस्याभिन्नरूपत्वादभिनयभेदाभावे कथं नाट्यरसत्वमित्यत्राऽऽह—**नाट्यनिर्वाहक इत्यादि** ॥ १५२७ ॥

शान्तोचितानभिनयानाह—

स्वभावेऽभिनयाः पूर्वमाङ्गिका ये निरूपिताः ॥
ते शान्तविषया[2] यस्माच्छान्तः प्रकृतिरात्मनः ॥ १५२८ ॥

**स्वभावेऽभिनयाः पूर्वमित्यादि** । यस्मादेवमतः शान्तो[3] नामाऽऽत्मनः प्रकृतिः स्वभावः ॥ १५२८ ॥

विहाय विषयौन्मुख्यं निजानन्दस्थितिर्यतः ॥
आत्मनः कथ्यते शान्तः स्वभावोऽसौ मतस्ततः ॥ १५२९ ॥

शान्तस्य स्वभावत्वं प्रतिपादयति—**विहायेत्यादि** ॥ १५२९ ॥

इति शान्तः ।

मतान्तरेण रसान्तराणि शङ्कते—

भक्तिं स्नेहं तथा लौल्यं केचित्त्रीन्मन्वते रसान् ॥
श्रद्धार्द्रताभिलाषांश्च स्थायिनस्तेषु ते विदुः ॥ १५३० ॥

**भक्तिमित्यादि** । **श्रद्धार्द्रताभिलाषानिति** । भक्तिरसे श्रद्धा स्थायिनी । स्नेहरस आर्द्रता स्थायिनी । लौल्यरसेऽभिलाषः स्थायीति यथासंख्यं द्रष्टव्यम् ॥ १५३० ॥

तद्दूषयति—

तदसद्रतिभेदौ हि भक्तिस्नेहौ नृगोचरौ ॥
व्यभिचारित्वमनयोर्नृनार्योः स्थायिनौ तु तौ ॥ १५३१ ॥
अयुक्तविषया तृष्णा लौल्यं तद्धास्यकारणम् ॥
अतो रसा नवैवेति मुनिना संप्रधारितम् ॥ १५३२ ॥

**तदसदित्यादि** । हि यस्मात्कारणान्नृगोचरौ केवलपुरुषविषयौ परस्परं पुरुषविषयावित्यर्थः । तादृशौ । **भक्तिस्नेहौ रतिभेदाविति** । तयोर्भावत्वमेवेत्यर्थः । भावत्वेऽपि स्थायित्वाभावान्न* रसत्वमिति यावत् । किं त्व(चा)नयोर्भक्तिस्नेहयो रतिभेदत्वेऽपि व्यभिचारित्वमेव । यथाऽऽह **काव्यप्रकाशकारः**—" रतिर्देवा-

* अत्राभावपदरहितं स्थायित्वादित्येतावन्मात्रमेव युक्तम् ।

१ ख. ग. 'मस्य विभि' । २ ख. ग. 'यास्तस्मा' । ३ ख. 'न्तो नित्यमात्मस्व' ।

दिविषया व्यभिचारी तथाऽङ्कितः । भावः प्रोक्तः " इति । तर्हि भक्तिस्नेहयोः कुत्र स्थायित्वमित्याकाङ्क्षायामाह—**नृनार्योरिति** । ना च नारी च नृनार्यौ । तयोः परस्परविषयत्वे भक्तिस्नेहयो रतिभेदत्वेन शृङ्गार एव स्थायिनौ मतौ । यथा रामभद्रे सीताया भक्तिः । तस्यां च तस्य स्नेहश्च वर्ण्यते कविभि[रत]स्तौ तयोः स्थायिनावेव रतिभेदतया मन्तव्यौ । अतो भक्तिस्नेहयोरपि रतावन्तर्भावान्न पृथग्रसत्वमिति भावः । लौल्यस्यापि हासेऽन्तर्भावं वक्तुं तत्स्वरूपमाह—**अयुक्तविषयेत्यादि** । अयुक्तविषयाऽसंभाव्यमानवस्तुविषया तृष्णा लौल्यमित्युच्यते । तल्लौल्यं हास्यकारणं हास्यस्य विभावो भवति । यथा सीताविषया रावणस्य तृष्णा कविभिर्वर्णिता सती श्रोतॄणां हास्यं जनयति । तस्या न पृथग्रसत्वमिति भावः । निगमयति—**अतो रसा नवैवेति** । तत्राऽऽचार्यसंमतिमाह—**इति मुनिना संप्रधारितमिति** ॥ १९३१ ॥ १९३२ ॥

रत्यादीनां स्थायित्वे संचारित्वे च व्यवस्थापकं कारणभेदं दर्शयति—

**रत्यादयः *स्थायिभावाः स्युर्भूयिष्ठविभावजाः ॥**
**स्तोकैर्विभावैरुत्पन्नास्त एव व्यभिचारिणः ॥**
**रसान्तरेष्वपि तदा यथायोगं भवन्ति ते ॥ १५३३ ॥**

**रत्यादय इत्यादि** । रत्यादयो नवापि । **भूयिष्ठविभावजाश्चे[दि]ति** । भूयिष्ठाश्च ते विभावाश्चाऽऽलम्बनोद्दीपनरूपाः । तैर्जाताश्चेत्स्थायिनः स्युः । दृढसंस्कारवत्तया स्थिरा भवन्ति । त एव रत्यादयः स्तोकैरल्पैर्विभावैरुत्पन्नाश्चेत् । अभिभूतसंस्कारवत्तया व्यभिचारिणो भवन्ति । क्षणिका भवन्तीत्यर्थः । **रसान्तरेष्वित्यादि** । ते रत्यादयः । तदाऽल्पविभावजत्वेन व्यभिचारित्वे । रसान्तरेषु रत्यादीनां स्थायित्वे प्रतिनियतेभ्यः शृङ्गारादिभ्योऽन्येषु । यथायोगं योग्य(ग)मनतिक्रम्येत्यर्थः । यस्मिन्रसे रत्यादिषु यः संचारी भवितुं योग्यः स एव तत्र वर्णनीय इत्यर्थः ॥ १९३३ ॥

यथायोगशब्देनोक्तमर्थं विवृणोति—

**यथा हि हासः शृङ्गारे रतिः शान्ते च दृश्यते ॥**
**वीरे क्रोधो भयं शोके जुगुप्सा च भयानके ॥ १५३४ ॥**
**उत्साहविस्मयौ सर्वरसेषु व्यभिचारिणौ ॥**
**शमः सर्वरसेष्वस्ति +स्थैर्यत्वेऽव्यभिचार्यसौ ॥ १५३५ ॥**

**यथा हीत्यादि** । **उत्साहविस्मयौ सर्वरसेषु व्यभिचारिणाविति** । उत्साहस्य वीर एव स्थायित्वम् । इतरेष्वष्टसु योग्यतया व्यभिचारित्वम् । तथा विस्मयस्याद्भुत

* अत्र टीकानुरोधेन स्थायिनश्चेत्स्युरिति पाठो युक्तः । + स्थैर्यात्त्वव्यभिचार्यसाविति घ. ङ. च. पुस्तकस्थः पाठ एव साधुः ।

१ ग. च. समः ।

एव स्थायित्वमितरेषु व्यभिचारित्वमिति सर्वशब्दार्थः संकोचनीयः । **शमः सर्वरसेष्व-स्तीति** । अयमर्थः । लोके शृङ्गारादिष्वष्टसु मध्ये यं कंचन रसमनुभवत एव पुंसो जन्मान्तरसुकृतविशेषवशाच्छम उत्पद्यत इति तत्तद्रससंबन्धाच्छमस्य सर्वरसेष्वस्तित्व-मिति । ततः शान्ते शमः स्थायी भवतु । अन्यत्र व्यभिचारी भवत्वित्याशङ्कायामाह— **स्थैर्यात्त्वव्यभिचार्यसाविति** । असौ शमस्तु स्वतो विषयवैमुख्यात्मकः सन्नुत्पन्नः स्थैर्यात्पुनर्विषयाभिलाषाभावेन वासनायाः स्थिरत्वात्कदाचिदव्यभिचार्येव । शान्ते नित्यं स्थाय्येवेत्यर्थः । यस्तु प्रथममुत्पन्नोऽपि पुनरपि मनसो विषयाभिमुखतया निवर्तते स तूक्तलक्षणः शम एव न भवति । किं तु शमाभास एव । अत्र स्वरूपसत एव रत्यादेः स्थायित्वं संचारित्वं च विचार्यते न त्वाभासस्येति सर्वमवदातम् ॥ १५३४ ॥ १५३५ ॥

**इति नवरसलक्षणम् ।**

---

## अथ व्यभिचारिणां निर्वेदादीनां लक्षणम् ।

पूर्वं रसलक्षणे रसं प्रति निमित्तकारणत्वेन विभावा उक्ताः । रसस्य कार्यत्वेनानु-भावा अप्युक्ताः । रसोपादानकारणे(णत्वे)न स्थायिनोऽपि लक्षिताः । संचारिणस्तु रससहकारितया नाममात्रेणोद्दिष्टा न तु प्रत्येकं लक्षिता इतीदानीं निर्वेदादीनां विशेष-लक्षणानि वक्तुमाह—अथेति ।

> **आक्रोशनमधिक्षेपो व्याधिक्रोधौ च ताडनम्[1] ॥**
> **दारिद्र्यमिष्टविरहः परवृद्धेश्च दर्शनम् ॥ १५३६ ॥**
> **नीचेष्विति विभावाः स्युरुत्तमे त्वपमाननम् ॥**
> **तत्त्वबोधश्च यत्र स्यादनुभावास्तु रोदनम् ॥ १५३७ ॥**

निर्वेदादीनां भावानां रसवन्मनोविकारविशेषरूपतया तत्तद्विभावानुभावकथनपूर्वकं लक्षयति—" **आक्रोशनमधिक्षेपः** " इत्यारभ्य " **स्रस्तगात्रताऽक्षिनिमीलनम्** " इत्यन्तेन ग्रन्थसंदर्भेण ॥ १५३६ ॥ १५३७ ॥

> **निश्वासोच्छ्वसिते दीनमुखता संप्रधारणम् ॥**
> **इत्यादयः स निर्वेदो भावः सूरिभिरिष्यते ॥ १५३८ ॥**

**इति निर्वेदः ।**

> **व्याधिर्वान्तिर्विरेकश्चोपवासो नियमस्तपः ॥**
> **मनस्तापोऽतिपानातिव्यायामसुरतानि च ॥ १५३९ ॥**
> **निद्राछेदोऽध्वगमनं क्षुत्पिपासादयस्तथा ॥**
> **विभावाः स्युरथ स्रस्ताधरनेत्रकपोलता ॥ १५४० ॥**

---

[1] ख. ग. ताडना ।

मन्दावुत्क्षेपनिक्षेपौ पादयोस्तनुगात्रता ॥
विवर्णशिथिलाङ्गत्वं कम्पानुत्साहतादयः ॥
यत्र भावा(वेऽ)नुभावाः स्युः सा ग्लानिरभिधीयते॥ १५४१ ॥

निर्वेदानुभावेषु—संप्रधारणमिति । इत्यादय इत्यत्राऽऽदिशब्देन लोकसिद्धा अन्येऽप्यनुभावा ग्राह्याः ॥ १५३८ ॥ १५३९ ॥ १५४० ॥ १५४१ ॥

इति ग्लानिः ।

चौर्यराजापराधादेरकार्याद्ग्रहणं नृणाम्[1] ॥
अन्येषु तत्सहायेषु विभावश्चेदथाऽऽत्मनः ॥ १५४२ ॥
अन्येनादर्शने यत्र पार्श्वयोर्मुहुरीक्षणम् ॥
कण्ठोष्ठमुखशोषश्च जिह्वायाः[2] परिलेहनम् ॥ १५४३ ॥
वेपथुर्मुखवैवर्ण्यं गुरुविह्वलजिह्वता ॥
उन्मुखेक्षणमित्यादिरनुभावगणो यदा ॥ १५४४ ॥
नीचेषूत्तममध्येषु नरेषु मृदुचेष्टितैः ॥
सोत्तमानामपि स्त्रीणां भीरुत्वाद्भयकृद्भवेत् ॥ १५४५ ॥

शङ्कालक्षणे—चौर्येत्यादि । चौर्यराजापराधादेरकार्याद्धेतोर्नृणां चौर्यादिकर्तॄणां ग्रहणं तत्सहायेष्वन्येषूत्पद्यमानायाः शङ्काया विभावश्चेत्तदा । तन्निष्ठानुभावानाह—अथाऽऽत्मन इत्यादि । यदैवमादिरनुभावगणो भवति तदानीं तेष्वसंदेहरूपा शङ्का भवेदित्यन्वयः । सोत्तमानामिति । सा शङ्कोत्तमानां पुंसां स्त्रीणामपि भीरुत्वाद्भीरुस्वभावतया । भयकृदिति । भयानकस्य विभावो भवतीत्यर्थः । शिष्टं स्पष्टम् ॥१५४२॥ ॥ १५४३ ॥ १५४४ ॥ १५४५ ॥

प्रियविप्रियजा शङ्का शृङ्गारे शार्ङ्गिणोदिता ॥
चौर्यराजापराधादिप्रभवा तु भयानके ॥ १५४६ ॥
परस्था स्वसमुत्था च द्वेधा शङ्का निगद्यते ॥
नृषु भीरुस्वभावेषु तरलालोकनादिभिः ॥ १५४७ ॥
सापराधत्वशङ्का याऽन्येषां सा परसंस्थिता ॥
स्वसमुत्था परे ज्ञास्यन्त्यपराधं ममेत्यसौ ॥ १५४८ ॥
स्वशङ्कायां परज्ञानशङ्का या स्वसमुत्थिता ॥
सहभावोऽवहित्थेन शङ्काया दृश्यते रसे ॥ १५४९ ॥

॥ १५४६ ॥ १५४७ ॥ १५४८ ॥ १५४९ ॥

इति शङ्का ।

---

१ ख. ग. °निः । नृपापराधचौर्यादेर्येत्कार्यो°। २ ख. ग. °ह्वाया वलनं तथा। निश्वासो मुख°।

नृपापराधोऽसद्दोषकीर्तनं चोपधारणम् ॥
विभावाः स्युरथो बन्धो वधस्ताडनभर्त्सने ॥
एते यत्रानुभावास्तदौग्र्यं निर्दयतात्मकम् ॥ १५५० ॥

इत्यौग्र्यम् ।

चिन्तौत्सुक्यान्मनस्तापाद्दौर्गत्याच्च विभावतः ॥ १५५१ ॥
अनुभावात्तु शिरसो व्यावृत्तेर्[1]गात्रगौरवात् ॥
देहोपस्करणत्यागाद्दैन्यं भावं विभावयेत् ॥ १५५२ ॥

इति दैन्यम् ।

नानापराधो विद्वेषः परस्यैश्वर्यसंप[2]दाम् ॥
सौभाग्यमेधाविद्यादेर्दर्शनं च विभावकम् ॥ १५५३ ॥
अनुभावास्त्वमर्षादिदोषोक्तिर्गुणनिह्नवः ॥
गुणस्य दोषीकरण[3]मप्रेक्षणमधोमुखम् ॥
अवज्ञाभ्रुकुटीत्याद्या यत्रासूयाममूं विदुः ॥ १५५४ ॥

इत्यसूया ।

मद्यपानं विभावोऽथानु[4]भावाः पञ्च यत्र च ॥
शयनं हसनं गानं रोदनं परुषोक्तयः ॥ १५५५ ॥
उत्तमे पुरुषे स्वापो हासगाने तु मध्यमे ॥
रोदनं परुषोक्तिश्च भवतः पुरुषेऽधमे ॥ १५५६ ॥
स स्यान्मदः स च त्रेधा तरुणो मध्यमोऽधमः ॥
तरुणोऽल्पोऽधमै[5]स्त्वत्र प्रवृद्धोऽधमसंश्रयात् ॥ १५५७ ॥
सर्वेषां तरुणः प्रोक्तो मध्यमो मध्यनीचयोः ॥
पुमांसोऽधमसत्त्वा ये तेषामेवाधमो मदः ॥ १५५८ ॥
अव्यक्तासंगतैर्वाक्यै रोमाञ्चनिचयैस्तनोः ॥
सुकुमारस्खलद्गत्याऽभिनयेत्तरुणं मदम् ॥ १५५९ ॥
स्रस्तव्याकुलविक्षिप्तौ भुजौ स्खलितघूर्णिते ॥
नेत्रे गतिश्च कुटिलाऽनुभावा मध्यमे मदे ॥ १५६० ॥

॥ १९९० ॥ १९९१ ॥ १९९२ ॥ १९९३ ॥ १९९४ ॥ १९९९ ॥ १९९६ ॥
॥ १९९७ ॥ १९९८ ॥ १९९९ ॥ १६६० ॥

---

१ ख. ग. विचारये° । २ ख. ग. ङ. °पदा । सौ° । ३ ख. ग. °णमुत्प्रेक्ष° । ४ ङ. च. °नं पुरु° । ५ ङ. च. °मस्तत्र ।

गतिभङ्गः स्मृतेर्नाशो हिक्का छर्दिः कफस्रुतिः ॥
गुर्वी जिह्वा ष्ठीवनं चानुभावाः स्युर्मदेऽधमे ॥ १५६१ ॥
रङ्गे विधाय पानं तु नाटयेन्मदवर्धनम् ॥
पीत्वा रङ्गप्रवेशे तु मदक्षैण्याय बुद्धिमान् ॥
हर्षशोकभयोपायान्युगपद्दर्शयेद्बहून् ॥ १५६२ ॥

इति मदः ।

अध्वव्यायामसेवाद्यैर्विभावैरनुभावकैः ॥ १५६३ ॥
गात्रसंवाहनैरास्यसंकोचैरङ्गमोटनैः ॥
निश्वासैर्जृम्भितैर्मन्दैः पादक्षेपैः श्रमो यतः ॥ १५६४ ॥

इति श्रमः ।

विभावा यत्र दारिद्र्यमैश्वर्यं भ्रंशनं तथा ॥
इष्टार्थापहृतिश्चाथ श्वासोच्छ्वासावधोमुखम् ॥ १५६५ ॥
संतापः स्मरणं ध्यानं कार्श्यं देहानुपस्कृतिः ॥
अधृतिश्चानुभावाः स्युः सा चिन्ता परिकीर्तिता ॥
वितर्कोऽस्याः क्षणे पूर्वे पाश्चात्ये वोपजायते ॥ १५६६ ॥

इति चिन्ता ।

विवेकः श्रुतिसंपत्तिर्गुरुभक्तिस्तपस्विता ॥ १५६७ ॥
एते विषयभावेन करणत्वेन च स्थिताः ॥
इष्टाधिकानामिष्टानां लाभस्तु विषयत्वतः ॥ १५६८ ॥
क्रीडा करणभावेन विभावा यत्र संमताः ॥
प्राप्तभाग्योपभोगस्य त्वप्राप्तातीतभोगयोः ॥ १५६९ ॥
जीर्णे नष्टे चाविषादो न तु शोचनमित्यपि ॥
अनुभावद्वयं यत्र धृतिं तां ब्रुवते बुधाः ॥ १५७० ॥

इति धृतिः ।

पश्चिमप्रहरे रात्रेः स्वास्थ्यं निद्राक्षयस्तथा ॥
ध्यानं च मुहुरभ्यासः सदृशः श्रुतिदर्शने ॥ १५७१ ॥
एते यत्र विभावाः स्युरनुभावास्तु कम्पितम् ॥
उद्वाहितं च शीर्षस्यासदृशस्यावलोकनम् ॥ १५७२ ॥

॥ १६६१ ॥ १६६२ ॥ १९६३ ॥ १९६४ ॥ १९६५ ॥ १९६६ ॥१९६७॥
॥ १९६८ ॥ १९६९ ॥ १९७० ॥ १९७१ ॥ १९७२ ॥

---

१ च. गतेर्भङ्गः । २ ख. ग. घ. छर्दी । ३ घ. ॰भोग्यस्य । ४ च. क्षीणे । ५ ङ. ॰शीर्षे स्यात्सद॰ ।

भ्रूनतिश्च स्मृतिः सा स्यात्सुखदुःखप्रदायिनाम् ॥
चिरविस्मृतवस्तूनां स्मरणं स्मृतिरुच्यते ॥ १५७३ ॥
इति स्मृतिः ।
गुरुव्यतिक्रमोऽवज्ञा कृते त्यागेऽनुतापिता ॥
प्रतिज्ञातार्थनिर्वाहो विभावैरेभिरुद्गता ॥ १५७४ ॥
मुखावनमनं गूढवचनं च विचिन्तनम् ॥
वस्त्राङ्गुलीयकस्पर्शो नखानां कर्तनं मुहुः ॥ १५७५ ॥
भुवि लेखनमित्याद्यैर्व्रीडाभावोऽनुभाव्यते ॥
व्रीडानुताप[1]शुचिभिर्दृष्टा कार्ये कृते सति ॥ १५७६ ॥
इति व्रीडा[2] ।
देवजोपद्रवाद्देहपीडेष्टविरहादिकम् ॥
मर्मप्रहारोऽप्यस्थाने घोरचोरादिजं भयम् ॥ १५७७ ॥
तत्प्रतीकारशून्यस्य वैरानुस्मरणादयः ॥
विभावाः सन्ति यत्राथ पतनं देहघूर्णनम् ॥ १५७८ ॥
हृदयस्यानवस्थानमिन्द्रियाणामचेष्टता ॥
इत्यादयोऽनुभावास्तं मोहमाहुर्मनीषिणः ॥ १५७९ ॥
पश्यतो भीतिहेतुं तत्प्रतीकारमपश्यतः ॥
कार्यानिश्चयिनी चित्तवृत्तिर्मोहोऽभिधीयते ॥ १५८० ॥
इति मोहः ।
अतितृप्तिः स्वभावश्च गर्भव्याधिश्रमादयः ॥
विभावा अनुभावास्तु निद्रा तन्द्रासनाशनात्[3] ॥
ऋते सर्वक्रियाद्वेषो यत्राऽऽलस्यं तदुच्यते ॥ १५८१ ॥
इत्यालस्यम् ।
अमर्षप्रातिकूल्येर्ष्यारागद्वेषाश्च मत्सरः ॥
इति यत्र विभावाः स्युरनुभावास्तु भर्त्सनम् ॥ १५८२ ॥
वाक्पारुष्यं प्रहारश्च ताडनं वधबन्धने ॥
तच्चापलमना[4]लोच्याकार्यकारित्वमिष्यते ॥ १५८३ ॥

॥ १९७३ ॥ १९७४ ॥ १९७५ ॥ १९७६ ॥ १९७७ ॥१९७८॥१९७९॥
॥ १९८० ॥ १९८१ ॥ १९८२ ॥ १९८३ ॥

इति चापलम् ।

---

१ घ. 'तापः शु' । २ ख. ग. घ. ङ. 'दि च । म' । ३ ङ. 'शकृत् । ४ घ. 'लोच्य का' ।

देवभर्तृगुरुस्वामिप्रसादः प्रियसंगमः ॥ १५८४ ॥
मनोरथाप्तिरप्राप्यमनोरथधनागमः ॥
समुत्पत्तिश्च पुत्रादेर्विभावो यत्र जायते ॥ १५८५ ॥
नेत्रवक्त्रप्रसादश्च प्रियोक्तिः पुलकोद्गमः ॥
अश्रुस्वेदादयश्चानुभावा हर्षं तमादिशेत् ॥ १५८६ ॥

इति हर्षः ।

विद्याधनबलैश्वर्याधिकैर्मध्येसभं नृभिः ॥
अधिक्षेपादमर्षः स्यात्प्रतीकारस्पृहात्मकः ॥
नृणामुत्साहिनामेव स स्यात्तस्यानुभावकः ॥ १५८७ ॥
स्वेदोऽधोमुखता मूर्धकम्पो निर्लक्षचित्तता ॥
उपायान्वेषणं चित्तोत्साहस्तस्यानुभावकाः ॥ १५८८ ॥

इत्यमर्षः ।

सत्युपायेऽपि कार्यस्यासिद्धिर्दुर्दैवकारिता ॥ १५८९ ॥
नृपापराधश्चौर्यादिग्रहणं च विभावकाः ॥
सहायान्वेषणोपायचिन्तने विमनस्कता ॥ १५९० ॥
उत्तमे मध्यमे चानुभावाश्चोत्साहसंश्रयाः ॥
अधमे धावनं ध्यानं मुखशोषविलोकने ॥ १५९१ ॥
निद्रा निःश्वसितं सृक्कलेहनं चानुभावकाः ॥
सन्ति यत्र विषादोऽसौ भावो भावविदां मतः ॥ १५९२ ॥

इति विषादः ।

देवैर्नागैस्तथा यक्षैः पिशाचैर्ब्रह्मराक्षसैः ॥
भूताद्यैश्च ग्रहैरुग्रैरावेशस्तत्स्मृतिस्तथा ॥ १५९३ ॥
अशुचेश्चिरसंस्थानं शून्यागारस्य सेवनम् ॥
धातुवैषम्यमित्याद्यैर्विभावैरनुभावकैः ॥ १५९४ ॥
स्पन्दनं कम्पनिःश्वासौ धावनं पतनं भुवि ॥
जिह्वाया लेहनं स्वेदः स्तम्भो वक्त्रं च फेनिलम् ॥ १५९५ ॥

॥ १९८४ ॥ १९८५ ॥ १९८६ ॥ १९८७ ॥ १९८८ ॥१९८९॥१९९०॥
॥ १९९१ ॥ १९९२ ॥ १९९३ ॥ १९९४॥ १९९५ ॥

---

५ ख. ग. °नोहरध° । २ घ. ङ. हर्षोत्पत्तिश्च । च. हर्षोत्कर्षश्च । ३ ख. ग. घ. °समं नृ° । ४ ङ. °र्लक्ष्यचि° । च. °र्लज्जचि° । ५ च. °णं चिन्तोत्सा° । ६ ङ. °हृश्चाप्यनु° । ७ ङ. °द्धिर्देवादिका° । च. °द्धिर्वैवर्ण्यका° ।

निःसंज्ञतेत्यादिभिश्चापस्मारमुपलक्षयेत् ॥ १५९६ ॥

इत्यपस्मारः ।

कार्याविवेको जडता पश्यतः शृण्वतोऽपि वा ॥
तद्विभावाः प्रियानिष्टदर्शनश्रवणे रुजा ॥ १५९७ ॥
अनुभावास्तु चैवास्याः प्रतिवादावभाषणे ॥
इष्टानिष्टापरिज्ञानं चानिमेषेक्षणादयः ॥
सा पूर्वं परतो वा स्यान्मोहादिति विदां मतम् ॥ १५९८ ॥

इति जडता ।

यत्र विप्रतिपत्तिः स्यात्संशयोऽपि विमर्शनम् ॥
पक्षयोरुभयोरुक्ते माने साधकबाधके ॥ १५९९ ॥
विभावाः स्युरिमे चानुभावाः शीर्षस्य कम्पनम् ॥
भ्रूक्षेपश्चतुरो हस्तस्तं वितर्कं प्रचक्षते ॥ १६०० ॥
यो वितर्कान्वितस्थायी सोऽवहित्[1]थेन युज्यते ॥ १६०१ ॥

इति वितर्कः ।

निद्राविभावजं सुप्तं सुप्तावस्थात्मकं मतम् ॥
तस्यानुभावा निभृतं गात्रं नेत्रनिमीलितम् ॥
स्वप्नप्रलापनं श्वासोच्छ्वासौ बाह्याक्षलीनता ॥ १६०२ ॥

इति सुप्तम् ।

संजातमिष्टविरहादुद्दीप्तं प्रियसंस्मृतेः ॥ १६०३ ॥
निद्रया तन्द्रया गात्रगौरवेण च चिन्तया ॥
अनुभावितमाख्यातमौत्सुक्यं भावकोविदैः ॥ १६०४ ॥

इत्यौत्सुक्यम् ।

अनुभावपिधानार्थोऽवहित्थं भाव उच्यते ॥ १६०५ ॥
तद्विभाव्यं भये[2]व्रीडाधार्ष्ट्यकौटिल्यगौरवैः ॥
गर्वादगणनेनापि तस्यैते त्वनुभावकाः ॥ १६०६ ॥
प्रियादिगोचरकथाभङ्गो धैर्यं च कृत्रिमम् ॥
अन्यथाकथनं तद्वदन्यथा वेक्षणादयः ॥ १६०७ ॥

॥ १५९६ ॥ १५९७ ॥ १५९८ ॥ १५९९ ॥ १६००॥ १६०१॥१६०२॥
॥ १६०३ ॥ १६०४ ॥ १६०५ ॥ १६०६ ॥ १६०७ ॥

इत्यवहित्थम् ।

---

१ ङ. 'त्थे नियु' । २ ख. ग. 'यक्रीडा' । च. 'यव्रीडागर्हाकौ' ।

अपूर्वप्रतिभानं स्यान्मतिस्तां तु विभावयेत् ॥
अन्वयव्यतिरेकोत्थैः प्रत्ययैः शास्त्रचिन्तनैः ॥ १६०८ ॥
ऊहापोहैश्च विविधैरथ तामनुभावयेत् ॥
संदंशचतुराद्यैश्च करैरुत्क्षेपणैर्भ्रुवोः[१] ॥ १६०९ ॥
नानाशास्त्रार्थविषयैः शिष्याणामुपदेशनैः ॥
तर्काख्यौ प्रत्ययावूहापोहौ विधिनिषेधयोः ॥ १६१० ॥

इति मतिः ।

स्वप्नान्तनिद्राछेदाभ्यामाहारपरिणामतः ॥
शब्दस्पर्शादिभिः स्वप्नैः स्मृतैर्वा जाग्रति स्थितैः ॥ १६११ ॥
विभाव्यतेऽथ जृम्भाक्षिमर्दनैः शयनोद्गमैः[२] ॥
अङ्गुलित्रोटनैरङ्गवलनैर्योऽनुभाव्यते ॥ १६१२ ॥
भुजविक्षेपणैः श्वासैर्विबोधप्रतिबोधनम् ॥
सम्यग्बोधोऽथवा लोकात्तद्विभावानुभावधीः ॥ १६१३ ॥

इति बोधः(विबोधः) ।

एकैकशो द्वंद्वशो वा त्रयाणां वा प्रकोपतः ॥
वातपित्तकफानां स्युर्व्याधयो ये ज्वरादयः ॥ १६१४ ॥
इह तत्प्रभवो भावो व्याधिरित्यभिधीयते ॥
स्तम्भाङ्गस्रंसविक्षिप्तगात्रसंकुचिताननैः ॥ १६१५ ॥
उत्क्रोशकम्पस्तनितैश्चाभिनेयो ज्वरः पुनः ॥
कामजोऽप्यस्ति स द्वेधा शीतदाहप्रवर्तनात् ॥ १६१६ ॥
हनुचालेन सर्वाङ्गकम्पेन मुखशोषतः ॥
परिदेवनरोमाञ्चमुखसंकोचनादिभिः ॥ १६१७ ॥
शीतज्वरोऽभिनेयोऽथ दाहको[३]ऽम्बुपिपासया ॥
कराङ्गगात्रविक्षेपाद्भूमिशय्याभिलाषतः ॥
शीतानुलेपनाकाङ्क्षाविकृष्टपरिदेवनैः ॥ १६१८ ॥

इति व्याधिः ।

उत्तमानां विप्रलम्भे भवेत्प्रियवियोगतः ॥
नीचानां विभवभ्रंशात्सर्वेषात्सं(षां सं)निपाततः ॥ १६१९ ॥

॥ १६०८ ॥ १६०९ ॥ १६१० ॥ १६११॥१६१२ ॥ १६१३ ॥१६१४॥
॥ १६१५ ॥ १६१६ ॥ १६१७ ॥ १६१८ ॥ १६१९ ॥

---

१ च. °देशितैः । त° । २ घ. ङ. °नोष्टनैः? । अ° । च. °नोत्सवैः । अ° । ३ च. °हहिकापि° ।

अभिघातात्तथोन्मादस्तमेभिरनुभावयेत् ॥
विना निमित्तं हसितं रुदितं पठितं तथा ॥ १६२० ॥
नृत्तं गीतं च शयनोपवेशोत्थानधावनम् ॥
असंबद्धप्रलपनं चोद्धृत्तिर्धूलिभस्मनोः ॥ १६२१ ॥
कपालचीरानिर्माल्याद्यलंकरणमित्यपि ॥
उन्मादः पृथगुक्तोऽयं व्याधिष्वन्तर्भवन्नपि ॥ १६२२ ॥
अयं हि विप्रलम्भादौ वैचित्र्यं कुरुते तमाम् ॥
अपस्मारोऽप्येवमेव बीभत्से च भयानके ॥ १६२३ ॥

इत्युन्मादः ॥

कुलरूपबलैश्वर्यविद्याद्रविणयौवनैः ॥ १६२४ ॥
नीचानां जायते गर्वः प्राधान्येन मुहुर्मुहुः ॥
विद्युद्वदुत्तमानां तु बाहुल्यात्त्वेष योषिताम् ॥ १६२५ ॥
उद्ग्रीवावेक्षणावज्ञासूयानुत्तरदानतः ॥
अभाषणादमर्षाच्च पारुष्याद्विभ्रमादपि ॥ १६२६ ॥
अङ्गनेत्रविकाराच्चाधिक्षेपातिक्रमाद्गुरोः ॥
तस्याभिनयनं कार्यमित्याह करणाग्रणीः ॥ १६२७ ॥
वागङ्गसात्त्विकाहार्यक्रियाव्यत्यासनं भवेत् ॥
विभ्रमो योषितां हर्षानुरागमदगर्वजः ॥ १६२८ ॥

इति गर्वः ॥

अधीराणां जातमात्रे शोकेऽनन्तरमुद्भवेत् ॥
आवेगः प्रबलोऽयं तु धीरैर्धैर्यान्निरूप्यते ॥ १६२९ ॥
असौ प्रतिविभावं च पृथक्चित्रानुभावभाक् ॥
अतो विभावरूपाणां हेतूनां भेदतोऽष्टधा ॥ १६३० ॥
उत्पातवातवर्षाग्निकुञ्जरोद्भ्रमणानि च ॥
प्रियाप्रियश्रुतिर्वैरिव्यसनं चेति हेतवः ॥ १६३१ ॥
विद्युदुल्कानिपाताभ्यां निर्घाताद्भूमिकम्पनात् ॥
सूर्यचन्द्रोपरागाभ्यामावेगः केतुदर्शनात् ॥ १६३२ ॥

॥ १६२० ॥ १६२१ ॥ १६२२ ॥ १६२३ ॥ १६२४॥ १६२५॥ १६२६॥
॥ १६२७ ॥ १६२८ ॥ १६२९ ॥ १६३० ॥ १६३१ ॥ १६३२ ॥

---

१ च. तदा । २ ख. ग. °णीः । इति गर्वः । वा° । ३ अ. च. वामाङ्ग° । ४ च. °षितो ह° । ५ ख. ग. °जः । आवे° । ६ च. °लो यस्तु धी° । ७ ख. ग. ङ. °न्निरुध्यते ।

उत्पातजोऽस्यानुभावो वैवर्ण्यं स्रस्तगात्रता ॥ १६३३ ॥
विषादविस्मयगतानुभावाश्चेह संमताः ॥
वातजे[1] त्वत्र वस्त्रेण पिधानं नेत्रमर्दनम् ॥ १६३४ ॥
त्वरितागमनं चानुभावाः स्युर्वर्षजे पुनः ॥
सर्वाङ्गपीडनं[2] गेहाद्याश्रयः शीघ्रधावनम्[3] ॥ १६३५ ॥
अग्निजे[4] धूतिरङ्गानां धूमाकुलितनेत्रता ॥
चार्याऽतिक्रान्तया चापक्रान्तया चैरणं भवेत् ॥ १६३६ ॥
कुञ्जराणां निरवधिभ्रमणाद्यस्तु जायते ॥
सरणापसृती तत्र त्वरिते भयवेपथुः ॥ १६३७ ॥
विस्मयो वीक्षणं पश्चात्प्रियश्रवणजे पुनः ॥
वस्त्राभरणदानं चाभ्युत्थानं परिरम्भणम् ॥ १६३८ ॥
कथायामश्रुरोमाञ्चाश्चाप्रियश्रुतिजे त्वमी ॥
विलापः पतनं भूमौ चलनं[5] परिवर्तनम् ॥ १६३९ ॥
परिभावनमित्याद्या वैरिव्यसनजे त्वमी ॥
सहसाऽपसृतिः शस्त्रचर्मवर्मादिधारणम् ॥ १६४० ॥
गजानां तुरगाणां चाऽऽरोहणं संप्रधारणम् ॥
पृथगित्यनुभावाः स्युरावेगे संभ्रमात्मके ॥ १६४१ ॥

इत्यावेगः ।

मरणं द्विविधं प्रोक्तं व्याधिजं चापघातजम् ॥
दोषवैषम्यजैर्गण्डज्वराद्यैर्व्याधिजं भवेत् ॥ १६४२ ॥
वातपित्तकफा दुष्टा दोषत्वेनेह संमताः ॥
शस्त्रादिविषतोयेभ्यः श्वापदात्तुरगाद्गजात् ॥ १६४३ ॥
अग्न्युच्चपतनादिभ्यो जातं स्यादभिघातजम् ॥
निश्चेष्टप्रसृतैरङ्गैर्मीलनेन च नेत्रयोः ॥ १६४४ ॥
हिक्कोर्ध्वश्वासवमनजनतापरिवारणैः ॥
अव्यक्ताक्षरभाषाद्यैर्व्याधिजस्यानुभावनम् ॥ १६४५ ॥

॥ १६३३ ॥ १६३४ ॥ १६३५ ॥ १६३६ ॥ १६३७ ॥ १६३८ ॥ १६३९ ॥
॥ १६४० ॥ १६४१ ॥ १६४२ ॥ १६४३ ॥ १६४४ ॥ १६४५ ॥

---

१ च. घातजे । २ ख. ग. च. 'नं देहा' । ३ च. शीर्षघूर्णनम् । ४ ख. ग. 'जे. भूरिर' । च. 'जे भूति' । ५ च. चलनं ।

शस्त्रजे सहसा भूमौ पतनं च विकम्पनम् ॥
स्फुरणादि प्रयोक्तव्यमथाहिविषपानजे ॥ १६४६ ॥
अनुभावा भवन्त्यष्टौ विषवेगात्क्रमादिमे ॥
कार्ष्ण्यवेपथुदाहाश्च हिक्काफेनश्च पञ्चमः ॥ १६४७ ॥
स्कन्धभङ्गश्च जडता मरणं चेति संमताः ॥
अभिघातान्तरोद्भूतेऽनुभावाः शस्त्रजातवत् ॥ १६४८ ॥
व्याध्यादेरनिवर्त्यत्वान्निश्चिते मरणे सति ॥
अत्र प्राङ्निधनाच्चित्तवृत्तिर्मरणमिष्यते ॥ १६४९ ॥

इति मरणम् ( मृतिः ) ।

गात्रोत्कम्पी चमत्कारः सहसा त्रास उच्यते ॥
तस्योत्पाताद्घोरनादश्रुतेर्भीषणदर्शनात् ॥ १६५० ॥
उत्पत्तिरनुभावास्तु गात्रसंकोचकम्पने ॥
स्तम्भो गद्गदशब्दश्च रोमाञ्चाः स्रस्तगात्रता ॥ १६५१ ॥
निमीलनं लोचनयोः प्रलयश्चेति कीर्तिताः ॥
पूर्वापरविचारोत्थं भयं त्रासात्पृथग्भवेत् ॥ १६५२ ॥

इति त्रासः ।

निद्रेन्द्रियाणां प्रथमा निवृत्तिः स्वस्वगोचरात् ॥
अत्याहारः स्वभावश्च चिन्तालस्ये मदः[3] क्लमः ॥ १६५३ ॥
व्याख्यानादिप्रयासेन वैलक्षण्यं च हेतवः ॥
निद्रायामनुभावाः स्युर्जृम्भावदनगौरवम् ॥ १६५४ ॥
शरीरलोलनं[4] नेत्रघूर्णनं[5] गात्रमोटनम् ॥
निःश्वासोच्छ्वसितं[6] स्रस्तगात्रताऽक्षिनिमीलनम् ॥ १६५५ ॥

॥ १६४६ ॥ १६४७ ॥ १६४८ ॥ १६४९ ॥ १६५० ॥ १६५१ ॥ १६५२ ॥
॥ १६५३ ॥ १६५४ ॥ १६५५ ॥

इति निद्रा ।

त्रयस्त्रिंशद्विचित्रत्वकारित्वात्स्थायिनं रसम् ॥
कुर्वन्तीति मया प्रोक्ताः सन्ति त्वन्ये सहस्रशः ॥ १६५६ ॥

व्यभिचारिभिः क्रियमाण(णं)रसोपकारमाह—त्रयस्त्रिंशदित्यादि । रसं स्थायिनं

---

१ च. 'काव्यं मयादिवि'। २ घ. 'पमान'। ३ च. मदश्रमः । ४ ख. ग. च. 'लोचनं । ५ ख. ग. 'नं चाक्रमो' । च. 'नं स्वस्थगात्रता । नि' । ६ ख. 'ते स्तब्धगा' ।

**कुर्वन्तीति** । अत्र हेतुः—विचित्र[त्व]कारित्वादिति । यस्य कस्यापि रसस्य सहकारित्वेनोत्पन्ना निर्वेदादयो भावा एकरूपं तं स्वानुप्रवेशान्नानारूपं कृत्वा पश्चात्तस्मिन्नेवान्तर्भूताः सन्तः कल्लोलाः सलिलनिधिमिव तमेव रसं स्थायित्वेन पुष्णन्तीति व्यभिचारिकृतो रसोपकारो द्रष्टव्यः । मनोवृत्तीनामनन्तत्वादियन्त एवेति निर्धारणं कुत इत्यत आह—**सन्ति त्वन्य इति** ॥ १६५६ ॥

तर्हि ते कुतो न कथिता इत्यत्राऽऽह—

**अन्तर्भावोऽस्ति केषांचिदभिलाषस्य वा रतौ ॥ १६५७ ॥**
**अवहित्थे तु दम्भस्य ग्लानौ क्षुत्तृष्णयोर्यथा ॥**
**उद्वेगस्य तु निर्वेदेऽन्येषामप्येवमूह्यताम् ॥ १६५८ ॥**

**अन्तर्भाव इति** । तमेवान्तर्भावं दिङ्मात्रेण दर्शयति—**अभिलाषस्येत्यादि** । **अन्येषामप्येवमूह्यतामिति** । अन्येषामनुक्तानां भावान्तराणामप्येवमुक्तप्रकारेण यथायोगं निर्वेदादिष्वन्तर्भाव ऊह्यतां बुद्ध्या परिकल्प्यताम् ॥ १६५७ ॥ १६५८ ॥

**इति त्रयस्त्रिंशद्व्यभिचारिभावाः ।**

---

## अथ सात्त्विकलक्षणम् ।

अथ सात्त्विकभावाँल्लक्षयितुमाह—**अथेत्यादिना** ।

**उच्चै रत्यादिभिर्भावैः संविद्विक्रियते यदा ॥**
**प्राणेऽध्यस्यति साऽऽत्मानं देहं प्राणस्तनोति सः ॥**
**तदा स्तम्भादयो देहे विकाराः प्रभवन्त्यमी ॥ १६५९ ॥**

**उच्चैरित्यादि** । रत्यादिभिर्भावैः स्थायिभावैः संविद्विषयानभिमुखं ज्ञानं यदा विक्रियते विषयविशेषाभिमुखीक्रियते । सा विक्रियमाणा संवित्प्राणे शरीरान्तश्चरे जीवननिमित्ते वायुविशेष आत्मानं स्वसंविदाकारमित्यर्थः । अध्यस्यत्यारोपयति । स प्राणो देहं स्थूलदेहम् । आत्मानं तनोति । अध्यस्तसंविदाकारं करोति । देह आत्मबुद्धिं जनयतीत्यर्थः । अत्राऽऽत्मानमिति पूर्ववाक्यस्थं पदमावृत्त्याऽस्मिन्वाक्ये योजनीयम् । अन्यथाऽत्र विधेयाभावादसंगतिः[२] स्यात् । तनोतेः करोत्यर्थाश्रयणत्व[३] एवं व्याख्यानम् । विस्तारार्थत्वे त्वर्थावृत्तिर्न करणीया । स प्राणो देहं तनोतीति योजना । देहं तनोति विस्तारयति प्राणाकारेण वृद्धिं करोति । देह आत्मबुद्धिं जनयतीति स एव फलितोऽर्थोऽवगन्तव्यः । **तदा स्तम्भादय इति** । यदैवैवं परम्परया देहे चाऽऽत्माध्यासो भवति तदा स्तम्भादयोऽमी देहे विकाराः प्रभवन्तीति सात्त्विकोत्पत्तौ सामग्री दर्शिता ।

---

१ ख. ग. स्वचित्ताका° । २ ज. छ. °दगतिः । ३ ख. ग. °यणे त्वेवं व्याख्यातम् ।

देहे विकारा इत्यनेन बाह्यादीनां(बाह्यानां) स्तम्भादीनां रत्याद्यनुभावत्वमपि दर्शितं भवति । आन्तराणां तु स्तम्भादीनां सात्त्विक[त्व]मेवेत्यवगन्तव्यम् ॥ १६५९ ॥

**एवं सति स्वाद्यमानरत्यादिस्वैर्विभावकैः ॥**
**विभाविता देहसंस्थैः स्तम्भाद्यैरनुभाविताः ॥ १६६० ॥**
**अध्यस्तसंविदि प्राणे प्रकाशन्तेऽन्तरे भवाः ॥**
**एते स्युः सात्त्विका भावाः सत्त्वप्राणप्रकाशनात् ॥ १६६१ ॥**

**एवं सतीत्यादि** । एवं सत्युक्तप्रकारेण देहे स्तम्भादिषु विकारेषूत्पन्नेषु । **स्वाद्यमानरत्यादिस्वैरिति** । स्वाद्यमानाश्च ते रत्यादयश्च तेषां स्वैः संबन्धिभिः । रत्यादीनां प्रतिनियतैरित्यर्थः । विभावकैर्ललनोद्यानादिभिर्विभाविता उत्पादिताः । देहसंस्थैः स्तम्भाद्यैर्विकारैरनुभाविता अनुभाव्यत्वं प्रापिताः । प्रकाशिता इत्यर्थः । **अध्यस्तसंविदीति** । अध्यस्ता संविद्यस्मिन्निति तथोक्तस्तस्मिन् । **प्राणे प्रकाशन्त इति** । प्राणमाश्रित्य प्रतिभासन्त इत्यर्थः । **अन्तरे भवा इति** । उक्तप्रकारेणान्तरेऽन्तरात्मनि भवाः संभूताः । एते भावाः सत्त्वप्राणप्रकाशनात्सत्त्वाख्ये प्राणे प्रकाशनात्सात्त्विकाः स्युः ॥ १६६० ॥ १६६१ ॥

मतान्तराश्रयणेन सत्त्वशब्दस्यार्थान्तरं दर्शयति—

**सांख्योक्तो वा गुणः सत्त्वं साधुत्वं वा तदुच्यते ॥**
**निर्मलप्राणदेहत्वं साधुत्वमिह संमतम् ॥**
**तत्र सत्त्वे भवा भावाः सात्त्विकाः संमताः सताम् ॥ १६६२ ॥**

**सांख्योक्तो वेत्यादि** । तत्रेति । त्रिषु पक्षेषु ॥ १६६२ ॥

**चत्वारि क्ष्मादिभूतानि प्राधान्येनावलम्बते ॥**
**कदाचित्स्वप्रधानः सन्देहे प्राणश्चरत्ययम् ॥ १६६३ ॥**

**चत्वारीत्यादि** । वायुरूपश्चत्वारि क्ष्मादिभूतानि पृथिव्यप्तेजआकाशानि पर्यायेण । कदाचित्स्वप्रधानः स्वात्मा वायुरेव प्रधानः सन्देहे चरतीति संबन्धः ॥ १६६३ ॥

तत्र प्राणस्य पृथिव्याद्यवलम्बने स्तम्भादिभावोद्भावनमाह—

**यदाऽध्यास्ते धरां स्तम्भं भावं भावयते तदा ॥**
**प्राणाज्जलस्थादश्रूणि तेजःस्थात्तु विवर्णता ॥ १६६४ ॥**
**स्वेदश्चाऽऽकाशनिष्ठात्तु प्रलयो जायते ततः ॥**
**स्वतन्त्रोऽसौ क्रमान्मन्दमध्यतीव्रत्वभेदभाक् ॥ १६६५ ॥**
**रोमाञ्चं वेपथुमथ स्वरभेदं च भावयेत् ॥ १६६६ ॥**

---

१ ख. ग. बाल्यादी°। २ ज. °ति । अन्तरा°। छ. °ति। संस्करणं तु । ३ ख. ग. °दिस्थैर्वि°। ४ ख. ग. °नित्रायुरहितानि प°।

**यदाऽध्यास्त इत्यादि । जलस्थादश्रूणीति ।** जायन्त इत्यध्याहार्यम् । तेजः-स्थात्प्राणाद्विवर्णता स्वेदश्च जायत इति संबन्धः । आकाशनिष्ठात्प्राणात्तु प्रलयो जायते । ततोऽनन्तरमसौ प्राणो वायुः स्वतन्त्रः पृथिव्याद्यवलम्ब्य स्वप्राधान्येन वर्तमानः । **क्रमान्मन्दमध्यतीव्रत्वभेदभागिति ।** मन्दः प्राणवायू रोमाञ्चं भावयेत् । मध्यो वायुर्वेपथुं भावयेत् । अथ तीव्रो वायुः स्वरभेदं च भावयेदिति क्रमो द्रष्टव्यः ॥ १६६४ ॥ १६६५ ॥ १६६६ ॥

**बाह्याः स्तम्भादयो देहे नृणां देहात्ममानिनाम् ॥**
**सुलभा दुर्लभास्त्वेते सतामनभिमानिनाम् ॥ १६६७ ॥**

**बाह्या इत्यादि ।** उक्तप्रकारेण स्तम्भादयः सात्त्विका आभ्यन्तरा एव । तद्विकारत्वेनानुभावा बाह्याः स्तम्भादयः । देहात्ममानिनां देहमेवाऽऽत्मानं मन्यन्त इति तथोक्ताः । पामरा इत्यर्थः । तेषां नृणां सुलभाः । विभावसद्भावमात्रेण शीघ्रं प्रादुर्भवन्तीत्यर्थः । एते बाह्याः स्तम्भादयोऽनभिमानिनां सतां देहेन्द्रियादिव्यतिरिक्तात्मदर्शिनां देहे तु दुर्लभाः । विभावसद्भावमात्रान्नोद्भवन्तीत्यर्थः ॥ १६६७ ॥

**हर्षाद्रागाद्भयाद्दुःखाद्विषादाद्विस्मयाद्रुषः ॥**
**विक्षेपाच्च भवेत्स्तम्भोऽनुभावा जाड्यशून्यते ॥**
**निःसंज्ञस्तब्धगात्रत्वे निश्चेष्टत्वाप्रकम्पने ॥ १६६८ ॥**

अथ सात्त्विकभेदान्स्तम्भादीन्प्रत्येकं प्रातिस्विकैर्विभावानुभावैर्लक्षयति—**हर्षाद्रागादित्यादि ।** अत्र स्तम्भादीनां सात्त्विकानां लक्षणेषु तत्तदनुभावत्वेन स्तब्धगात्रता स्वेदोऽपीत्यादिभिः स्तम्भादय एवोक्ता दृश्यन्ते । तत्रैवं विवेचनीयम् । पूर्वं सात्त्विकशब्दवाच्यत्वेनोक्ता अन्तरे भवा ये स्तम्भादयो भावास्त एवात्र लक्ष्यन्ते ये देहसंस्था बाह्या स्तम्भादयस्ते तु तदनुभावत्वेन लक्षणतयोक्ता इति ॥ १६६८ ॥

**इति स्तम्भः ।**

**मनस्तापो रुजा हर्षो लज्जा क्रोधो भयं श्रमः ॥**
**पीडाऽऽघातातपौ मोहव्यायामौ च विभावकाः ॥ १६६९ ॥**
**व्यजनग्रहणं स्वेदोऽप्यरालो भालमार्जकः ॥**
**इत्येतेऽभिनया यत्र तं स्वेदं जगदुर्बुधाः ॥ १६७० ॥**

॥ १६६९ ॥ १६७० ॥

**इति स्वेदः ।**

---

१ ख. ग. घ. ङ. °त्वात्प्रक° । २ ख. ग. °म्पनः । इ° । ३ ख ग. °डा वाता° । ४ ख. ग. °लमर्दनम् । इ° ।

आलिङ्गनाच्छुरितके शीतहर्षभयक्रुधः ॥ १६७१ ॥
विभावयन्ति रोमाञ्चं व्यक्तस्याभिनयास्त्वमी ॥
गात्रस्पर्शोल्लुकुसने मुहुः कण्टकिता तनुः ॥ १६७२ ॥

इति रोमाञ्चः ।

औद्र्यरोगजराक्रोधभयहर्षमदादयः ॥
विभावा विस्वरो भिन्नो गद्गदश्च ध्वनिर्भवेत् ॥ १६७३ ॥
अनुभावस्तदा भावः स्वरभेदोऽभिधीयते ॥
स्थानभ्रष्टो विस्वरः स्याद्विच्छिन्नो भिन्नसंज्ञकः ॥
अव्यवस्थिततानोच्चनीचभावस्तु गद्गदः ॥ १६७४ ॥

इति स्वरभेदः ।

आलिङ्गनाच्छुरितके हर्षो रोषो भयं जरा ॥
विभावाः शीतरोगौ च यत्रैते त्वनुभावकाः ॥ १६७५ ॥
वेपनं स्फुरणं कम्पो वेपथुं कथयन्ति तम् ॥
वेपनाद्याः कम्पभेदाः पूर्वोत्सातिशयः परः ॥ १६७६ ॥

इति वेपथुः ।

रोगमोहभयक्रोधशीततापश्रमैर्भवेत् ॥ १६७७ ॥
वैवर्ण्यमस्याभिनयो नाडीपीडनयोगतः ॥
सिन्दूराद्येन वा वर्णान्तरसंचारणं मुखे ॥ १६७८ ॥

इति वैवर्ण्यम् ।

हर्षामर्षाञ्जनाद्धूमाद्भयाच्छोकाच्च जृम्भणात् ॥
अनिमेषेक्षणाच्छीताद्रोगाद्भावोऽश्रु जायते ॥
तं चानुभावयेदश्रुस्रवणैर्नेत्रमार्जनैः ॥ १६७९ ॥

इत्यश्रु ।

मदमूर्छाभिघातेभ्यो निद्रामोहश्रमादिभिः ॥
प्रलयः स्यादभिनयेन्महीनिपतनेन तम् ॥ १६८० ॥

॥ १६७१ ॥ १६७२ ॥ १६७३ ॥ १६७४ ॥ १६७५॥ १६७६॥१६७७॥
॥ १६७८ ॥ १६७९ ॥ १६८० ॥

इति प्रलयः ।

---

१ घ. 'माश्वमुच्छ्वासाभि' । २ ख. ग. घ. ङ. 'कुशने । ३ घ. 'तमानो' । ङ. 'तनानो' ।
४ ङ. 'तरागौ । ५ ख. ग. घ. राग' ।

**इत्युक्तास्त्रिविधा भावाः स्थायिनो व्यभिचारिणः ॥**
**सात्त्विकाश्च रसेषु स्युः सर्वे सर्वेषु सात्त्विकाः ॥ १६८१ ॥**

भावलक्षणं नियमयति—**इत्युक्तास्त्रिविधा भावा इति** । त्रिविधेष्वपि भावेषु सात्त्विकानां विशेषमाह—**रसेषु स्युः सर्वे[1] सर्वेषु सात्त्विका इति** । सर्वे सात्त्विकाः स्तम्भादयोऽष्टावपि सर्वेषु रसेषु शृङ्गारादिनवस्वपि साधारण्येन[2] भवन्तीत्यर्थः॥१६८१॥

नाटकादिनिर्माणे कवेर्नियममाह—

**एकः कार्यो रसः स्थायी रसानां नाटके सदा ॥**
**रसास्तदनुयायित्वादन्ये तु व्यभिचारिणः ॥ १६८२ ॥**

**एकः कार्य इत्यादि** । नाटक इत्युपलक्षणम् । नाटकादिषु रूपकेष्वित्यर्थः । रसानामिति निर्धारणे षष्ठी । शृङ्गारादीनां नवानां रसानां मध्य एको रसो नाटकादिषु यत्र यस्य प्राधान्यं भरतादिभिरुक्तम् "एको रसोऽङ्गी कर्तव्यो वीरः शृङ्गार एव वा" इत्यादिना स रसः । सदा प्रबन्धस्याऽऽदिमध्यावसानेष्वित्यर्थः । कार्यः कर्तव्यः । अन्ये रसास्तु तदनुयायित्वात्स्थायिरसानुसारित्वाद्व्यभिचारिणः । कर्तव्या इति शेषः ।

तथा चोक्तं **भरतमुनिना**—

"सर्वेषां समवेतानां रूपं यस्य भवेद्बहु ।
स मन्तव्यो रसः स्थायी शेषाः संचारिणो मताः" इति ॥ १६८२ ॥

**विरोधिनो रसास्तेषु संदर्भ्यः[3] पृथगाश्रयः ॥**
**गुम्फश्चित्रो[4] रसानां स्यान्नाट्ये कुसुमगुम्फवत् ॥**
**स्थायी तु सूत्रस्थानीयो रसो रसविदां मतः ॥ १६८३ ॥**

**विरोधिन इत्यादि** । यथा शृङ्गारस्य बीभत्सः । वीरस्य भयानकः । रौद्रस्य करुणः । अद्भुतस्य हास्यः । शृङ्गारादीनामष्टानामपि शान्तः । तथा बीभत्सस्य शृङ्गारः । भयानकस्य वीरः । करुणस्य रौद्रः । हास्यस्याद्भुतः । शान्तस्य शृङ्गारादयोऽष्टाविति परस्परविरोधिनो रसा ज्ञेयाः । तेषु संचारिषु ये विरोधिनो रसा विद्यन्ते तेषु विरोधिषु विषये पृथगाश्रयो भिन्नाश्रयः संदर्भ्यः कार्य इति । अयमर्थः । शृङ्गारबीभत्सादीनामेकाश्रयत्व(त्वे) विरोधो दुर्निवार एव । भिन्नाश्रयत्वे तु विरोधो नास्तीति । **गुम्फ इत्यादि** । एवं भिन्नाश्रयत्वेन विरोधिना संदर्भे क्रियमाणे सति नाट्ये नाटकादौ रूपके । रसानां गुम्फो मालाकुसुमगुम्फवच्चित्रः स्यान्नानावर्णगन्धवद्भिः पुष्पैर्निर्मिता मालेव नानाविकारात्मकै रसैरद्भुतो भवति । **स्थायी त्विति** । संचारि[5]रसगुम्फे[6] स्थायी रसस्तेषामाधारत्वात्सूत्रस्थानीयो मतः ।

---

१ ज. 'दिषु दशस्व' । २ ज. 'ण्येन न भ' । ३ ख. ग. 'दर्भ्याः पृ' । ४ ख. ग. 'श्रयाः । गु' । ५ ख. ग. संसारि' । ६ ख. ग. 'म्फे स्वस्था' ।

सुधिया कल्लिनाथेन रत्नाकरकलानिधौ ।
विवृतं रसभावादि विद्वद्भिस्तत्परीक्ष्यताम् ॥ १६८३ ॥

* ग्रन्थमुपसंहरन्ग्रन्थकारः स्वकीयग्रन्थस्य प्रचयगमनाय सहृदयान्विपश्चितः सविनयं प्रार्थयते—

सूरिश्रीशार्ङ्गदेवेन नाट्यवेदाम्बुधेरिदम् ॥
समस्तमुद्धृतं सारं धीरैरातृप्ति सेव्यताम् ॥ १६८४ ॥

सूरिश्रीशार्ङ्गदेवेनेत्यादि । तदिदं निगदव्याख्यातम् ॥ १६८४ ॥

ग्रन्थे मदीये यदि कश्चिदस्ति गुणस्ततस्तस्य परिग्रहाय ॥
नाभ्यर्थये वः सुधियः परेषां गुणोऽणुरप्यद्रिसमो भवत्सु ॥१६८५॥
सावद्यता वा निरवद्यताऽस्तु ग्रन्थे मयाऽत्र ग्रथिते तया किम् ॥
आराधने वः प्रवणा मतिर्मे सन्तो गुणः कं ननु नातिशेते ॥ १६८६ ॥
युष्मत्क्षोदक्षमं वस्तु किमत्रास्ति जगत्त्रये ॥
किं तु मत्प्रेमतः सन्तः पुरस्कुर्वन्तु मे कृतिम् ॥ १६८७ ॥
यद्वा पुराणं पन्थानं मुनीनामहमन्वगाम् ॥
स्निह्यन्ति च निसर्गेण सन्तः सन्मार्गगामिनि ॥ १६८८ ॥
आरिराधयिषोः साधून्किं प्रज्ञाविभवेन मे ॥
राममानन्दयन्ति स्म तिर्यञ्चोऽपि कपीश्वराः ॥ १६८९ ॥
न विद्यादर्पतो ग्रन्थप्रवृत्तिर्मम किं त्विदम् ॥
विद्वन्मानसवासाय गन्तुं पाथेयमास्थितम् ॥ १६९० ॥

इति श्रीमदनवद्यविद्याविनोदश्रीकरणाधिपतिश्रीसोढलदेवनन्दननिःशङ्कश्रीशार्ङ्गदेवविरचिते संगीतरत्नाकरे सप्तमो नर्तनाध्यायः समाप्तः ॥ ७ ॥

॥ १६८५ ॥ १६८६ ॥ १६८७ ॥ १६८८ ॥ १६८९ ॥ १६९० ॥

शैवादिस्थिरभक्त्यवाप्तविभवः कर्ता ततः संसृते-
राहर्ता करणान्यनुप्रतिकलं तन्मातृकाशोभिनाम् ॥
अङ्गानामथ तत्त्वगोचरधिया भावार्थमभ्यानय-
न्नृत्ताध्यायविवेचनं व्यतनुत श्रीकल्लिनाथः सुधीः ॥ १ ॥

---

* 'ङ.' संज्ञिते पुस्तके—ग्रन्थमित्यादिकोऽन्तिमो ग्रन्थांशस्त्रुटितः ।

---

१ ख. ग. 'त मत्कृति' २ घ. 'मो नृत्ताध्या' । ३ ख. ग. ततः ।

सप्ताध्याय्युदधि(धिं)[1]श्रिया विलसितं संगीतरत्नाकरं
सम्यग्लक्षणलक्ष्यविस्तृतधिया मन्थेन निर्मथ्य ताम् ॥
तत्रार्थांश्च जिघृक्षुदृष्टयभिमुखान्कुर्वन्तमात्मोदया-
द्विद्वद्भावनया कलानिधिमिमं श्रीकल्लिनाथो व्यधात् ॥ २ ॥
नदी तद्रूपतामेति प्रविष्टाऽम्बुनिधिं यथा ॥
ज्ञानलेशो मयाऽप्येवं[2] सर्वज्ञेषु निवेदितः ॥ ३ ॥
यथाऽऽकाशो महान्भूमा(मी)रेणूनामवकाशदः ॥
तथा मज्ज्ञानलेशानां सर्वज्ञा यूयमाश्रयाः ॥ ४ ॥
एवं रत्नाकरोन्नीतं शुक्तिमुक्ताफलं मया ॥
सर्वज्ञाः स्वगुणैरेतद्भूषयन्तु कृपान्विताः ॥ ५ ॥
एवं समृद्धसंगीतरत्नाकरकलानिधौ ॥
सुधास्वादेन सुधियामानन्दश्चिरमेधते ॥ ६ ॥

इति श्रीमदभिनवभरताचार्यरायवयकारतोडरमल्लश्रीलक्ष्मणाचार्यनन्दनचतुरकल्लिनाथविरचिते संगीतरत्नाकरकलानिधौ नर्तनाध्यायः सप्तमः समाप्तः ॥ ७ ॥

---

**समाप्तिमगमदयं कलानिधिसमेतः संगीतरत्नाकरः ।**

---

१ ग. °दधिप्रिया । ज. °दधिः प्रिया । २ ज. ममाप्ये° ।

# परिशिष्टम् १

*—त्र एव गीतयो याष्टिकेनोक्ताः । एकैव भाषागीतिः शार्दूलमुनिनाऽभिहिता ॥ ७ ॥

एवमुक्तसमस्तमतानुसारेण तत्तद्गीताश्रितान्ग्रामरागादीन्विविच्योद्दिश्य परिगणयति—

षड्जग्रामसमुत्पन्नाः षड्जकैशिकमध्यमाः ॥
शुद्ध(द्धः)साधारितः षड्जग्रामो ग्रामे तु मध्यमः ॥ ८ ॥
पञ्चमो मध्यमग्रामः षाडवः शुद्धकैशिकः ॥
शुद्धाः सप्तेति भिन्नाः स्युः पञ्च कैशिकमध्यमः ॥ ९ ॥
भिन्नषड्जश्च षड्जाख्ये मध्यमे तानकैशिकौ ॥
भिन्नपञ्चम इत्येते गौडकैशिकमध्यमः ॥ १० ॥
गौडपञ्चमकः षड्जे मध्यमे गौडकैशिकः ॥
इति गौडास्त्रयः षड्जे टक्कवेसरषाडवौ ॥ ११ ॥

" षड्जग्रामसमुत्पन्नाः +शुद्धकैशिकमध्यमः(माः) " इत्यारभ्य " चतुःषष्ट्यधिकं ब्रूते शार्ङ्गी श्रीकरणाग्रणीः " इत्यन्तेन ग्रन्थसंदर्भेण । षड्जग्रामसमुत्पन्नाः षड्जग्रामे समुत्पन्ना इति शुद्धकैशिकमध्यमादीनां त्रयाणां पृथग्विशेषणम् । तेषु षड्जग्रामसंज्ञकस्तृतीयो रागः । ततो मध्यमग्राम इति चान्यो रागः । [ग्रामे?] षड्जग्रामे । मध्यमे(मो) मध्यमग्राम इत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

ससौवीरीमध्यमे तु वोट्टमालवकैशिकौ ॥
मालवः पञ्चमान्तोऽथ द्विग्रामष्टक्ककैशिकः ॥ १२ ॥
हिन्दोलोऽष्टौ वेसरास्ते सप्त साधारणास्ततः ॥
षड्जे स्याद्रूपसाधारः शको भम्माणपञ्चमः ॥ १३ ॥
मध्यमे नर्तगान्धारपञ्चमौ षाड्जकैशिकः ॥
द्विग्रामः ककुभस्त्रिंशद्ग्रामरागा अमी मताः ॥ १४ ॥

मालवः पञ्चमान्त इति । पञ्चमशब्दान्तो मालवो मालवपञ्चम इत्येको रागः ।

---

* संगीतरत्नाकरस्य १५१—१५६ पृष्ठेषु द्वितीयरागविवेकाख्याध्यायान्तर्गतसप्तमश्लोकटीकावशिष्टान्तिमभागमारभ्य त्रिषष्टितमश्लोकटीकास्वल्पादिमभागपर्यन्तं त्रुटितोऽयं टीकांशः ज. संज्ञितपुस्तकादुद्धृतः । तत्र टीकानुरोधेन मूलशोधने श्लोकविभागपदच्छेदादिसंजाताधिकशुद्धीकरणभेदप्रदर्शनार्थं मूलश्लोकानामप्यत्र पुनर्मुद्रणेन संग्रहः कृतः । + षड्जकैशिकमध्यमा इति मूलादर्शपुस्तकपाठः ।

---

१ घ. भम्माण' ।

**द्विग्राम** इति टक्ककैशिकस्य हिन्दोलस्य च विशेषणम् । तयोर्ग्रामद्वयसंबन्धजात्युत्पन्नत्वे सति साक्षाद्ग्रामद्वययुक्तत्वादिति भावः । पुन**र्द्विग्राम** इति ककुभविशेषणम् । **ग्रामरागा इति** । ग्रामयोर्जातिव्यवधानेनोपपन्नानामपि भाषारागाद्यपेक्षया व्यवधानाल्पत्वादेतेषां ग्रामरागत्वव्यपदेशः । यथाऽऽह **मतङ्गः**—"नन्वेते रागाः ग्रामविशेषसंबन्धात्कुतोऽयं विशेषलाभः । उच्यते भरतवचनादेव । तथा चाऽऽह **भरतः**—जातिसंभूतत्वाद्रागाणामिति । "यत्किंचिद्गीयते लोके तत्सर्वं जातिषु स्थितम्" इति वचनाच्च । इति ॥ १२ ॥ १३ ॥ १४ ॥

**अष्टोपरागास्तिलकः शकादिष्टक्कसैन्धवः ॥**
**कोकिला पञ्चमो रेवगुप्तः पञ्चमषाडवः ॥**
**भावनापञ्चमो[1] नागगान्धारो[2] नागपञ्चमः ॥ १५ ॥**

**उपरागा इति** । जातिभ्यो जातानामपि ग्रामरागसमीपभावित्वादष्टानामुपरागत्वम् । **तिलकः शकादिरिति** । शकादिस्तिलकः शकतिलक इत्यर्थः ॥ १५ ॥

**श्रीरागनट्टौ बङ्गालो भासमध्यमषाडवौ ॥**
**रक्तहंसः कोल्हहासः प्रसवो भैरवध्वनिः ॥ १६ ॥**

***बङ्गालाविति** । द्वौ रागौ । **भासमध्यमषाडवाविति** । भासश्च मध्यमषाडवश्चेति द्वंद्वः ॥ १६ ॥

**मेघरागः सोमरागकामोदौ चाभ्रपञ्चमः[3] ॥**
**स्यातां कन्दर्पदेशाख्यौ ककुभान्तश्च कैशिकः ॥**
**नट्टनारायणश्चेति रागा विंशतिरीरिताः ॥ १७ ॥**

[सोमराग]कामोदाविति द्वौ । **ककुभान्तश्च कैशिक इति** । ककुभशब्दान्तः कैशिकः कैशिकककुभ इत्येकः । **रागा इति** । उपरागेभ्योऽप्यनन्तरं जातिभ्य एव जाताः श्रीरागादयो विंशतिः+ ॥ १७ ॥

**सौवीरः ककुभष्टक्कः पञ्चमो भिन्नपञ्चमः ॥ १८ ॥**
**टक्ककैशिकहिन्दोलबोट्टमालवकैशिकाः ॥**
**गान्धारपञ्चमो भिन्नषड्जो वेसरषाडवः ॥ १९ ॥**
**मालवः पञ्चमान्तश्च तानः पञ्चमषाडवः ॥**
**भाषाणां जनकाः पञ्चदशैते याष्टिकोदिताः ॥ २० ॥**
**भाषाश्चतस्रः सौवीरे सौवीरी वेगमध्यमा ॥**
**साधारिता च गान्धारी ककुभे भिन्नपञ्चमी ॥ २१ ॥**

---

* मूले बङ्गालाविति पाठो युक्तः । + अत्र संख्यापूर्तिर्न ज्ञायते ।

---

१ ङ. 'मो राग' । २ ङ. 'रो राग' । ३ घ. चाम्रप' । ङ. चाप्रप' ।

काम्बोजी मध्यमग्रामा रगन्ती मधुरी तथा ॥
शकमिश्रेति षट्तिस्रो विभाषा भोगवर्धनी ॥ २२ ॥
आभीरिका मधुकरी तथैकान्तरभाषिका ॥
शालवाहनिका टक्के त्रवणा त्रवणोद्भवा ॥ २३ ॥
वैरञ्जी मध्यमग्रामदेहा मालववेसरी ॥
छेवाटी सैन्धवी कोलाहला पञ्चमलक्षिता ॥
सौराष्ट्री पञ्चमी वेगरञ्जी गान्धारपञ्चमी ॥ २४ ॥

निरुपपदरागव्यपदेशभाजस्त एते सौवीरादयः पञ्चदश ग्रामरागाः । **भाषाणां** ग्रामरागालापप्रकाराणाम् । तथा चाऽऽह मतङ्गः—"ग्रामरागाणामेवाऽऽलापनप्रकारा भाषा वाच्याः । भाषाशब्दोऽत्र प्रकारवाची" इति । एवं विभाषान्तरभाषाशब्दावपि तत्तदनन्तरोत्पन्नालापप्रकारवाचकावित्यवगन्तव्यम् । तासामपि रञ्जनाद्रागत्वं च बोद्धव्यम् । तथा च वक्ष्यति—"रञ्जनाद्रागता भाषारागाङ्गादेरपीष्यते" इति । *तासां जनका याष्टिकोदिता भाषाजनकतया याष्टिकमुनिनोक्ताः । मतान्तराणामप्यत्रैवान्तर्भावाद्याष्टिकमतानुसारेणोद्दिश्यन्त इत्यर्थः । कथम् । **मतङ्गः** षडेव ग्रामरागान्भाषाजनकत्वेनाभाषत । **काश्यपस्तु** द्वादशैवावोचत् । **शार्दूलः** पुनः +कथं चतुर एवाभ्यधादिति ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

मालवी तानवलिता ललिता रविचन्द्रिका ॥ २५ ॥
ताना वाहेरिका दोह्या वेसरीत्येकविंशतिः ॥
भाषाः स्युरथ देवारवर्धन्यान्ध्री च गुर्जरी ॥ २६ ॥
भावनीति विभाषाः स्युश्चतस्रः पञ्चमे पुनः ॥
कैशिकी त्रावणी तानोद्भवाऽऽभीरी च गुर्जरी ॥ २७ ॥
सैन्धवी दाक्षिणात्याऽऽन्ध्री माङ्गली भावनी दश ॥
इति भाषा विभाषे द्वे भम्माण्यन्धालिके ततः ॥ २८ ॥

×तानाऽम्बाहेरिकेति विभागः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

चतस्रः पञ्चमे भिन्ने भाषा धैवतभूषिता(ताः) ॥
शुद्धा भिन्ना च वाराटी विशालेत्यथ कौशली ॥ २९ ॥

**मालवाभिन्नवलिते इति ।** मालवा च भिन्नवलिता चेति द्वंद्वः । प्रेङ्खक इति हिन्दोलपर्यायः ॥ २९ ॥

---

* इदं पदमधिकमिव भाति । + कथमित्यधिकम् । × ताना वाहेरिकेति मूलादर्शपुस्तकपाठः । तत्र मूलानुरोधेन टीकायां टीकानुरोधेन मूले वा पाठः कल्प्यः ।

---

१ ङ. 'गराजी गा' । २ ख. कौसली ।

विभाषा मालवाभिन्नवलिते टक्ककैशिके ॥
भाषे द्वे द्राविडीत्येका विभाषा प्रेङ्खके नव ॥ ३० ॥
भाषाः स्युर्वेसरी चूतमञ्जरी षड्जमध्यमा ॥
मधुरी भिन्नपौराली गौडी मालववेसरी ॥
छेवाटी पिञ्जरीत्येका वोट्टे भाषा तु माङ्गली ॥ ३१ ॥
वाङ्गाली माङ्गली हर्षपुरी मालववेसरी ॥ ३२ ॥
खञ्जिनी गुर्जरी गौडी पौराली चार्धवेसरी ॥
शुद्धा मालवरूपा च सैन्धव्याभीरिकेत्यमूः ॥ ३३ ॥
भाषास्त्रयोदश ज्ञेया विज्ञैर्मालवकैशिके ॥
विभाषे द्वे तु काम्वोजी तद्वद्देवारवर्धनी ॥ ३४ ॥
गान्धारपञ्चमे भाषा गान्धारी भिन्नषड्जका(के) ॥
गान्धारवल्ली कच्छेल्ली स्वरवल्ली निषादिनी ॥ ३५ ॥
त्रवणा मध्यमा शुद्धा दाक्षिणात्या पुलिन्दिका ॥
तुम्वुरा षड्जभाषा च कालिन्दी ललिता ततः ॥ ३६ ॥
श्रीकण्ठिका च वाङ्गाली गान्धारी सैन्धवीत्यमूः ॥
भाषाः सप्तदश ज्ञेयाश्चतस्त्रस्तु विभाषिकाः ॥
पौराली मालवा कालिन्द्यपि देवारवर्धनी ॥ ३७ ॥
वेसरे षाडवे भाषे द्वे वाह्या वाह्यषाडवा ॥ ३८ ॥
विभाषे पार्वती श्रीकठ्यथ मालवपञ्चमे ॥
भाषास्तिस्रो वेदवती भाविनी च विभाविनी ॥ ३९ ॥

॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

ताने तानोद्भवा भाषा भाषा पञ्चमषाडवे ॥
पोता भाषां शकामेके रेवगुप्ते विदुर्विदुः ॥ ४० ॥
विभाषापल्लवी भासवलिता किरणावली ॥
शकाद्यावलितेत्येतास्तिस्रस्त्वन्तरभाषिका: ॥ ४१ ॥
चतस्रोऽनुक्तजनका बृहद्देश्यामिमाः (?) स्मृताः ॥
एवं षण्णवतिर्भाषा विभाषा विंशतिः स्मृताः ॥
चतस्रोऽन्तरभाषाः स्युः शार्ङ्गदेवस्य संमताः ॥ ४२ ॥

एके रेवगुप्ते विदुर्विदुरिति । उक्तमतानुसारेण रेवगुप्तस्य भाषाजनकेषु(ष्व)

---

१ ख. °री भूत° । घ. °री पूत° । २ च. खञ्जनी । ३ ख. कालिङ्गी । ४ ङ. मालवी । ५ ख. द्वे नाम्ये बा° । ङ. द्वे नाद्या वा° । ६ च. वेगवती । ७ ग. °ससविका कि° । ८ घ. °शतिस्तथा ॥४२॥

परिगणनेऽपि तस्यापि भाषाजनकत्वमङ्गीकृत्यान्य आचार्याः शकां तद्भाषामुक्तवन्त इत्यर्थः । चतस्रोऽनुक्तजनका इति । पह्लवीप्रभृतयश्चतस्रः ॥ ४० ॥ ४१ ॥ ४२॥

भाषा मुख्या स्वराख्या च देशाख्या चोपरागजा ॥ ४३ ॥
चतुर्विधा मतङ्गोक्ता मुख्याऽनन्योपजीविनी ॥
स्वरदेशाख्यया ख्याता स्वराख्या देशजा क्रमात् ॥ ४४ ॥
अन्योपरागजा ताभ्यो याष्टिकेनोदिताः पुनः ॥
संकीर्ण(र्णा) देशजा मूला छायामात्रेतिनामभिः ॥ ४५ ॥
शुद्धाऽऽभि(भी)री रगन्ती च त्रिधा मालववेसरी ॥
मुख्या पडिति शेषास्तु सुज्ञाताः स्फुटलक्षणाः ॥
नामसाम्यं तु कासांचिद्भिन्नानान(म)पि लक्ष्मतः ॥ ४६ ॥

अनन्योपजीविनी मुख्या । अन्योपजीवित्वं स्वरदेशापेक्षया प्रवृत्त(वर्त)मानत्वम् । तेन विना स्वातन्त्र्येण प्रवर्तमानाऽत्र मुख्या । ताभ्यो मुख्यास्वराख्यादेशाख्याभ्योऽन्या विलक्षणोपरागजेति ज्ञेया । मुख्यादीनामेव मतङ्गोक्तानां याष्टिकोक्तानि संज्ञान्तराणि यथा । मूलेति मुख्या । संकीर्णेति स्वराख्या । देशजेति देशाख्या । छायामात्रेत्युपरागजा ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

इति द्वितीये रागविवेकाध्याये ग्रामरागोपरागरागभाषाविभाषान्तरभाषाविवेकाख्यं प्रथमं प्रकरणम् ॥ १ ॥

अथ प्रसिद्धरागभाषाविभाषालक्षणाख्यं द्वितीयं प्रकरणम् ।

अथ रागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गनिर्णयम् ॥
केषांचिन्मतमाश्रित्य कुरुते सोढलात्मजः ॥ १ ॥ ( ४७ )
रञ्जनाद्रागता भाषारागा(रागभाषा)ङ्गादेरपीष्यते ॥
देशीरागतया प्रोक्तं रागाङ्गादिचतुष्टयम् ॥ २ ॥ ( ४८ )

रागाङ्गादिशब्दानां निरुक्तिर्मतङ्गोक्ता द्रष्टव्या ।

यथा—"ग्रामोक्तानां तु रागाणां छायामात्रं भवेदिति ।
गीतज्ञैः कथिताः सर्वे रागाङ्गास्तेन हेतुना ॥
भाषाच्छायाश्रिता येन जायन्ते सदृशाः किल ।
भाषाङ्गास्तेन कथ्यन्ते गायकैस्तैतिकादिभिः ॥
शोकोत्साहकरुणादिप्रबला या क्रिया ततः ।
जायन्ते च ततो नाम क्रियाङ्गास्तेन कारणात्" इति ।

मतङ्गेनोपाङ्गानि रागाङ्गादिष्वेवान्तर्भावितानि । ग्रन्थकारेण पुनस्तेषां पृथगुद्देशो मतान्तरानुसारेण कृत इति मन्तव्यम् । अङ्गच्छायानुकारित्वात्तेषामुपाङ्गत्वं च । **रागाङ्गादिचतुष्टयं देशीरागतया प्रोक्तमिति** । देश[शी]त्वं नाम कामचारप्रवर्तितत्वं तत्तन्मार्गोक्तेषु श्रुतिस्वरादिनियमेषु केषांचित्परित्यागादिति भावः ॥ ४७ ॥ ४८ ॥

**प्रसिद्धा ग्रामरागाद्याः केचिद्देशीत्यपीरिताः ॥**
**तत्र पूर्वप्रसिद्धानामुद्देशः क्रियतेऽधुना ॥ ३ ॥ ( ४९ )**
**शंकराभरणो घण्टारव[1] आहंसदीपकौ ॥**
**रीतिः[2] पूर्णाटिका लाटी पल्लवीति बभाषिरे ॥ ४ ॥ ( ५० )**

**प्रसिद्धा ग्रामरागाद्याः** । आद्यशब्देन भाषादयो गृह्यन्ते । **देशीत्यपीरिता इति** । तत्रापि किंचिन्नियमाभावो द्रष्टव्यः ॥ ४९ ॥ ५० ॥

**रागाङ्गान्यष्ट गाम्भीरी वौहाटी[3] खशिकोत्पली[4] ॥**
**गोल्ली नादान्तरी नीलोत्पली छाया तरङ्गिणी ॥ ५ ॥ ( ५१ )**
**गान्धारगतिकारञ्ज्ञावित्येकादश[5] मेनिरे ॥**
**भाषाङ्गान्य(ण्य)थ भावक्रीस्वभावक्रीशिवक्रियः ॥ ६ ॥ ( ५२ )**
**मरुकक्रीत्रिनेत्रक्रीकुमुदक्रीदनुक्रियः ॥**
**ओर्जक्रीन्द्रक्रियो[6](यौ ?) नागकृतिर्धन्यकृतिस्तथा ॥ ७ ॥ ( ५३ )**
**विषायक्रीः क्रियाङ्गाणि द्वादशेति[7] जगुर्बुधाः ॥**
**त्रीण्युपाङ्गानि पूर्णाटो देवालश्च[8] गुरुञ्जिका ॥ ८ ॥ ( ५४ )**
**चतुस्त्रिंशदिमे रागाः प्राक्प्रसिद्धाः प्रकीर्तिताः[9] ॥**
**अथाधुना प्रसिद्धानामुद्देशः प्रतिपाद्यते ॥ ९ ॥ ( ५५ )**
**मध्यमादिर्मालवश्रीस्त्रो(स्तो)डी बङ्गालभैरवौ ॥**
**वराटी गुर्जरी गौडकोलाहलवसन्तकाः ॥**
**धान्यासीदेशिदेशाख्या रागाङ्गाणि त्रयोदश ॥ १० ॥ ( ५६ )**

छाया तरङ्गिणीति रागद्वयम् ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥

**डौम्बक्र्यासावरी वेलावली प्रथममञ्जरी ॥ ११ ॥ ( ५७ )**

---

१ ङ. 'रवो हंसकदी' । २ ङ. रीतिकर्णाटिका ला' । ३ च. वेहारी । ४ ख. 'शिखोत्प' । ५ ख. गान्धारिका वेगर' । ६ ख. 'जर्क्रीदक्रि' । ७ च. 'ति निरूपिताः । त्री' । ८ ङ. 'श्च कुरु' । ९ ख. प्रकाशिताः ।

आडिका मोदिका नागध्वनिः शुद्धवराटिका ॥
नट्टा कर्णाटवङ्गालौ भाषाङ्गाणि नवाब्रुवन् ॥ १२ ॥ ( ५८ )
क्रियाङ्गत्रितयं रायक्रतिर्गौडक्रतिस्तथा ॥
देवक्रीरित्यथोपाङ्गसप्तविंशतिरुच्यते ॥ १३ ॥ ( ५९ )
कौन्तली द्राविडी सैन्धव्यथ स्थानवराटिका ॥
हतस्वरवराटी च स्यात्प्रतापवराटिका ॥ १४ ॥ ( ६० )
वराट्यः षडिति च्छाया तुरुष्काद्ये तु तोडिके ॥
महाराष्ट्री च सौराष्ट्री दक्षिणा द्राविडीत्यमूः ॥ १५ ॥ ( ६१ )
उक्ताश्चतस्रो गुर्जर्यो भुञ्छिका स्तम्भतीर्थिका ॥
छायाप्रतापोपपदे बेलाबल्यौ च भैरवी ॥ १६ ॥ ( ६२ )

डोम्बक्रीति भूपालीपर्यायः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥

कामोदासिङ्बलीत्येको रागः । छायानट्टेति च । उपाङ्गेषु* ........ ॥१७॥(६३)

---

* एतत्पुरोगतं १५६ पृष्ठे वर्तते ।

## परिशिष्टम् २.

# अथ सप्तस्वराणां प्रस्तारारम्भः ।

॥ स. ॥

द्वयोः स्वरयोः प्रस्तारः ।

| | | | | | |
|---|---|---|---|---|---|
| (१) सरि.<br>रिस. | सग.<br>गस. | सम.<br>मस. | सप.<br>पस. | सध.<br>धस. | सनि.<br>निस. |
| (२) रिग.<br>गरि. | रिम.<br>मरि. | रिप.<br>परि. | रिध.<br>धरि. | रिनि.<br>निरि. | |
| (३) गम.<br>मग. | गप.<br>पग. | गध.<br>धग. | गनि.<br>निग. | | |
| (४) मप.<br>पम. | मध.<br>धम. | मनि.<br>निम. | | | |
| (५) पध.<br>धप. | पनि.<br>निप. | | | | |
| (६) धनि.<br>निध. | | | | | |

## त्रयाणां स्वराणां प्रस्तारः ।

| | | | |
|---|---|---|---|
| (१) सरिग. | (२) सरिम. | (३) सरिप. | (४) सरिध. |
| रिसग. | रिसम. | रिसप. | रिसध. |
| सगरि. | समरि. | सपरि. | सधरि. |
| गसरि. | मसरि. | पसरि. | धसरि. |
| रिगस. | रिमस. | रिपस. | रिधस. |
| गरिस. | मरिस. | परिस. | धरिस. |
| (५) सरिनि. | (६) सगम. | (७) सगप. | (८) सगध. |
| रिसनि. | गसम. | गसप. | गसध. |
| सनिरि. | समग. | सपग. | सधग. |
| निसरि. | मसग. | पसग. | धसग. |
| रिनिस. | गमस. | गपस. | गधस. |
| निरिस. | मगस. | पगस. | धगस. |
| (९) सगनि. | (१०) समप. | (११) समध. | (१२) समनि. |
| गसनि. | मसप. | मसध. | मसनि. |
| सनिग. | सपम. | सधम. | सनिम. |
| निसग. | पसम. | धसम. | निसम. |
| गनिस. | मपस. | मधस. | मनिस. |
| निगस. | पमस. | धमस. | निमस. |

| (१३) सपध. | (१४) सपनि. | (१५) सधनि. | (१६) रिगम. |
|---|---|---|---|
| पसध. | पसनि. | धसनि. | गरिम. |
| सधप. | सनिप. | सनिध. | रिमग. |
| धसप. | निसप. | निसध. | मरिग. |
| पधस. | पनिस. | धनिस. | गमरि. |
| धपस. | निपस. | निधस. | मगरि. |

| (१७) रिगप. | (१८) रिगध. | (१९) रिगनि. | (२०) रिमप. |
|---|---|---|---|
| गरिप. | गरिध. | गरिनि. | मरिप. |
| रिपग. | रिधग. | रिनिग. | रिपम. |
| परिग. | धरिग. | निरिग. | परिम. |
| गपरि. | गधरि. | गनिरि. | मपरि. |
| पगरि. | धगरि. | निगरि. | पमरि. |

| (२१) रिमध. | (२२) रिमनि. | (२३) रिपध. | (२४) रिपनि. |
|---|---|---|---|
| मरिध. | मरिनि. | परिध. | परिनि |
| रिधम. | रिनिम. | रिधप. | रिनिप. |
| धरिम. | निरिम. | धरिप. | निरिप. |
| मधरि. | मनिरि. | पधरि. | पनिरि. |
| धमरि. | निमरि. | धपरि. | निपरि. |

| (२५) रिधनि. | (२६) गमप. | (२७) गमध. | (२८) गमनि. |
|---|---|---|---|
| धरिनि. | मगप. | मगध. | मगनि. |
| रिनिध. | गपम. | गधम. | गनिम. |
| निरिध. | पगम. | धगम. | निगम. |
| धनिरि. | मपग. | मधग. | मनिग. |
| निधरि. | पमग. | धमग. | निमग. |

| (२९) गपध. | (३०) गपनि. | (३१) गधनि. | (३२) मपध. |
|---|---|---|---|
| पगध. | पगनि. | धगनि. | पमध. |
| गधप. | गनिप. | गनिध. | मधप. |
| धगप. | निगप. | निगध. | धमप. |
| पधग. | पनिग. | धनिग. | पधम. |
| धपग. | निपग. | निधग. | धपम. |

| (३३) मपनि. | (३४) मधनि. | (३५) पधनि. |
|---|---|---|
| पमनि. | धमनि. | धपनि. |
| मनिप. | मनिध. | पनिध. |
| निमप. | निमध. | निपध. |
| पनिम. | धनिम. | धनिप. |
| निपम. | निधम. | निधप. |

## चतुर्णां स्वराणां प्रस्तारः ।

| (प, ध, नि, वर्ज्य.) | (म, ध, नि, वर्ज्य.) | (म, प, नि, वर्ज्य.) | (म, प, ध, वर्ज्य.) |
|---|---|---|---|
| (१) सरीगम. | (२) सरीगप. | (३) सरीगध. | (४) सरीगनि. |
| रिसगम. | रिसगप. | रिसगध. | रिसगनि. |
| सगरिम. | सगरिप. | सगरिध. | सगरिनि. |
| गसरिम. | गसरिप. | गसरिध. | गसरिनि. |
| रिगसम. | रिगसप. | रिगसध. | रिगसनि. |
| गरिसम. | गरिसप. | गरिसध. | गरिसनि. |
| सरिमग. | सरिपग. | सरिधग. | सरिनिग. |
| रिसमग. | रिसपग. | रिसधग. | रिसनिग. |
| समरिग. | सपरिग. | सधरिग. | सनिरिग. |
| मसरिग. | पसरिग. | धसरिग. | निसरिग. |
| रिमसग. | रिपसग. | रिधसग. | रिनिसग. |
| मरिसग. | परिसग. | धरिसग. | निरिसग. |
| सगमरि. | सगपरि. | सगधरि. | सगनिरि. |
| गसमरि. | गसपरि. | गसधरि. | गसनिरि. |
| समगरि. | सपगरि. | सधगरि. | सनिगरि. |
| मसगरि. | पसगरि. | धसगरि. | निसगरि. |
| गमसरि. | गपसरि. | गधसरि. | गनिसरि. |
| मगसरि. | पगसरि. | धगसरि. | निगसरि. |
| रिगमस. | रिगपस. | रिगधस. | रिगनिस. |
| गरिमस. | गरिपस. | गरिधस. | गरिनिस. |
| रिमगस. | रिपगस. | रिधगस. | रिनिगस. |
| मरिगस. | परिगस. | धरिगस. | निरिगस. |
| गमरिस. | गपरिस. | गधरिस. | गनिरिस. |
| मगरिस. | पगरिस. | धगरिस. | निगरिस. |

| (ग, ध, नि, वर्ज्य.) | (ग, प, नि, वर्ज्य.) | (ग, प, ध, वर्ज्य.) | (ग, म, नि, वर्ज्य.) |
|---|---|---|---|
| (५) सरीमप. | (६) सरीमध. | (७) सरीमनि. | (८) सरीपध. |
| रिसमप. | रिसमध. | रिसमनि. | रिसपध. |
| समरिप. | समरिध. | समरिनि. | सपरिध. |
| मसरिप. | मसरिध. | मसरिनि. | पसरिध. |
| रिमसप. | रिमसध. | रिमसनि. | रिपसध. |
| मरिसप. | मरिसध. | मरिसनि. | परिसध. |
| सरिपम. | सरिधम. | सरिनिम. | सरिधप. |
| रिसपम. | रिसधम. | रिसनिम. | रिसधप. |
| सपरिम. | सधरिम. | सनिरिम. | सधरिप. |
| पसरिम. | धसरिम. | निसरिम. | धसरिप. |
| रिपसम. | रिधसम. | रिनिसम. | रिधसप. |
| परिसम. | धरिसम. | निरिसम. | धरिसप. |
| समपरि. | समधरि. | समनिरि. | सपधरि. |
| मसपरि. | मसधरि. | मसनिरि. | पसधरि. |
| सपमरि. | सधमरि. | सनिमरि. | सधपरि. |
| पसमरि. | धसमरि. | निसमरि. | धसपरि. |
| मपसरि. | मधसरि. | मनिसरि. | पधसरि. |
| पमसरि. | धमसरि. | निमसरि. | धपसरि. |
| रिमपस. | रिमधस. | रिमनिस. | रिपधस. |
| मरिपस. | मरिधस. | मरिनिस. | परिधस. |
| रिपमस. | रिधमस. | रिनिमस. | रिधपस. |
| परिमस. | धरिमस. | निरिमस. | धरिपस. |
| मपरिस. | मधरिस. | मनिरिस. | पधरिस. |
| पमरिस. | धमरिस. | निमरिस. | धपरिस. |

| (ग, म, ध, वर्ज्य.) | (ग, म, प, वर्ज्य.) | (रि, ध, नि, वर्ज्य.) | (रि, प, नि, वर्ज्य.) |
|---|---|---|---|
| (९) सरीपनि. | (१०) सरीधनि. | (११) सगमप. | (१२) सगमध. |
| रिसपनि. | रिसधनि. | गसमप. | गसमध. |
| सपरिनि. | सधरिनि. | समगप. | समगध. |
| पसरिनि. | धसरिनि. | मसगप. | मसगध. |
| रिपसनि. | रिधसनि. | गमसप. | गमसध. |
| परिसनि. | धरिसनि. | मगसप. | मगसध. |
| सरिनिप. | सरिनिध. | सगपम. | सगधम. |
| रिसनिप. | रिसनिध. | गसपम. | गसधम. |
| सनिरिप. | सनिरिध. | सपगम. | सधगम. |
| निसरिप. | निसरिध. | पसगम. | धसगम. |
| रिनिसप. | रिनिसध. | गपसम. | गधसम. |
| निरिसप. | निरिसध. | पगसम. | धगसम. |
| सपनिरि. | सधनिरि. | समपग. | समधग. |
| पसनिरि. | धसनिरि. | मसपग. | मसधग. |
| सनिपरि. | सनिधरि. | सपमग. | सधमग. |
| निसपरि. | निसधरि. | पसमग. | धसमग. |
| पनिसरि. | धनिसरि. | मपसग. | मधसग. |
| निपसरि. | निधसरि. | पमसग. | धमसग. |
| रिपनिस. | रिधनिस. | गमपस. | गमधस. |
| परिनिस. | धरिनिस. | मगपस. | मगधस. |
| रिनिपस. | रिनिधस. | गपमस. | गधमस. |
| निरिपस. | निरिधस. | पगमस. | धगमस. |
| पनिरिस. | धनिरिस. | मपगस. | मधगस. |
| निपरिस. | निधरिस. | पमगस. | धमगस. |

| ( रि, प, ध, वर्ज्य. ) | ( रि, म, नि, वर्ज्य. ) | ( रि, म, ध, वर्ज्य. ) | ( रि, म, प, वर्ज्य. ) |
|---|---|---|---|
| (१३) सगमनि. | (१४) सगपध. | (१५) सगपनि. | (१६) सगधनि. |
| गसमनि. | गसपध. | गसपनि. | गसधनि. |
| समगनि. | सपगध. | सपगनि. | सधगनि. |
| मसगनि. | पसगध. | पसगनि. | धसगनि. |
| गमसनि. | गपसध. | गपसनि. | गधसनि. |
| मगसनि. | पगसध. | पगसनि. | धगसनि. |
| सगनिम. | सगधप. | सगनिप. | सगनिध. |
| गसनिम. | गसधप. | गसनिप. | गसनिध. |
| सनिगम. | सधगप. | सनिगप. | सनिगध. |
| निसगम. | धसगप. | निसगप. | निसगध. |
| गनिसम. | गधसप. | गनिसप. | गनिसध. |
| निगसम. | धगसप. | निगसप. | निगसध. |
| समनिग. | सपधग. | सपनिग. | सधनिग. |
| मसनिग. | पसधग. | पसनिग. | धसनिग. |
| सनिमग. | सधपग. | सनिपग. | सनिधग. |
| निसमग. | धसपग. | निसपग. | निसधग. |
| मनिसग. | पधसग. | पनिसग. | धनिसग. |
| निमसग. | धपसग. | निपसग. | निधसग. |
| गमनिस. | गपधस. | गपनिस. | गधनिस. |
| मगनिस. | पगधस. | पगनिस. | धगनिस. |
| गनिमस. | गधपस. | गनिपस. | गनिधस. |
| निगमस. | धगपस. | निगपस. | निगधस. |
| मनिगस. | पधगस. | पनिगस. | धनिगस. |
| निमगस. | धपगस. | निपगस. | निधगस. |

| (रि, ग, नि, वर्ज्य.) | (रि, ग, ध, वर्ज्य.) | (रि, ग, प, वर्ज्य.) | (रि, ग, म, वर्ज्य.) |
|---|---|---|---|
| (१७) समपध. | (१८) समपनि. | (१९) समधनि. | (२०) सपधनि. |
| मसपध. | मसपनि. | मसधनि. | पसधनि. |
| सपमध. | सपमनि. | सधमनि. | सधपनि. |
| पसमध. | पसमनि. | धसमनि. | धसपनि. |
| मपसध. | मपसनि. | मधसनि. | पधसनि. |
| पमसध. | पमसनि. | धमसनि. | धपसनि. |
| समधप. | समनिप. | समनिध. | सपनिध. |
| मसधप. | मसनिप. | मसनिध. | पसनिध. |
| सधमप. | सनिमप. | सनिमध. | सनिपध. |
| धसमप. | निसमप. | निसमध. | निसपध. |
| मधसप. | मनिसप. | मनिसध. | पनिसध. |
| धमसप. | निमसप. | निमसध. | निपसध. |
| सपधम. | सपनिम. | सधनिम. | सधनिप. |
| पसधम. | पसनिम. | धसनिम. | धसनिप. |
| सधपम. | सनिपम. | सनिधम. | सनिधप. |
| धसपम. | निसपम. | निसधम. | निसधप. |
| पधसम. | पनिसम. | धनिसम. | धनिसप. |
| धपसम. | निपसम. | निधसम. | निधसप. |
| मपधस. | मपनिस. | मधनिस. | पधनिस. |
| पमधस. | पमनिस. | धमनिस. | धपनिस. |
| मधपस. | मनिपस. | मनिधस. | पनिधस. |
| धमपस. | निमपस. | निमधस. | निपधस. |
| पधमस. | पनिमस. | धनिमस. | धनिपस. |
| धपमस. | निपमस. | निधमस. | निधपस. |

| (स, ध, नि, वर्ज्य.) | (स, प, नि. वर्ज्य.) | (स, प. ध. वर्ज्य.) | (स, म, नि, वर्ज्य.) |
|---|---|---|---|
| (२१) रिगमप. | (२२) रिगमध. | (२३) रिगमनि. | (२४) रिगपध. |
| गरिमप. | गरिमध. | गरिमनि. | गरिपध. |
| रिमगप. | रिमगध. | रिमगनि. | रिपगध. |
| मरिगप. | मरिगध. | मरिगनि. | परिगध. |
| गमरिप. | गमरिध. | गमरिनि. | गपरिध. |
| मगरिप. | मगरिध. | मगरिनि. | पगरिध. |
| रिगपम. | रिगधम. | रिगनिम. | रिगधप. |
| गरिपम. | गरिधम. | गरिनिम. | गरिधप. |
| रिपगम. | रिधगम. | रिनिगम. | रिधगप. |
| परिगम. | धरिगम. | निरिगम. | धरिगप. |
| गपरिम. | गधरिम. | गनिरिम. | गधरिप. |
| पगरिम. | धगरिम. | निगरिम. | धगरिप. |
| रिमपग. | रिमधग. | रिमनिग. | रिपधग. |
| मरिपग. | मरिधग. | मरिनिग. | परिधग. |
| रिपमग. | रिधमग. | रिनिमग. | रिधपग. |
| परिमग. | धरिमग. | निरिमग. | धरिपग. |
| मपरिग. | मधरिग. | मनिरिग. | पधरिग. |
| पमरिग. | धमरिग. | निमरिग. | धपरिग. |
| गमपरि. | गमधरि. | गमनिरि. | गपधरि. |
| मगपरि. | मगधरि. | मगनिरि. | पगधरि. |
| गपमरि. | गधमरि. | गनिमरि. | गधपरि. |
| पगमरि. | धगमरि. | निगमरि. | धगपरि. |
| मपगरि. | मधगरि. | मनिगरि. | पधगरि. |
| पमगरि. | धमगरि. | निमगरि. | धपगरि. |

| (स, म, ध, वर्ज्य.) | (स, म, प, वर्ज्य.) | (स, ग, नि, वर्ज्य.) | (स, ग, ध, वर्ज्य.) |
|---|---|---|---|
| (२५) रिगपनि. | (२६) रिगधनि. | (२७) रिमपध. | (२८) रिमपनि. |
| गरिपनि. | गरिधनि. | मरिपध. | मरिपनि. |
| रिपगनि. | रिधगनि. | रिपमध. | रिपमनि. |
| परिगनि. | धरिगनि. | परिमध. | परिमनि. |
| गपरिनि. | गधरिनि. | मपरिध. | मपरिनि. |
| पगरिनि. | धगरिनि. | पमरिध. | पमरिनि. |
| रिगनिप. | रिगनिध. | रिमधप. | रिमनिप. |
| गरिनिप. | गरिनिध. | मरिधप. | मरिनिप. |
| रिनिगप. | रिनिगध. | रिधमप. | रिनिमप. |
| निरिगप. | निरिगध. | धरिमप. | निरिमप. |
| गनिरिप. | गनिरिध. | मधरिप. | मनिरिप. |
| निगरिप. | निगरिध. | धमरिप. | निमरिप. |
| रिपनिग. | रिधनिग. | रिपधम. | रिपनिम. |
| परिनिग. | धरिनिग. | परिधम. | परिनिम. |
| रिनिपग. | रिनिधग. | रिधपम. | रिनिपम. |
| निरिपग. | निरिधग. | धरिपम. | निरिपम. |
| पनिरिग. | धनिरिग. | पधरिम. | पनिरिम. |
| निपरिग. | निधरिग. | धपरिम. | निपरिम. |
| गपनिरि. | गधनिरि. | मपधरि. | मपनिरि. |
| पगनिरि. | धगनिरि. | पमधरि. | पमनिरि. |
| गनिपरि. | गनिधरि. | मधपरि. | मनिपरि. |
| निगपरि. | निगधरि. | धमपरि. | निमपरि. |
| पनिगरि. | धनिगरि. | पधमरि. | पनिमरि. |
| निपगरि. | निधगरि. | धपमरि. | निपमरि. |

| ( स, ग, प, वर्ज्य. ) | ( स, ग, म, वर्ज्य. ) | ( स, रि, नि, वर्ज्य. ) | ( स, रि, ध, वर्ज्य. ) |
|---|---|---|---|
| (२९) रिमधनि. | (३०) रिपधनि. | (३१) गमपध. | (३२) गमपनि. |
| मरिधनि. | परिधनि. | मगपध. | मगपनि. |
| रिधमनि. | रिधपनि. | गपमध. | गपमनि. |
| धरिमनि. | धरिपनि. | पगमध. | पगमनि. |
| मधरिनि. | पधरिनि. | मपगध. | मपगनि. |
| धमरिनि. | धपरिनि. | पमगध. | पमगनि. |
| रिमनिध. | रिपनिध. | गमधप. | गमनिप. |
| मरिनिध. | परिनिध. | मगधप. | मगनिप. |
| रिनिमध. | रिनिपध. | गधमप. | गनिमप. |
| निरिमध. | निरिपध. | धगमप. | निगमप. |
| मनिरिध. | पनिरिध. | मधगप. | मनिगप. |
| निमरिध. | निपरिध. | धमगप. | निमगप. |
| रिधनिम. | रिधनिप. | गपधम. | गपनिम. |
| धरिनिम. | धरिनिप. | पगधम. | पगनिम. |
| रिनिधम. | रिनिधप. | गधपम. | गनिपम. |
| निरिधम. | निरिधप. | धगपम. | निगपम. |
| धनिरिम. | धनिरिप. | पधगम. | पनिगम. |
| निधरिम. | निधरिप. | धपगम. | निपगम. |
| मधनिरि. | पधनिरि. | मपधग. | मपनिग. |
| धमनिरि. | धपनिरि. | पमधग. | पमनिग. |
| मनिधरि. | पनिधरि. | मधपग. | मनिपग. |
| निमधरि. | निपधरि. | धमपग. | निमपग. |
| धनिमरि. | धनिपरि. | पधमग. | पनिमग. |
| निधमरि. | निधपरि. | धपमग. | निपमग. |

| ( स, रि, प, वर्ज्य, ) | ( स, रि, म, वर्ज्य, ) | ( स, रि, ग, वर्ज्य, ) |
|---|---|---|
| [३३] गमधनि. | [३४] गपधनि. | [३५] मपधनि. |
| मगधनि. | पगधनि. | पमधनि. |
| गधमनि. | गधपनि. | मधपनि. |
| धगमनि. | धगपनि. | धमपनि. |
| मधगनि. | पधगनि. | पधमनि. |
| धमगनि. | धपगनि. | धपमनि. |
| गमनिध. | गपनिध. | मपनिध. |
| मगनिध. | पगनिध. | पमनिध. |
| गनिमध. | गनिपध. | मनिपध. |
| निगमध. | निगपध. | निमपध. |
| मनिगध. | पनिगध. | पनिमध. |
| निमगध. | निपगध. | निपमध. |
| गधनिम. | गधनिप. | मधनिप. |
| धगनिम. | धगनिप. | धमनिप. |
| गनिधम. | गनिधप. | मनिधप. |
| निगधम. | निगधप. | निमधप. |
| धनिगम. | धनिगप. | धनिमप. |
| निधगम. | निधगप. | निधमप. |
| मधनिग. | पधनिग. | पधनिम. |
| धमनिग. | धपनिग. | धपनिम. |
| मनिधग. | पनिधग. | पनिधम. |
| निमधग. | निपधग. | निपधम. |
| धनिमग. | धनिपग. | धनिपम. |
| निधमग. | निधपग. | निधपम. |

## पञ्चानां स्वराणां प्रस्तारः ।

( ध. नि. वर्ज्य. )

| | | | | |
|---|---|---|---|---|
| [१] | सरीगमप. | सरीगपम. | सरीमपग. | सगमपरि. |
| | रिसगमप. | रिसगपम. | रिसमपग. | गसमपरि. |
| | सगरिमप. | सगरिपम. | समरिपग. | समगपरि. |
| | गसरिमप. | गसरिपम. | मसरिपग. | मसगपरि. |
| | रिगसमप. | रिगसपम. | रिमसपग. | गमसपरि. |
| | गरिसमप. | गरिसपम. | मरिसपग. | मगसपरि. |
| | सरिमगप. | सरिपगम. | सरिपमग. | सगपमरि. |
| | रिसमगप. | रिसपगम. | रिसपमग. | गसपमरि. |
| | समरिगप. | सपरिगम. | सपरिमग. | सपगमरि. |
| | मसरिगप. | पसरिगम. | पसरिमग. | पसगमरि. |
| | रिमसगप. | रिपसगम. | रिपसमग. | गपसमरि. |
| | मरिसगप. | परिसगम. | परिसमग. | पगसमरि. |
| | सगमरिप. | सगपरिम. | समपरिग. | समपगरि. |
| | गसमरिप. | गसपरिम. | मसपरिग. | मसपगरि. |
| | समगरिप. | सपगरिम. | सपमरिग. | सपमगरि. |
| | मसगरिप. | पसगरिम. | पसमरिग. | पसमगरि. |
| | गमसरिप. | गपसरिम. | मपसरिग. | मपसगरि. |
| | मगसरिप. | पगसरिम. | पमसरिग. | पमसगरि. |
| | रिगमसप. | रिगपसम. | रिमपसग. | गमपसरि. |
| | गरिमसप. | गरिपसम. | मरिपसग. | मगपसरि. |
| | रिमगसप. | रिपगसम. | रिपमसग. | गपमसरि. |
| | मरिगसप. | परिगसम. | परिमसग. | पगमसरि. |
| | गमरिसप. | गपरिसम. | मपरिसग. | मपगसरि. |
| | मगरिसप. | पगरिसम. | पमरिसग. | पमगसरि. |

( प. नि. वर्ज्यं. )

| | | | |
|---|---|---|---|
| रिगमपस. | (२) सरिगमध. | सरीगधम. | सरीमधग. |
| गरिमपस. | रिसगमध. | रिसगधम. | रिसमधग. |
| रिमगपस. | सगरिमध. | सगरिधम. | समरिधग. |
| मरिगपस. | गसरिमध. | गसरिधम. | मसरिधग. |
| गमरिपस. | रिगसमध. | रिगसधम. | रिमसधग. |
| मगरिपस. | गरिसमध. | गरिसधम. | मरिसधग. |
| रिगपमस. | सरिमगध. | सरिधगम. | सरिधमग. |
| गरिपमस. | रिसमगध. | रिसधगम. | रिसधमग. |
| रिपगमस. | समरिगध. | सधरिगम. | सधरिमग. |
| परिगमस. | मसरिगध. | धसरिगम. | धसरिमग. |
| गपरिमस. | रिमसगध. | रिधसगम. | रिधसमग. |
| पगरिमस. | मरिसगध. | धरिसगम. | धरिसमग. |
| रिमपगस. | सगमरिध. | सगधरिम- | समधरिग. |
| मरिपगस. | गसमरिध. | गसधरिम. | मसधरिग. |
| रिपमगस. | समगरिध. | सधगरिम. | सधमरिग. |
| परिमगस. | मसगरिध. | धसगरिम. | धसमरिग. |
| मपरिगस. | गमसरिध. | गधसरिम. | मधसरिग. |
| पमरिगस. | मगसरिध. | धगसरिम. | धमसरिग. |
| गमपरिस. | रिगमसध. | रिगधसम. | रिमधसग. |
| मगपरिस. | गरिमसध. | गरिधसम. | मरिधसग. |
| गपमरिस. | रिमगसध. | रिधगसम. | रिधमसग. |
| पगमरिस. | मरिगसध. | धरिगसम. | धरिमसग. |
| मपगरिस. | गमरिसध. | गधरिसम. | मधरिसग. |
| पमगरिस. | मगरिसध. | धगरिसम. | धमरिसग. |

( प. ध. वर्ज्य. )

| | | | |
|---|---|---|---|
| सगमधरि. | रिगमधस. | [३] सरीगमनि. | सरीगनिम. |
| गसमधरि. | गरिमधस. | रिसगमनि. | रिसगनिम. |
| समगधरि. | रिमगधस. | सगरिमनि. | सगरिनिम. |
| मसगधरि. | मरिगधस. | गसरिमनि- | गसरिनिम. |
| गमसधरि. | गमरिधस. | रिगसमनि. | रिगसनिम. |
| मगसधरि. | मगरिधस. | गरिसमनि. | गरिसनिम. |
| सगधमरि. | रिगधमस. | सरिमगनि. | सरिनिगम. |
| गसधमरि. | गरिधमस. | रिसमगनि. | रिसनिगम. |
| सधगमरि. | रिधगमस. | समरिगनि. | सनिरिगम. |
| धसगमरि. | धरिगमस. | मसरिगनि. | निसरिगम. |
| गधसमरि. | गधरिमस. | रिमसगनि. | रिनिसगम. |
| धगसमरि. | धगरिमस. | मरिसगनि. | निरिसगम. |
| समधगरि. | रिमधगस. | सगमरिनि. | सगनिरिम. |
| मसधगरि. | मरिधगस. | गसमरिनि. | गसनिरिम. |
| सधमगरि. | रिधमगस. | समगरिनि. | सनिगरिम. |
| धसमगरि. | धरिमगस. | मसगरिनि. | निसगरिम. |
| मधसगरि. | मधरिगस. | गमसरिनि. | गनिसरिम. |
| धमसगरि. | धमरिगस. | मगसरिनि. | निगसरिम. |
| गमधसरि. | गमधरिस. | रिगमसनि. | रिगनिसम. |
| मगधसरि. | मगधरिस. | गरिमसनि. | गरिनिसम. |
| गधमसरि. | गधमरिस. | रिमगसनि. | रिनिगसम. |
| धगमसरि. | धगमरिस. | मरिगसनि. | निरिगसम. |
| मधगसरि. | मधगरिस. | गमरिसनि. | गनिरिसम. |
| धमगसरि. | धमगरिस. | मगरिसनि. | निगरिसम. |

[ म, नि, वर्ज्य. ]

| | | | |
|---|---|---|---|
| सरीमनिग. | सगमनिरि. | रिगमनिस. | (४) सरीगपध. |
| रिसमनिग. | गसमनिरि. | गरिमनिस. | रिसगपध. |
| समरिनिग. | समगनिरि. | रिमगनिस. | सगरिपध. |
| मसरिनिग. | मसगनिरि. | मरिगनिस. | गसरिधप. |
| रिमसनिग. | गमसनिरि. | गमरिनिस. | रिगसपध. |
| मरिसनिग. | मगसनिरि. | मगरिनिस. | गरिसपध. |
| सरिनिमग. | सगनिमरि. | रिगनिमस. | सरिपगध. |
| रिसनिमग. | गसनिमरि. | गरिनिमस. | रिसपगध. |
| सनिरिमग. | सनिगमरि. | रिनिगमस. | सपरिगध. |
| निसरिमग. | निसगमरि. | निरिगमस. | पसरिगध. |
| रिनिसमग. | गनिसमरि. | गनिरिमस. | रिपसगध. |
| निरिसमग. | निगसमरि. | निगरिमस. | परिसगध. |
| समनिरिग. | समनिगरि. | रिमनिगस. | सगपरिध. |
| मसनिरिग. | मसनिगरि. | मरिनिगस. | गसपरिध. |
| सनिमरिग. | सनिमगरि. | रिनिमगस. | सपगरिध. |
| निसमरिग. | निसमगरि. | निरिमगस. | पसगरिध. |
| मनिसरिग. | मनिसगरि. | मनिरिगस. | गपसरिध. |
| निमसरिग. | निमसगरि. | निमरिगस. | पगसरिध. |
| रिमनिसग. | गमनिसरि. | गमनिरिस. | रिगपसध. |
| मरिनिसग. | मगनिसरि. | मगनिरिस. | गरिपसध. |
| रिनिमसग. | गनिमसरि. | गनिमरिस. | रिपगसध. |
| निरिमसग. | निगमसरि. | निगमरिस. | परिगसध. |
| मनिरिसग. | मनिगसरि. | मनिगरिस. | गपरिसध. |
| निमरिसग. | निमगसरि. | निमगरिस. | पगरिसध. |

| | | | |
|---|---|---|---|
| सरीगधप. | सरीपधग. | सगपधरि. | रिगपधस. |
| रिसगधप. | रिसपधग. | गसपधरि. | गरिपधस. |
| सगरिधप. | सपरिधग. | सपगधरि. | रिपगधस. |
| गसरिधप. | पसरिधग. | पसगधरि. | परिगधस. |
| रिगसधप. | रिपसधग. | गपसधरि. | गपरिधस. |
| गरिसधप. | परिसधग. | पगसधरि. | पगरिधस. |
| सरिधगप. | सरिधपग. | सगधपरि. | रिगधपस. |
| रिसधगप. | रिसधपग. | गसधपरि. | गरिधपस. |
| सधरिगप. | सधरिपग. | सधगपरि. | रिधगपस. |
| धसरिगप. | धसरिपग. | धसगपरि. | धरिगपस. |
| रिधसगप. | रिधसपग. | गधसपरि. | गधरिपस. |
| धरिसगप. | धरिसपग. | धगसपरि. | धगरिपस. |
| सगधरिप. | सपधरिग. | सपधगरि. | रिपधगस. |
| गसधरिप. | पसधरिग. | पसधगरि. | परिधगस. |
| सधगरिप. | सधपरिग. | सधपगरि. | रिधपगस. |
| धसगरिप. | धसपरिग. | धसपगरि. | धरिपगस. |
| गधसरिप. | पधसरिग. | पधसगरि. | पधरिगस. |
| धगसरिप. | धपसरिग. | धपसगरि. | धपरिगस. |
| रिगधसप. | रिपधसग. | गपधसरि. | गपधरिस. |
| गरिधसप. | परिधसग. | पगधसरि. | पगधरिस. |
| रिधगसप. | रिधपसग. | गधपसरि. | गधपरिस. |
| धरिगसप. | धरिपसग. | धगपसरि. | धगपरिस. |
| गधरिसप. | पधरिसग. | पधगसरि. | पधगरिस. |
| धगरिसप. | धपरिसग. | धपगसरि. | धपगरिस. |

( म. ध. वर्ज्य )

| | | | |
|---|---|---|---|
| (५) सरीगपनि. | सरीगनिप. | सरीपनिग. | सगपनिरि. |
| रिसगपनि. | रिसगनिप. | रिसपनिग. | गसपनिरि. |
| सगरिपनि. | सगरिनिप. | सपरिनिग. | सपगनिरि. |
| गसरिपनि. | गसरिनिप. | पसरिनिग. | पसगनिरि. |
| रिगसपनि. | रिगसनिप. | रिपसनिग. | गपसनिरि. |
| गरिसपनि. | गरिसनिप. | परिसनिग. | पगसनिरि. |
| सरीपगनि. | सरिनिपग. | सरिनिपग. | सगनिपरि. |
| रिसपगनि. | रिसनिगप. | रिसनिपग. | गसनिपरि. |
| सपरिगनि. | सनिरिगप. | सनिरिपग. | सनिगपरि. |
| पसरिगनि. | निसरिगप. | निसरिपग. | निसगपरि. |
| रिपसगनि. | रिनिसगप. | रिनिसपग. | गनिसपरि. |
| परिसगनि. | निरिसगप. | निरिसपग. | निगसपरि. |
| सगपरिनि. | सगनिरिप. | सपनिरिग. | सपनिगरि. |
| गसपरिनि. | गसनिरिप. | पसनिरिग. | पसनिगरि. |
| सपगरिनि. | सनिगरिप. | सनिपरिग. | सनिपगरि. |
| पसगरिनि. | निसगरिप. | निसपरिग. | निसपगरि. |
| गपसरिनि. | गनिसरिप. | पनिसरिग. | पनिसगरि. |
| पगसरिनि. | निगसरिप. | निपसरिग. | निपसगरि. |
| रिगपसनि. | रिगनिसप. | रिपनिसग. | गपनिसरि. |
| गरिपसनि. | गरिनिसप. | परिनिसग. | पगनिसरि. |
| रिपगसनि. | रिनिगसप. | रिनिपसग. | गनिपसरि. |
| परिगसनि. | निरिगसप. | निरिपसग. | निगपसरि. |
| गपरिसनि. | गनिरिसप. | पनिरिसग. | पनिगसरि. |
| पगरिसनि. | निगरिसप. | निपरिसग. | निपगसरि. |

( म, प, वर्ज्य. )

| | | | |
|---|---|---|---|
| रिगपनिस. | (६) सरिगधनि. | सरिगनिध. | सरिधनिग. |
| गरिपनिस. | रिसगधनि. | रिसगनिध. | रिसधनिग. |
| रिपगनिस. | सगरिधनि. | सगरिनिध. | सधरिनिग. |
| परिगनिस. | गसरिधनि. | गसरिनिध. | धसरिनिग. |
| गपरिनिस. | रिगसधनि. | रिगसनिध. | रिधसनिग. |
| पगरिनिस. | गरिसधनि. | गरिसनिध. | धरिसनिग. |
| रिगनिपस. | सरिधगनि. | सरिनिगध. | सरिनिधग. |
| गरिनिपस. | रिसधगनि. | रिसनिगध. | रिसनिधग. |
| रिनिगपस. | सधरिगनि. | सनिरिगध. | सनिरिधग. |
| निरिगपस. | धसरिगनि. | निसरिगध. | निसरिधग. |
| गनिरिपस. | रिधसगनि. | रिनिसगध. | रिनिसधग. |
| निगरिपस. | धरिसगनि. | निरिसगध. | निरिसधग. |
| रिपनिगस. | सगधरिनि. | सगनिरिध. | सधनिरिग. |
| परिनिगस. | गसधरिनि. | गसनिरिध. | धसनिरिग. |
| रिनिपगस. | सधगरिनि. | सनिगरिध. | सनिधरिग. |
| निरिपगस. | धसगरिनि. | निसगरिध. | निसधरिग. |
| पनिरिगस. | गधसरिनि. | गनिसरिध. | धनिसरिग. |
| निपरिगस. | धगसरिनि. | निगसरिध. | निधसरिग. |
| गपनिरिस. | रिगधसनि. | रिगनिसध. | रिधनिसग. |
| पगनिरिस. | गरिधसनि. | गरिनिसध. | धरिनिसग. |
| गनिपरिस. | रिधगसनि. | रिनिगसध. | रिनिधसग. |
| निगपरिस. | धरिगसनि. | निरिगसध. | निरिधसग. |
| पनिगरिस. | गधरिसनि. | गनिरिसध. | धनिरिसग. |
| निपगरिस. | धगरिसनि. | निगरिसध. | निधरिसग. |

( ग, नि, वर्ज्य. )

| | | | |
|---|---|---|---|
| सगधनिरि. | रिगधनिस. | (७) सरीमपध. | सरीमधप. |
| गसधनिरि. | गरिधनिस. | रिसमपध. | रिसमधप. |
| सधगनिरि. | रिधगनिस. | समरिपध. | समरिधप. |
| धसगनिरि. | धरिगनिस. | मसरिपध. | मसरिधप. |
| गधसनिरि. | गधरिनिस. | रिमसपध. | रिमसधप. |
| धगसनिरि. | धगरिनिस. | मरिसपध. | मरिसधप. |
| सगनिधरि. | रिगनिधस. | सरिपमध. | सरिधमप. |
| गसनिधरि. | गरिनिधस. | रिसपमध. | रिसधमप. |
| सनिगधरि. | रिनिगधस. | सपरिमध. | सधरिमप. |
| निसगधरि. | निरिगधस. | पसरिमध. | धसरिमप. |
| गनिसधरि. | गनिरिधस. | रिपसमध. | रिधसमप. |
| निगसधरि. | निगरिधस. | परिसमध. | धरिसमप. |
| सधनिगरि. | रिधनिगस. | समपरिध. | समधरिप. |
| धसनिगरि. | धरिनिगस. | मसपरिध. | मसधरिप. |
| सनिधगरि. | रिनिधगस. | सपमरिध. | सधमरिप. |
| निसधगरि. | निरिधगस. | पसमरिध. | धसमरिप. |
| धनिसगरि. | धनिरिगस. | मपसरिध. | मधसरिप. |
| निधसगरि. | मिधरिगस. | पमसरिध. | धमसरिप. |
| गधनिसरि. | गधनिरिस. | रिमपसध. | रिमधसप. |
| धगनिसरि. | धगनिरिस. | मरिपसध. | मरिधसप. |
| गनिधसरि. | गनिधरिस. | रिपमसध. | रिधमसप. |
| निगधसरि. | निगधरिस. | परिमसध. | धरिमसप. |
| धनिगसरि. | धनिगरिस. | मपरिसध. | मधरिसप. |
| निधगसरि. | निधगरिस. | पमरिसध. | धमरिसप. |

